## अथ पञ्चदशोऽध्यायः

### श्रीभगवानुवाच

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्। छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः।
अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥

न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा।
अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३ ॥

ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः।
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥

निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥

न तद्भासयते सूर्यो न शशाङ्को न पावकः। यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥

ममैवांशो जीवलोके जीवभूत सनातनः। मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः। गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च। अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥

उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम्। विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम्। यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥
गामाविश्य च भूतानि धारयाम्यहमोजसा। पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥
सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥
यो मामेवमसंमूढो जानाति पुरुषोत्तमम्। स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥
इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ। एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ २० ॥ ७२१ ॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

## अथ षोडशोऽध्यायः

### श्रीभगवानुवाच

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः। दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्। दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ॥ २ ॥

तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता। भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥
दम्भो दर्पोऽभिमानश्च क्रोध. पारुष्यमेव च। अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥
दैवी संपद्विमोक्षाय निबन्धायासुरी मता। मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥
द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च। दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥
प्रवृत्तिं च निवृत्तिं च जना न विदुरासुरा.। न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्। अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ८ ॥
एता दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धय.। प्रभवन्त्युग्रकर्माण क्षयाय जगतोऽहिताः ॥ ९ ॥
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः। मोहाद्गृहीत्वासद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥
चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः। कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः। ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ १२ ॥
इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्। इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि। ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४ ॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया। यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः॥१५॥
अनेकचित्तविभ्रान्ता मोहजालसमावृताः। प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥
आत्मसंभाविताः स्तब्धा धनमानमदान्विताः। यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः। मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥
तानहं द्विषतः क्रूरान्संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय ततो यान्त्यधमा गतिम् ॥ २० ॥

त्रिविधं नरकस्येदं द्वारं नाशनमात्मन.। कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥
एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः। आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥
यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः। न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ। ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥२४॥७४५॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्याय ॥ १६ ॥

## अथ सप्तदशोऽध्यायः

### अर्जुन उवाच

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः। तेषा निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥

### श्रीभगवानुवाच

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा। सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥
सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत। श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥
यजन्ते सात्त्विका देवान्यक्षरक्षांसि राजसाः। प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥
अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः। दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥
कर्षयन्तः शरीरस्थं भूतग्राममचेतसः। मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥
आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रिय.। यज्ञस्तपस्तथा दानं तेषा भेदमिमं शृणु ॥ ७ ॥

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः। रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ ८ ॥
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः। आहारा राजसस्येष्टा दुःखशोकामयप्रदा ॥ ९ ॥
यातयामं गतरसं पूति पर्युषितं च यत्। उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥
अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते। यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥
अभिसंधाय तु फलं दम्भार्थमपि चैव यत्। इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२ ॥
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम्। श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्। ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्। स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः। भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥
श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः। अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥
सत्कारमानपूजार्थं तपो दम्भेन चैव यत्। क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥
मूढग्राहेणात्मनो यत्पीडया क्रियते तपः। परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥
दातव्यमिति यद्दानं दीयतेऽनुपकारिणे। देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः। दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ २१ ॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते। असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥
ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः। ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः। प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥
तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः। दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥

सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते। प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते। कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७ ॥
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्। असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥ ७७३ ॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्याय ॥ १७ ॥

## अथाष्टादशोऽध्यायः

### अर्जुन उवाच

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम्। त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥

### श्रीभगवानुवाच

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः। सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥
त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः। यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥
निश्चयं शृणु मे तत्र त्यागे भरतसत्तम। त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ४ ॥
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च। कर्तव्यानीति मे पार्थ निश्चित मतमुत्तमम् ॥ ६ ॥
नियतस्य तु संन्यासः कर्मणो नोपपद्यते। मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत्। स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८ ॥

कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन। सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥
न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते। त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः। यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥
अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥
पञ्चैतानि महाबाहो कारणानि निबोध मे। सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्। विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४ ॥
शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः। न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥
तत्रैवं सति कर्तारमात्मानं केवलं तु यः। पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते। हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥
ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना। करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥
ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः। प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥
सर्वभूतेषु येनैकं भावमव्ययमीक्षते। अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २० ॥
पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान्। वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥
यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम्। अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥
नियतं सङ्गरहितमरागद्वेषतः कृतम्। अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥
यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः। क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४ ॥
अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्। मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ २५ ॥
मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः। सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥
रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः। हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः। विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु। प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ २९ ॥
प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये। बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३० ॥
यया धर्ममधर्मं च कार्यं चाकार्यमेव च। अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥
अधर्मं धर्ममिति या मन्यते तमसावृता। सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२ ॥
धृत्या यथा धारयते मनः प्राणेन्द्रियक्रियाः। योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥
यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन। प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४ ॥
यया स्वप्नं भयं शोकं विषादं मदमेव च। न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ३५ ॥
सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ। अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥
यत्तदग्रे विषमिव परिणामेऽमृतोपमम्। तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥
विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम्। परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः। निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप। कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च। ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्। दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३ ॥
कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्। परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः। स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्। स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७ ॥
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्। सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः। नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे। समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५० ॥
बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च। शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥
विविक्तसेवी लघ्वाशी यतवाक्कायमानसः। ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥
अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम्। विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥
भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥
सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः। मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥
चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः। बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि। अथ चेत्त्वमहंकारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८ ॥
यदहंकारमाश्रित्य न योत्स्य इति मन्यसे। मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९ ॥
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा। कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६० ॥
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥
तमेव शरणं गच्छ सर्वभावेन भारत। तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया। विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥
सर्वगुह्यतमं भूयः शृणु मे परमं वचः। इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४ ॥
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥ ६६॥
इदं ते नातपस्काय नाभक्ताय कदाचन। न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति॥ ६७॥
य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति। भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः॥ ६८॥
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः। भविता न च मे तस्मादन्यः प्रियतरो भुवि॥ ६९॥
अध्येष्यते च य इमं धर्म्यं संवादमावयोः। ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः॥ ७०॥
श्रद्धावाननसूयश्च शृणुयादपि यो नरः। सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम्॥ ७१॥
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा। कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय॥ ७२॥

अर्जुन उवाच

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत। स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव॥ ७३॥

संजय उवाच

इत्यहं वासुदेवस्य पार्थस्य च महात्मन। संवादमिममश्रौषमद्भुतं रोमहर्षणम्॥ ७४॥
व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम्। योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम्॥ ७५॥
राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम्। केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः॥ ७६॥
तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः। विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः॥ ७७॥
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः। तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥ ७८॥ ८५१॥

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः॥ १८॥

---

## गीताप्रशंसा

वैशं०- गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः।
(अ ४३) या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता ॥ ८५२ ॥
सर्वशास्त्रमयी गीता सर्वदेवमयो हरिः।
सर्वतीर्थमयी गङ्गा सर्ववेदमयो मनुः ॥ ८५३ ॥
गीता गङ्गा च गायत्री गोविन्देति हृदि स्थिते।
चतुर्गकारसंयुक्ते पुनर्जन्म न विद्यते ॥ ८५४ ॥
भारतामृतसर्वस्वं गीताया मथितस्य च।
सारमुद्धृत्य कृष्णेन अर्जुनस्य मुखे हुतम् ॥ ८५५ ॥
सञ्जय०-ततो धनञ्जयं दृष्ट्वा बाणगाण्डीवधारिणम्।
पुनरेव महानादं व्यसृजन्त महारथाः ॥ ८५६ ॥
पाण्डवाः सोमकाश्चैव ये चैषामनुयायिनः।
दध्मुश्च मुदिता शङ्खान् वीराः सागरसम्भवान् ॥ ८५७ ॥
तथा देवाः सगन्धर्वाः पितरश्च जनाधिप।
सिद्धचारणसङ्घाश्च समीयुस्ते दिदृक्षया ॥ ८५८ ॥
ऋषयश्च महाभागाः पुरस्कृत्य शतक्रतुम्।
समीयुस्तत्र सहिता द्रष्टुं तद्वैशसं महत् ॥ ८५९ ॥

### युधिष्ठिरकृतं भीष्मादिसम्माननम्

ततो युधिष्ठिरो दृष्ट्वा युद्धाय समवस्थिते।
ते सेने सागरप्रख्ये मुहुः प्रचलिते नृप ॥ ८६० ॥
विमुच्य कवचं वीरो निक्षिप्य च वरायुधम्।
अवरुह्य रथात्क्षिप्रं पद्भ्यामेव कृताञ्जलिः ॥ ८६१ ॥
पितामहमभिप्रेक्ष्य धर्मराजो युधिष्ठिरः।
वाग्यतः प्रययौ येन प्राङ्मुखो रिपुवाहिनीम् ॥ ८६२ ॥
तं प्रयान्तमभिप्रेक्ष्य कुन्तीपुत्रो धनञ्जयः।
अवतीर्य रथात्तूर्णं भ्रातृभिः सहितोऽन्वयात् ॥ ८६३ ॥

वासुदेवश्च भगवान् पृष्ठतोऽनुजगाम तम्।
तथा मुख्याश्च राजानस्तच्चित्ता जग्मुरुत्सुकाः॥ ८६४ ॥

अर्जुन०- किं ते व्यवसितं राजन् यदस्मानपहाय वै।
पद्भ्यामेव प्रयातोऽसि प्राङ्मुखो रिपुवाहिनीम्॥ ८६५ ॥

भीम०- क्व गमिष्यसि राजेन्द्र निक्षिप्तकवचायुधः।
दंशितेष्वरिसैन्येषु भ्रातॄनुत्सृज्य पार्थिव॥ ८६६ ॥

नकुल०- एवं गते त्वयि ज्येष्ठे मम भ्रातरि भारत।
भीर्मे दुनोति हृदयं ब्रूहि गन्ता भवान् क्व नु॥ ८६७ ॥

सहदे०- अस्मिन् रणसमूहे वै वर्तमाने महाभये।
उत्सृज्य क्व नु गन्ताऽसि शत्रूनभिमुखो नृप॥ ८६८ ॥

सञ्जय०- एवमाभाष्यमाणोऽपि भ्रातृभिः कुरुनन्दनः।
नोवाच वाग्यतः किञ्चिद्गच्छत्येव युधिष्ठिरः॥ ८६९ ॥

तानुवाच महाप्राज्ञो वासुदेवो महामनाः।
अभिप्रायोऽस्य विज्ञातो मयेति प्रहसन्निव॥ ८७० ॥

एष भीष्मं तथा द्रोणं गौतमं शल्यमेव च।
अनुमान्य गुरून् सर्वान् योत्स्यते पार्थिवोऽरिभिः॥ ८७१ ॥

श्रूयते हि पुराकल्पे गुरूननुमान्य यः।
युध्यते स भवेद्व्यक्तमपध्यातो महत्तरैः॥ ८७२ ॥

सञ्जय०- सोऽवगाह्य चमूं शत्रोः शरशक्तिसमाकुलाम्।
भीष्ममेवाऽभ्ययात्तूर्णं भ्रातृभिः परिवारितः॥ ८७३ ॥

तमुवाच ततः पादौ कराभ्यां पीड्य पाण्डवः।
भीष्मं शान्तनवं राजा युद्धाय समुपस्थितम्॥ ८७४ ॥

आमन्त्रये त्वां दुर्धर्ष त्वया योत्स्यामहे सह।
अनुजानीहि मां तात आशिषश्च प्रयोजय॥ ८७५ ॥

भीष्म०- यद्येवं नाभिगच्छेथा युधि मां पृथिवीपते।
शपेयं त्वां महाराज पराभावाय भारत॥ ८७६ ॥

प्रीतोऽहं पुत्र युध्यस्व जयमाप्नुहि पाण्डव ॥ ८७७ ॥
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्य महाराज बद्धोस्म्यर्थेन कौरवैः ॥ ८७८ ॥
अतस्त्वां क्लीववद्वाक्यं ब्रवीमि कुरुनन्दन ।
भृतोऽस्म्यर्थेन कौरव्य युद्धादन्यत्किमिच्छसि ॥ ८७९ ॥

युधि०– मन्त्रयस्व महाबाहो हितैषी मम नित्यशः ।
युध्यस्व कौरवस्यार्थे ममैष सततं वरः ॥ ८८० ॥

भीष्म०–राजन्किमत्र साह्यं ते करोमि कुरुनन्दन ।
कामं योत्स्ये परस्यार्थे ब्रूहि यत्ते विवक्षितम् ॥ ८८१ ॥

युधि०– कथं जयेयं सङ्ग्रामे भवन्तमपराजितम् ।
एतन्मे मन्त्रय हितं यदि श्रेयः प्रपश्यसि ॥ ८८२ ॥

भीष्म०–न स तं तात पश्यामि समरे यो जयेत माम् ।
न तावन्मृत्युकालोऽपि पुनरागमनं कुरु ॥ ८८३ ॥

सञ्जय०–ततो युधिष्ठिरो वाक्यं भीष्मस्य कुरुनन्दन ।
शिरसा प्रतिजग्राह भूयस्तमभिवाद्य च ॥ ८८४ ॥
प्रायात् पुनर्महाबाहुराचार्यस्य रथं प्रति ।
पश्यतां सर्वसैन्याना मध्येन भ्रातृभिः सह ॥ ८८५ ॥
स द्रोणमभिवाद्याथ कृत्वा चाभिप्रदक्षिणम् ।
उवाच राजा दुर्धर्षमात्मनिःश्रेयसं वचः ॥ ८८६ ॥

युधि०– जयमाशास्व मे ब्रह्मन् मन्त्रयस्व च मद्धितम् ॥ ८८७ ॥

द्रोण०– ध्रुवस्ते विजयो राजन् यस्य मन्त्री हरिस्तव ।
युद्धयस्व गच्छ कौन्तेय पृच्छ मां किं ब्रवीमि ते ॥ ८८८ ॥

युधि०– पृच्छामि त्वां द्विजश्रेष्ठ शृणु यन्मेऽभिकाङ्क्षितम् ।
कथं जयेयं सङ्ग्रामे भवन्तमपराजितम् ॥ ८८९ ॥

द्रोण०– न शत्रुं तात पश्यामि यो मां हन्याद्रथे स्थितम् ।
युध्यमानं सुसंरब्धं शरवर्षौघवर्षिणम् ॥ ८९० ॥

ऋते प्रायगतं राजन्न्यस्तशस्त्रमचेतनम्।
हन्यान्मां युधि योधानां सत्यमेतद् ब्रवीमि ते ॥ ८९१ ॥
शस्त्रं चाह रणे जह्यां श्रुत्वा तु महदप्रियम्।
श्रद्धेयवाक्यात्पुरुषादेतत्सत्यं ब्रवीमि ते ॥ ८९२ ॥
सञ्जय०-एतच्छ्रुत्वा महाराज भारद्वाजस्य धीमतः।
अनुमान्य तमाचार्यं प्रायाच्छारद्वतं प्रति ॥ ८९३ ॥
सोऽभिवाद्य कृपं राजा कृत्वा चापि प्रदक्षिणम्।
उवाच दुर्धर्षतमं वाक्यं वाक्यविदां वरः ॥ ८९४ ॥
अनुमानये त्वां योत्स्येऽहं गुरो विगतकल्मषः।
इत्युक्त्वा व्यथितो राजा नोवाच गतचेतनः ॥ ८९५ ॥
तं गौतमः प्रत्युवाच विज्ञायास्य विवक्षितम्।
अवध्योऽहं महीपाल युद्ध्यस्व जयमाप्नुहि ॥ ८९६ ॥
प्रीतस्तेऽभिगमेनाहं जयं तव नराधिप।
आशासिष्ये सदोत्थाय सत्यमेतद् ब्रवीमि ते ॥ ८९७ ॥
एतच्छ्रुत्वा महाराज गौतमस्य विशांपते।
अनुमान्य कृपं राजा प्रययौ येन मद्रराट् ॥ ८९८ ॥
स शल्यमभिवाद्याथ कृत्वा चाभिप्रदक्षिणम्।
उवाच राजा दुर्धर्षमात्मनिःश्रेयसं वचः ॥ ८९९ ॥
मंत्रयस्व महाराज नित्यं मद्धितमुत्तमम्।
सूतपुत्रस्य संग्रामे कार्यस्तेजोवधस्त्वया ॥ ९०० ॥
शल्य०- सम्पत्स्यत्येष ते कामः कुन्तीपुत्र यथेप्सितम्।
गच्छ युध्यस्व विश्रब्धः प्रतिजाने वचस्तव ॥ ९०१ ॥
सञ्जय०-अनुमान्याथ कौन्तेयो मातुलं मद्रकेश्वरम्।
निर्जगाम महासैन्याद् भ्रातृभिः परिवारितः ॥ ९०२ ॥
वासुदेवस्तु राधेयमाहवेऽभिजगाम वै।
तत एनमुवाचेदं पाण्डवार्थे गदाग्रजः ॥ ९०३ ॥

श्रुत मे कर्ण भीष्मस्य द्वेषात्किल न योत्स्यसे।
अस्मान्वरय राधेय यावद्भीष्मो न हन्यते ॥ ९०४ ॥

हते तु भीष्मे राधेय पुनरेष्यसि संयुगम्।
धार्तराष्ट्रस्य साहाय्यं यदि पश्यसि चेत्समम् ॥ ९०५ ॥

कर्ण०- न विप्रियं करिष्यामि धार्तराष्ट्रस्य केशव।
त्यक्तप्राणं हि मा विद्धि दुर्योधनहितैषिणम् ॥ ९०६ ॥

सञ्जय०-तच्छ्रुत्वा वचनं कृष्ण. संन्यवर्तत भारत।
युधिष्ठिरपुरोगैश्च पाण्डवै. सह सङ्गत. ॥ ९०७ ॥

## युयुत्सोः कौरवपक्षत्यागः, प्रथमदिनयुद्धम्, श्वेतवधः

अथ सैन्यस्य मध्ये तु प्राक्रोशत्पाडवाग्रज.।
योऽस्मान्वृणोति तमहं वरये साह्यकारणात् ॥ ९०८ ॥

अथ तान् समभिप्रेक्ष्य युयुत्सुरिदमब्रवीत्।
अहं योत्स्यामि भवत. संयुगे धृतराष्ट्रजान् ॥ ९०९ ॥

युधि०- एह्येहि सर्वे योत्स्यामस्तव भ्रातृनपण्डितान्।
त्वयि पिण्डश्च तन्तुश्च धृतराष्ट्रस्य दृश्यते ॥ ९१० ॥

सञ्जय०-ततो युयुत्सुः कौरव्यान् परित्यज्य सुतांस्तव।
जगाम पाण्डुपुत्राणा सेनां विश्राव्य दुन्दुभिम् ॥ ९११ ॥

ततो युधिष्ठिरो राजा संप्रहृष्टः सहानुज.।
जग्राह कवचं भूयो दीप्तिमत्कनकोज्ज्वलम् ॥
प्रत्यपद्यन्त ते सर्वे स्वरथान् पुरुषर्षभा. ॥ ९१२ ॥

गौरवं पाण्डुपुत्राणा मान्यान्मानयतां च तान्।
दृष्ट्वा महीक्षितस्तत्र पूजयाञ्चक्रिरे भृशम् ॥ ९१३ ॥

सौहृदं च कृपां चैव प्राप्तकालं महात्मनाम्।
दयां च ज्ञातिषु परां कथयांचक्रिरे नृपा ॥ ९१४ ॥

साधु साध्विति सर्वत्र निश्चेरुः स्तुतिसंहिता.।
वाचः पुण्याः कीर्तिमतां मनोहृदयहर्षणा. ॥ ९१५ ॥

म्लेच्छाश्चार्याश्च ये तत्र ददृशुः शुश्रुवुस्तथा।
वृत्तं तत्पाण्डुपुत्राणां रुरुदुस्ते सगद्गदाः॥ ९१६॥

(अ. ४४) एवं व्युढेष्वनीकेषु मामकेष्वितरेषु च।
धृतरा०- के पूर्वं प्राहरंस्तत्र कुरवः पाण्डवा नु किं॥ ९१७॥

सञ्जय०-भ्रातृभिः सहितो राजन् पुत्रो दुःशासनस्तव।
भीष्मं प्रमुखतः कृत्वा प्रययौ सह सेनया॥ ९१८॥

तथैव पाण्डवाः सर्वे भीमसेनपुरोगमाः।
भीष्मेण युद्धमिच्छन्तः प्रययुर्हृष्टमानसाः॥ ९१९॥

क्ष्वेडाः किलकिलाशब्दाः क्रकचा गोविषाणिकाः।
भेरीमृदङ्गमुरजा हयकुंजरनिःस्वना॥ ९२०॥

उभयोः सेनयोर्ह्यासंस्ततस्तेऽस्मान् समाद्रवन्।
वयं तान् प्रतिनर्दतस्तदासीत्तुमुलं महत्॥ ९२१॥

तस्मिन् प्रथमसङ्ग्रामे भीमज्यातलनिःस्वने।
तावकानां परेषां च नासीत्कश्चित्पराङ्मुखः॥ ९२२॥

लाघवं द्रोणशिष्याणामपश्यं भरतर्षभ।
निमित्तवेधिनां चैव शरानुत्सृजतां भृशम्॥ ९२३॥

तस्मिंस्तु तुमुले युद्धे वर्तमाने महाभये।
अति सर्वाण्यनीकानि पिता तेऽभिव्यरोचत॥ ९२४॥

(अ. ४८) तत्राकरोद्रथोपस्थान् शून्यान् शान्तनवो बहून्।
समावृणोच्छरैरर्कमर्कतुल्यप्रतापवान्॥ ९२५॥

तेनाजौ प्रेषिता राजन् शराः शतसहस्रशः।
शिरांसि पातयामासुर्वीराणां शतशो रणे॥ ९२६॥

तस्मिन्नत्याकुले युद्धे दारुणे लोमहर्षणे।
पिता पुत्रं च समरे नाभिजानाति कश्चन॥ ९२७॥

चक्रे भग्ने युगे छिन्ने एकधुर्ये हये हतः।
आक्षिप्तः स्यन्दनाद्वीरः ससारथिरजिह्मगैः॥ ९२८॥

एवं च समरे सर्वे वीराश्च विरथीकृताः।
तेन तेन स्म दृश्यन्ते धावमानाः समन्ततः॥ ९२९॥

गजो हतः शिरश्छिन्नं मर्म भिन्नं हयो हतः।
अहतः कोऽपि नैवासीद्भीष्मे निघ्नति शात्रवान्॥ ९३०॥

श्वेतः कुरूणामकरोत् क्षयं तस्मिन् महाहवे।
राजपुत्रान् रथोदारानवधीच्छतसंघशः॥ ९३१॥

ततः शरं मृत्युसमं भारसाधनमुत्तमम्।
विकृष्य बलवान् भीष्मः समाधत्त दुरासदम्॥ ९३२॥

स तस्य कवचं भित्त्वा हृदयं चामितौजसः।
जगाम धरणीं बाणो महाशनिरिव ज्वलन्॥ ९३३॥

अस्तं गच्छन् यथादित्यः प्रभामादाय सत्वरः।
एवं जीवितमादाय श्वेतदेहाज्जगाम ह॥ ९३४॥

(अ. ४९) ततो भीष्मः शान्तनवो नित्यं मण्डलकार्मुकः।
मुमोच बाणान् दीप्ताग्रानहीनाशीविषानिव॥ ९३५॥

शरैरेकायनीकुर्वन् दिशः सर्वा यतव्रतः।
जघान पाण्डवरथानादिश्यादिश्य भारत॥ ९३६॥

ततः सैन्येषु भग्नेषु मथितेषु च सर्वशः।
प्राप्ते चास्तं दिनकरे न प्राज्ञायत किञ्चन॥ ९३७॥

भीष्मं च समुदीर्यन्त दृष्ट्वा पार्था महाहवे।
अवहारमकुर्वन्त सैन्यानां भरतर्षभ॥ ९३८॥

(अ. ५०) कृतेऽवहारे सैन्यानां प्रथमे भरतर्षभ।
भीष्मे च युद्धसंरब्धे हृष्टे दुर्योधने तथा॥ ९३९॥

धर्मराजस्ततस्तूर्णमभिगम्य जनार्दनम्।
भ्रातृभिः सहितः सर्वैः सर्वैश्चैव जनेश्वरैः॥ ९४०॥

शुचा परमया युक्तश्चिन्तयानः पराजयम्।
वार्ष्णेयमब्रवीद्राजन् दृष्ट्वा भीष्मस्य विक्रमम्॥ ९४१॥

कृष्ण पश्य महेष्वासं भीष्मं भीमपराक्रमम् ।
शरैर्दहन्तं सैन्यं मे ग्रीष्मे कक्षमिवानलम् ॥ ९४२ ॥

शक्यो जेतुं यमः क्रुद्धो वज्रपाणिश्च संयुगे ।
न तु भीष्मो महातेजाः शक्यो जेतुं महाबलः ॥ ९४३ ॥

वनं यास्यामि वार्ष्णेय श्रेयो मे तत्र जीवितुम् ।
न त्वेतान् पृथिवीपालान् दातुं भीष्माय मृत्यवे ॥ ९४४ ॥

किं नु कृत्वा हितं मे स्याद् ब्रूहि माधव मा चिरम् ।
मध्यस्थमिव पश्यामि समरे सव्यसाचिनम् ॥ ९४५ ॥

एको भीमः परं शक्त्या युध्यत्येव महाभुजः ।
नालमेष क्षयं कर्तुं परसैन्यस्य मारिष ॥ ९४६ ॥

एकोऽस्त्रवित्सखा तेऽयं सोऽप्यस्मान्समुपेक्षते ।
निर्दह्यमानान् भीष्मेण द्रोणेन च महात्मना ॥ ९४७ ॥

स त्वं पश्य महाभाग योगेश्वर महारथम् ।
भीष्मं यः शमयेत्सङ्ख्ये दावाग्निं जलदो यथा ॥ ९४८ ॥

तव प्रसादाद्गोविन्द पाण्डवा निहतद्विषः ।
स्वराज्यमनुसंप्राप्ता मोदिष्यन्ते सबान्धवाः ॥ ९४९ ॥

शोकार्तं तमथो ज्ञात्वा दुःखोपहतचेतसम् ।
अब्रवीत्तत्र गोविन्दो हर्षयन् सर्वपाण्डवान् ॥ ९५० ॥

मा शुचो भरतश्रेष्ठ न त्वं शोचितुमर्हसि ।
यस्य ते भ्रातरः शूराः सर्वलोकेषु धन्विनः ॥ ९५१ ॥

अहं च प्रियकृद्राजन् सात्यकिश्च महायशाः ।
विराटद्रुपदौ चेमौ धृष्टद्युम्नश्च पार्षतः ॥ ९५२ ॥

तथैव सबलाश्चेमे राजानो राजसत्तम ।
त्वत्प्रसादं प्रतीक्षन्ते त्वद्भक्ताश्च विशांपते ॥ ९५३ ॥

एष ते पार्षतो नित्यं हितकामः प्रिये रतः ।
सैनापत्यमनुप्राप्तो धृष्टद्युम्नो महाबलः ॥

शिखण्डी च महाबाहो भीष्मस्य निधन किल ॥ ९५४ ॥
एतच्छ्रुत्वा ततो धर्मो धृष्टद्युम्नं महारथम् ।
अब्रवीत्समितौ तस्या वासुदेवस्य शृण्वत· ॥ ९५५ ॥
धृष्टद्युम्न निबोधेदं यत्त्वां वक्ष्यामि मारिष ॥ ९५६ ॥
भवान्सेनापतिर्मह्यं वासुदेवेन संमित· ।
स त्वं पुरुषशार्दूल विक्रम्य जहि कौरवान् ॥ ९५७ ॥
तत उद्धर्षयन् सर्वान् धृष्टद्युम्नोऽभ्यभाषत ।
अहं द्रोणान्तकः पार्थ विहित· शंभुना पुरा ॥ ९५८ ॥
रणे भीष्मं कृपं द्रोणं तथा शल्यं जयद्रथम् ।
सर्वानद्य रणे दृप्तान् प्रतियोत्स्यामि पार्थिव ॥ ९५९ ॥
सञ्जय०—व्यूहः क्रौञ्चारुणो नाम सर्वशत्रुनिवर्हणः ।
तं यथावत् प्रतिव्यूहं व्यूह्य भारत पाण्डवा· ।
सूर्योदयं त इच्छन्त· स्थिता युद्धाय दंशिताः ॥ ९६० ॥

## द्वितीयदिनयुद्धम् , कलिङ्गराजवधः

(अ ५१) ततो भीष्मश्च द्रोणश्च तव पुत्राश्च मारिष ।
अव्यूहन्त महाव्यूहं पाण्डूनां प्रतिबाधकम् ॥ ९६१ ॥
ततस्ते तावकाः सर्वे हृष्टा युद्धाय भारत ।
दध्मु शङ्खान् मुदा युक्ताः सिंहनादांस्तथोन्नदन् ॥ ९६२ ॥
(अ. ५२) ते मनः क्रूरमाधाय समभित्यक्तजीविता· ।
पाण्डवानभ्यवर्तन्त सर्व एवोच्छ्रितध्वजाः ॥ ९६३ ॥
ततो युद्धं समभवत्तुमुलं लोमहर्षणम् ।
तावकानां परेषां च व्यतिषक्तरथद्विपम् ॥ ९६४ ॥
तथा प्रवृत्ते संग्रामे धनुरुद्यम्य दंशितः
ववर्ष शरवर्षाणि वृद्धः कुरुपितामहः ॥ ९६५ ॥
अभिद्यत ततो व्यूहस्तस्मिन् वीरसमागमे ।
सर्वेषामेव सैन्यानामासीद्व्यतिकरो महान् ॥ ९६६ ॥

अर्जुनस्तु नरव्याघ्रो दृष्ट्वा भीष्मं महारथम् ।
प्रायाच्छरणदः शीघ्रं सुहृदां हर्षवर्धनः ॥ ९६७ ॥

ततो भीष्मो महाराज सर्वलोकमहारथ ।
अर्जुनं सप्तसप्तत्या नाराचानां समाचिनोत् ॥ ९६८ ॥

तत· शरसहस्रेण सुप्रयुक्तेन पाण्डवः ।
अर्जुन· समरश्लाघी भीष्मस्यावारयद्दिशः ॥ ९६९ ॥

तत· क्रुद्धो महाराज भीष्मः प्रहरता वरः ।
वासुदेवं त्रिभिर्बाणैराजघान स्तनान्तरे ॥ ९७० ॥

ततोऽर्जुनो भृशं क्रुद्धो निर्विद्धं प्रेक्ष्य माधवम् ।
सारथिं कुरुवृद्धस्य निर्बिभेद शितैः शरैः ॥ ९७१ ॥

न तयोर्विवरं कश्चिद्रणे पश्यति भारत ।
धर्मे स्थितस्य हि यथा न कश्चिद्वृजिनं क्वचित् ॥ ९७२ ॥

उभौ च शरजालेन तावदृश्यौ बभूवतुः ।
प्रकाशौ च पुनस्तूर्णं बभूवतुरुभौ रणे ॥ ९७३ ॥

तत्र देवा· सगन्धर्वाश्चारणाश्चर्षिभिः सह ।
अन्योन्यं प्रत्यभाषन्त तयोर्दृष्ट्वा पराक्रमम् ॥ ९७४ ॥

नैतादृशानि युद्धानि भविष्यन्ति कथञ्चन ।
न हि शक्यो रणे जेतुं भीष्मः पार्थेन धीमता ॥ ९७५ ॥

तथैव पाण्डवं युद्धे देवैरपि दुरासदम् ।
न विजेतुं रणे भीष्म उत्सहेत धनुर्धरम् ॥ ९७६ ॥

वर्तमाने तथा घोरे तस्मिन् युद्धे सुदारुणे ।
(अ. ५४) भीमसेन· कलिङ्गानामाच्छद्भारत वाहिनीम् ॥ ९७७ ॥

ततः श्रुतायु सङ्क्रुद्धो राज्ञा केतुमता सह ।
रथैरनेकसाहस्रै कलिङ्गानां नराधिपः ॥ ९७८ ॥

भीमसेनं रणे राजन् समन्तात् पर्यवारयत् ॥ ९७९ ॥

ततो भीमो महाबाहुर्विधुन्वन् रुचिरं धनुः।
योधयामास कालिङ्गं स्वबाहुबलमाश्रित. ॥ ९८० ॥

तत. श्रुतायुर्बलवान् भीमाय निशितान् शरान्।
प्रेषयामास संक्रुद्धो दर्शयन् पाणिलाघवम् ॥ ९८१ ॥

स कार्मुकवरोत्सृष्टैर्नवभिर्निशितै. शरै.।
समाहतो महाराज कालिङ्गेन महात्मना ॥
संचुक्रुशे भृशं भीमो दण्डाहत इवोरग. ॥ ९८२ ॥

क्रुद्धश्च चापमायम्य बलवद्बलिनां वरः।
कालिङ्गमवधीत्पार्थो भीम सप्तभिरायसै. ॥ ९८३ ॥

तत. पुनरमेयात्मा नाराचैर्निशितैस्त्रिभिः।
केतुमन्तं रणे भीमोऽगमयद्यमसादनम् ॥ ९८४ ॥

ततः शक्तिगदाखड्गतोमरर्ष्टिपरश्वधैः।
कलिङ्गाश्च ततो राजन् भीमसेनमवाकिरन् ॥ ९८५ ॥

सन्निवार्य स तां घोरा शरवृष्टिं समुत्थिताम्।
गदामादाय तरसा सन्निपत्य महाबलः ॥ ९८६ ॥

भीमः सप्तशतान् वीराननयद्यमसादनम्।
पुनश्चैव द्विसाहस्रान् कलिङ्गानरिमर्दनः ॥ ९८७ ॥

प्राहिणोन्मृत्युलोकाय तदद्भुतमिवाभवत् ॥ ९८८ ॥
भीमसेनं तथा दृष्ट्वा प्राक्रोशंस्तावका नृप।
कालोऽयं भीमरूपेण कलिङ्गै. सह युध्यते ॥ ९८९ ॥

ततः शान्तनवो भीष्मः श्रुत्वा तं निनदं रणे।
अभ्ययात्त्वरितो भीमं व्यूढानीकः समन्तत ॥ ९९० ॥

सात्यकोऽपि ततस्तूर्णं भीमस्य प्रियकाम्यया।
गाङ्गेयसारथिं तूर्ण पातयामास सायकैः ॥ ९९१ ॥

भीष्मस्तु निहते तस्मिन् सारथौ रथिनां वरः।
वातायमानैस्तैरश्वैरपनीतो रणाजिरात् ॥ ९९२ ॥

(अ. ५५) गतपूर्वाह्णभूयिष्ठे तस्मिन्नहनि भारत।
रथनागाश्वपत्तीनां सादिनां च महाक्षये॥ ९९३॥
लक्ष्मणस्तव पौत्रस्तु सौभद्रं समवस्थितम्।
अभ्यवर्तत संहृष्टस्ततो युद्धमवर्तत॥ ९९४॥
तौ तत्र समरे युक्तौ कृतप्रतिकृतैषिणौ।
अन्योन्यं विशिखैस्तीक्ष्णैर्जघ्नतुः पुरुषर्षभौ॥ ९९५॥
ततो दुर्योधनो राजा दृष्ट्वा पुत्रं महारथम्।
पीडितं तव पौत्रेण प्रायात्तत्र प्रजेश्वरः॥ ९९६॥
सौभद्रमथ संसक्तं दृष्ट्वा तत्र धनञ्जयः।
अभिदुद्राव वेगेन त्रातुकाम॰ स्वमात्मजम्॥ ९९७॥
तत॰ सरथनागाश्वा भीष्मद्रोणपुरोगमाः।
अभ्यवर्तन्त राजानः सहिता॰ सव्यसाचिनम्॥ ९९८॥
तानि नागसहस्राणि भूमिपालशतानि च।
तस्य बाणपथं प्राप्य नाभ्यवर्तन्त सर्वशः॥ ९९९॥
हयारोहा हयांस्त्यक्त्वा गजारोहाश्च दन्तिनः।
अर्जुनस्य भयाद्राजन् समन्ताद्विप्रदुद्रुवुः॥ १०००॥
यो यो हि समरे पार्थं प्रत्युद्याति विशांपते।
स संख्ये विशिखैस्तीक्ष्णै॰ परलोकाय नीयते॥ १॥
तत् प्रभग्नं बलं दृष्ट्वा पिता देवव्रतस्तव।
अब्रवीत् समरे शूरं भारद्वाज स्मयन्निव॥ २॥
न ह्येष समरे शक्यो विजेतुं हि कथञ्चन।
यथास्य दृश्यते रूपं कालान्तकयमोपमम्॥ ३॥
न निवर्तयितुं चापि शक्येयं महती चमूः।
अन्योन्यप्रेक्षया पश्य द्रवतीयं वरूथिनी॥ ४॥
एष चास्तं गिरिश्रेष्ठं भानुमान् प्रतिपद्यते।
श्रान्ता भीताश्च नो योधा न योत्स्यन्ति कथञ्चन॥ ५॥

एवमुक्त्वा ततो भीष्मो द्रोणमाचार्यसत्तमम्।
अवहारमथो चक्रे तावकानां महारथ॥ ६॥

ततोऽवहार सैन्यानां तव तेषां च भारत।
अस्तं गच्छति सूर्येऽभूत् सन्ध्याकाले च वर्तति॥ ७॥

## तृतीयदिनयुद्धम्

(अ. ५६) प्रभातायां च शर्वर्यां भीष्म शान्तनवस्तदा।
अनीकान्यनुसंयाने व्यादिदेशाथ भारत॥ ८॥

गारुडं च महाव्यूहं चक्रे शान्तनवस्तदा।
व्यूढ दृष्ट्वा तु तत् सैन्यं सव्यसाची परंतपः॥ ९॥

धृष्टद्युम्नेन सहित प्रत्यव्यूहत संयुगे।
अर्धचन्द्रेण व्यूहेन व्यूहं तमतिदारुणम्॥ १०१०॥

(अ. ५७) ततो व्यूढेष्वनीकेषु तावकेषु परेषु च।
धनञ्जयो रथानीकमवधीत् तव भारत॥ ११॥

(अ. ५८) ततस्ते पार्थिवा क्रुद्धाः फाल्गुनं वीक्ष्य संयुगे।
रथैरनेकसाहस्रैः समन्तात् पर्यवारयन्॥ १२॥

अर्जुनस्तु ततः क्रुद्धस्तव सैन्यं विशांपते।
ववर्ष शरवर्षेण धाराभिरिव तोयदः॥ १३॥

वध्यमान ततस्तत्र शरै पार्थस्य संयुगे।
दुद्राव कौरवं सैन्यं विषादभयकंपितम्॥ १४॥

ततो दुर्योधनो राजा समाश्वस्य विशांपते।
न्यवर्तयत तत् सैन्यं द्रवमाणं समंततः॥ १५॥

सन्निवृत्तांस्ततस्तांस्तु दृष्ट्वा राजा सुयोधनः।
अब्रवीत् त्वरितो गत्वा भीष्मं शान्तनवं वचः॥ १६॥

नानुरूपमहं मन्ये त्वयि जीवति कौरव।
द्रोणे चास्त्रविदां श्रेष्ठे द्रवते यद्वरूथिनी॥ १७॥

(अ. ५२) त्वत्कृते चैव कर्णोऽपि न्यस्तशस्त्रो विशांपते ।
न युध्यति रणे पार्थ हितकामः सदा मम ॥ १८ ॥

(अ. ५८) अनुग्राह्याः पाण्डुसुतास्तव नूनं पितामह ।
यथेमां क्षमसे वीर वध्यमानां वरूथिनीम् ॥ १९ ॥

यदि नाहं परित्याज्यो युवाभ्यामिह संयुगे ।
विक्रमेणानुरूपेण युध्येतां पुरुषर्षभौ ॥ १०२० ॥

एतच्छ्रुत्वा वचो भीष्मः प्रहसन् वै मुहुर्मुहुः ।
अब्रवीत्तनयं तुभ्यं क्रोधादुद्वृत्य चक्षुषी ॥ २१ ॥

बहुशोऽसि मया राजंस्तथ्यमुक्तो हितं वचः ।
अजेयाः पाण्डवा युद्धे देवैरपि सवासवैः ॥ २२ ॥

यत्तु शक्यं मया कर्तुं वृद्धेनाद्य नृपोत्तम ।
करिष्यामि यथाशक्ति प्रेक्षेदानीं सबान्धवः ॥ २३ ॥

अद्य पाण्डुसुतानेकः ससैन्यान् सह बन्धुभिः ।
सोऽहं निवारयिष्यामि सर्वलोकस्य पश्यतः ॥ २४ ॥

एवमुक्ते तु भीष्मेण पुत्रास्तव जनेश्वर ।
दध्मुः शङ्खान् मुदा युक्ता भेरीः सञ्जघ्निरे भृशम् ॥ २५ ॥

पाण्डवा हि ततो राजन् श्रुत्वा तं निनदं महत् ।
दध्मुः शङ्खांश्च भेरीश्च मुरजांश्चाप्यनादयन् ॥ २६ ॥

(अ. ५९) जयं प्राप्तेषु हृष्टेषु पाण्डवेषु महात्मसु ।
सर्वधर्मविशेषज्ञः पिता देवव्रतस्तव ॥
अभ्ययाज्जवनैरश्वैः पाण्डवानामनीकिनीम् ॥ २७ ॥

प्रावर्तत ततो युद्धं तुमुलं लोमहर्षणम् ।
अस्माकं पाण्डवैः सार्धमनयात्तव भारत ॥ २८ ॥

तत्र भीष्मः शान्तनवो नित्यं मण्डलकार्मुकः ।
मुमोच बाणान् दीप्ताग्रानहीनाशीविषानिव ॥ २९ ॥

यो यो भीष्मं नरव्याघ्रमभ्येति युधि कश्चन।
मुहूर्तदृष्टः स मया पतितो भुवि दृश्यते ॥ १०३० ॥

एवं सा धर्मराजस्य वध्यमाना महाचमूः।
भीष्मेणातुलवीर्येण व्यशीर्यत सहस्रधा ॥ ३१ ॥

ततोऽश्वान् रजतप्रख्यान्नोदयामास माधवः।
यतो भीष्मरथो राजन् दुष्प्रेक्ष्यो रश्मिवानिव ॥ ३२ ॥

ततस्तत्पुनरावृत्तं युधिष्ठिरबलं महत्।
दृष्ट्वा पार्थं महाबाहु भीष्मायोद्यतमाहवे ॥ ३३ ॥

ततो भीष्मः कुरुश्रेष्ठ सिंहवद्विनदन्मुहुः।
धनञ्जयरथं शीघ्रं शरवर्षैरवाकिरत् ॥ ३४ ॥

ततः पार्थो धनुर्गृह्य दिव्यं जलदनिःस्वनम्।
पातयामास भीष्मस्य धनुश्छित्वा त्रिभिः शरैः ॥ ३५ ॥

ततो भुजाभ्यां बलवद्विकृष्य
चित्रं धनुर्गाण्डिवमप्रमेयम्।
माहेन्द्रमस्त्रं विधिवत्सुघोरं
प्रादुश्चकाराद्भुतमन्तरिक्षे ॥ ३६ ॥

तेनोत्तमास्त्रेण ततो महात्मा
सर्वाण्यनीकानि महाधनुष्मान्।
शरौघजालैर्विमलाग्निवर्णै-
र्निवारयामास किरीटमाली ॥ ३७ ॥

बाणाहतास्तूर्णमपेतसत्त्वा
विष्टभ्य गात्राणि निपेतुरुर्व्याम्।
ऐन्द्रेण तेनास्त्रवरेण राजन्
महाहवे भिन्नतनुत्रदेहाः ॥ ३८ ॥

तदैन्द्रमस्त्रं विततं च घोर-
मसह्यमुद्वीक्ष्य युगान्तकल्पम्।

अथापयानं कुरव· सभीष्मा·
सद्रोणदुर्योधनबाह्लिकाश्च ।
चक्रुर्निशां सन्धिगतां समीक्ष्य
विभावसोर्लोहितरागयुक्ताम् ॥ ३९ ॥

अवाप्य कीर्तिं च यशश्च लोके
विजित्य शत्रूंश्च धनञ्जयोऽपि ।
ययौ नरेन्द्रैः सह सोदरैश्च
समाप्तकर्मा शिबिरं निशायाम् ॥ ४० ॥

## चतुर्थदिनयुद्धम्

(अ ६०) व्युष्टां निशा भारत भारताना-
मनीकिनीनां प्रमुखे महात्मा ।
ययौ सपत्नान् प्रति जातकोपो
वृत· समग्रेण बलेन भीष्मः ॥ ॥ ४१ ॥

ततो यथादेशमुपेत्य तस्थुः
पाञ्चालमुख्याः सह चेदिमुख्यैः ।
तत· समादेशसमाहतानि
भेरीसहस्राणि विनेदुराजौ ॥ ४२ ॥

क्षणेन भेरीपणवप्रणादा-
नन्तर्दधुः शङ्खमहास्वनाश्च
तच्छंखशब्दावृतमन्तरिक्ष-
मालोक्य वीराः सहसाऽभिपेतुः ॥ ४३ ॥

(अ. ६२) अथ दुर्योधनं दृष्ट्वा भीमसेनो महाबलः ।
विधित्सुः कलहस्यान्तं गदा जग्राह पाण्डवः ॥ ४४ ॥

दुर्योधनस्तु सङ्क्रुद्धो मागधं समचोदयत् ।
अनीकं दशसाहस्रं कुञ्जराणां तरस्विनाम् ॥ ४५ ॥

आपतन्तं च तं दृष्ट्वा गजानीकं वृकोदर ।
गदापाणिरवारोहद्रथात् सिंह इवोन्नदन् ॥ ४६ ॥

स गजान् गदया निघ्नन् व्यचरत्समरे बली ।
भीमसेनो महाबाहु· सवज्र इव वासव· ॥ ४७ ॥

एकप्रहारनिहतान् भीमसेनेन दन्तिन· ।
अपश्याम रणे तस्मिन् गिरीन्वज्रहतानिव ॥ ४८ ॥

वमन्तो रुधिरं चान्ये भिन्नकुम्भा महागजाः ।
विह्वलन्तो गता भूमिं शैला इव धरातले ॥ ४९ ॥

संमथ्यमाना· क्रुद्धेन भीमसेनेन दन्तिनः ।
सहसा प्राद्रवन् क्लिष्टा मृद्नन्तस्तव वाहिनीम् ॥ १०५० ॥

यथा पशूनां संघातं यष्ट्या पालः प्रकालयेत् ।
तथा भीमो गजानीकं गदया समकालयत् ॥ ५१ ॥

महावात इवाभ्राणि विधमित्वा स वारणान् ।
अतिष्ठत्तुमुले भीम· श्मशान इव शूलभृत् ॥ ५२ ॥

( अ. १४) प्रत्युद्ययुस्ततो भीमं तव पुत्राश्चतुर्दश ।
विसृजन्तो बहून् बाणान् क्रोधसंरक्तलोचनाः ॥ ५३ ॥

पुत्रांस्तु तव संप्रेक्ष्य भीमसेनो महाबलः ।
सृक्किणी विलिहन्वीरः पशुमध्ये यथा वृकः ॥ ५४ ॥

अभिपत्य महाबाहुर्गरुत्मानिव वेगितः ।
सेनापतेः क्षुरप्रेण शिरश्चिच्छेद पाण्डवः ॥ ५५ ॥

संप्रहस्य च हृष्टात्मा त्रिभिर्बाणैर्महाभुज·
जलसन्धं विनिर्भिद्य सोऽनयद्यमसादनम् ॥ ५६ ॥

सुषेणं च ततो हत्वा प्रेषयामास मृत्यवे ॥ ५७ ॥
उग्रस्य सशिरस्त्राणं शिरश्चन्द्रोपमं भुवि ।
पातयामास भल्लेन कुण्डलाभ्यां विभूषितम् ॥ ५८ ॥

वीरबाहुं च सभल्या साश्वकेतुं ससारथिम्।
निनाय समरे वीर· परलोकाय पाण्डवः ॥ ५९ ॥
भीमभीमरथौ चोभौ भीमसेनो हसन्निव।
पुत्रौ ते दुर्मदौ राजन्ननयद्यमसादनम् ॥ १०६० ॥
तत· सुलोचनं भीमः क्षुरप्रेण महामृधे।
मिषतां सर्वसैन्यानामनयद्यमसादनम् ॥ ६१ ॥
पुत्रास्तु तव तं दृष्ट्वा भीमसेनपराक्रमम्।
शेषा येऽन्येऽभवंस्तत्र ते भीमस्य भयार्दिताः।
विप्रद्रुता दिशो राजन् वध्यमाना महात्मना ॥ ६२ ॥
भगदत्तः प्रभिन्नेन कुञ्जरेण विशांपते।
अभ्ययात्सहसा तत्र यत्र भीमो व्यवस्थितः ॥ ६३ ॥
आपतन्नेव च रणे भीमसेनं शिलीमुखै ।
अदृश्यं समरे चक्रे जीमूत इव भास्करम् ॥ ६४ ॥
ततो घटोत्कचो राजन् प्रेक्ष्य भीमं तथागतम्।
संक्रुद्धो राक्षसो घोरस्तत्रैवान्तरधीयत ॥ ६५ ॥
स कृत्वा दारुणां मायां भीरूणां भयवर्धिनीम्।
अदृश्यत निमेषार्धाद्घोररूपं समास्थितः ॥ ६६ ॥
ऐरावणं समारूढः स वै मायाकृतं स्वयम्।
तस्य चान्येऽपि दिङ्नागा बभूवुरनुयायिनः ॥ ६७ ॥
अञ्जनो वामनश्चैव महापद्मश्च सुप्रभः।
त्रय एते महानागा राक्षसै· समधिष्ठिताः ॥ ६८ ॥
घटोत्कचस्तु स्वं नागं चोदयामास तं तदा।
सगजं भगदत्तं तु हन्तुकाम परंतपः ॥ ६९ ॥
ते चान्ये चोदिता नागा राक्षसैस्तैर्महाबलैः।
परिपेतुः सुसंरब्धाश्चतुर्दंष्ट्राश्चतुर्दिशम् ॥ १०७० ॥
भगदत्तस्य तं नागं विषाणैरभ्यपीडयन् ॥ ७१ ॥

स पीड्यमानस्तैर्नागैर्वेदनार्तः शराहतः ।
अनदत्सुमहानादमिन्द्राशनिसमस्वनम ॥ ७२ ॥

श्रुत्वा भीष्मोऽब्रवीद्द्रोणं राजानं च सुयोधनम् ।
न रोचते मे सङ्ग्रामो हैडिम्बेन दुरात्मना ॥ ७३ ॥

नैष शक्यो युधा जेतुमपि वज्रभृता स्वयम् ।
लब्धलक्षः प्रहारी च वयं च श्रान्तवाहनाः ॥ ७४ ॥

पञ्चालैः पाण्डवेयैश्च दिवसं क्षतविक्षताः ।
घुष्यतामवहारोऽद्य श्वो योत्स्यामः परैः सह ॥ ७५ ॥

कौरवास्तु ततो राजन्प्रययुः शिबिरं स्वकम् ।
व्रीडमाना निशाकाले पाण्डवेयैः पराजिताः ॥ ७६ ॥

शरविक्षतगात्रास्तु पाण्डुपुत्रा महारथाः ।
युद्धे सुमनसो भूत्वा जग्मुः स्वशिबिरं प्रति ॥ ७७ ॥

## पञ्चमदिनयुद्धम्

(अ. ६९) व्युषितायां तु शर्वर्यामुदिते च दिवाकरे ।
उभे सेने महाराज युद्धायैव समीयतुः ॥ ७८ ॥

(अ. ७०) ततो दुर्योधनो राजा कलिङ्गैर्बहुभिर्वृतः ।
पुरस्कृत्य रणे भीष्मं पाण्डवानभ्यवर्तत ॥ ७९ ॥

तथैव पाण्डवाः सर्वे परिवार्य वृकोदरम् ।
भीष्ममभ्यद्रवन् क्रुद्धास्ततो युद्धमवर्तत ॥ १०८० ॥

(अ. ७२) भीष्मस्तु रथिनां श्रेष्ठो भीमसेनं महाबलम् ।
अवारयत संक्रुद्धः सर्वसैन्यस्य पश्यतः ॥ ८१ ॥

तस्य शक्तिं महावेगां भीमसेनो महाबलः ।
क्रुद्धाशीविषसङ्काशां प्रेषयामास भारत ॥ ८२ ॥

तामापतन्तीं सहसा रुक्मदण्डां दुरासदाम् ।
चिच्छेद समरे भीष्मः शरैः सन्नतपर्वभिः ॥ ८३ ॥

ततोऽपरेण भल्लेन पीतेन निशितेन च।
कार्मुकं भीमसेनस्य द्विधा चिच्छेद भारत ॥ ८४ ॥

सात्यकिस्तु ततस्तूर्णं भीष्ममासाद्य संयुगे।
शरैर्बहुभिरानर्छत्पितरं ते जनेश्वर ॥ ८५ ॥

ततः संधाय वै तीक्ष्णं शरं परमदारुणम्।
वार्ष्णेयस्य रथाद्भीष्मः पातयामास सारथिम्।

तस्याश्वाः प्रद्रुता राजन्निहते रथसारथौ ॥ ८६ ॥
एतस्मिन्नेव काले तु भीष्मः शान्तनवस्तदा।
न्यहनत्पाण्डवीं सेनामासुरीमिव वृत्रहा ॥ ८७ ॥

(अ. ७४) अथ राजन्महाबाहुः सात्यकिर्युद्धदुर्मदः।
प्रामुञ्चत्पुङ्खसंयुक्तान् शरानाशीविषोपमान् ॥ ८८ ॥

तमुदीर्यन्तमालोक्य राजा दुर्योधनस्तत ।
रथानामयुतं तस्य प्रेषयामास भारत ॥ ८९ ॥

तांस्तु सर्वान्महेष्वासान्सात्यकिः सत्यविक्रमः।
जघान परमेष्वासो दिव्येनास्त्रेण वीर्यवान् ॥ १०९० ॥

स कृत्वा दारुणं कर्म प्रगृहीतशरासनः।
आससाद ततो वीरो भूरिश्रवसमाहवे ॥ ९१ ॥

स हि संदृश्य सेनां ते युयुधानेन पातिताम्।
अभ्यधावत संक्रुद्धः कुरूणां कीर्तिवर्धनः ॥ ९२ ॥

तं दृष्ट्वा युयुधानस्य सुता दश महाबलाः।
ऊचुः सर्वे सुसंरब्धा यूपकेतुं महारणे ॥ ९३ ॥

एहि युध्यस्व संग्रामे समस्तैः पृथगेव वा।
एवमुक्तस्तदा शूरैस्तानुवाच महाबलः ॥ ९४ ॥

साध्विदं कथ्यते वीरा यद्येवं मतिरद्य वः।
युध्यध्वं सहिता यत्ता निहनिष्यामि वो रणे ॥ ९५ ॥

एवमुक्ता महेष्वासास्ते वीराः क्षिप्रकारिणः ।
महता शरवर्षेण अभ्यधावन्नरिन्दमम् ॥ ९६ ॥

सोऽपराह्ने महाराज संग्रामस्तुमुलोऽभवत् ।
एकस्य च बहूनां च समेतानां रणाजिरे ॥ ९७ ॥

सौमदत्तिस्ततः क्रुद्धस्तेषां चापानि भारत ।
चिच्छेद समरे राजन् युध्यमानो महारथैः ॥ ९८ ॥

अथैषां छिन्नधनुषां शरैः सन्नतपर्वभिः ।
चिच्छेद समरे राजन् शिरांसि भरतर्षभ ॥ ९९ ॥

तान् दृष्ट्वा निहतान्वीरो रणे पुत्रान्महाबलान् ।
वार्ष्णेयो विनदन् राजन् भूरिश्रवसमभ्ययात् ॥ ११०० ॥

तावन्योन्यं हि समरे निहत्य रथवाजिनः ।
विरथावभिवल्गन्तौ समेयातां महारथौ ॥ १ ॥

प्रगृहीतमहाखड्गौ तौ चर्मवरधारिणौ ।
शुशुभाते नरव्याघ्रौ युद्धाय समवस्थितौ ॥ २ ॥

ततः सात्यकिमभ्येत्य निस्त्रिंशवरधारिणम् ।
भीमसेनस्त्वरन् राजन् रथमारोपयत्तदा ॥ ३ ॥

तवापि तनयो राजन् भूरिश्रवसमाहवे ।
आरोपयद्रथं तूर्णं पश्यतां सर्वधन्विनाम् ॥ ४ ॥

तस्मिंस्तथा वर्तमाने रणे भीष्मं महारथम् ।
अयोधयन्त संरब्धाः पाण्डवा भरतर्षभ ॥ ५ ॥

लोहितायति चादित्ये त्वरमाणो धनञ्जयः ।
पञ्चविंशतिसाहस्रान्निजघान महारथान् ॥ ६ ॥

ते हि दुर्योधनादिष्टास्तदा पार्थनिबर्हणे ।
संप्राप्यैव गता नाशं शलभा इव पावकम् ॥ ७ ॥

एतस्मिन्नेव काले तु सूर्येऽस्तमुपगच्छति ।
सर्वेषां चैव सैन्यानां प्रमोहः समजायत ॥ ८ ॥

अवहारं ततश्चक्रे पिता देवव्रतस्तव।
सन्ध्याकाले महाराज सैन्यानां श्रान्तवाहन॰ ॥ ९ ॥

ततः स्वशिबिरं गत्वा न्यविशंस्तत्र भारत।
पाण्डवाः सृञ्जयैः सार्धं कुरवश्च यथाविधि ॥ ११११० ॥

## षष्ठदिनयुद्धम्

(अ. ७५) ते विश्रम्य ततो राजन् सहिताः कुरुपाण्डवाः।
व्यतीतायां तु शर्वर्यां पुनर्युद्धाय निर्ययुः ॥ ११ ॥

भीमसेनार्जुनयमैर्गुप्ता चान्यैर्महारथैः।
शुशुभे पाण्डवी सेना नक्षत्रैरिव शर्वरी ॥ १२ ॥

तथा भीष्म-कृप-द्रोण-शल्य-दुर्योधनादिभिः।
तवापि च बभौ सेना ग्रहैर्द्यौरिव संवृता ॥ १३ ॥

भीमसेनस्तु कौन्तेयो द्रोणं दृष्ट्वा पराक्रमी।
अभ्ययाज्जवनैरश्वैर्भारद्वाजस्य वाहिनीम् ॥ १४ ॥

द्रोणस्तु समरे क्रुद्धो भीमं नवभिरायसैः।
विव्याध समरश्लाघी मर्माण्युद्दिश्य वीर्यवान् ॥ १५ ॥

दृढाहतस्ततो भीमो भारद्वाजस्य संयुगे।
सारथिं प्रेषयामास यमस्य सदनं प्रति ॥ १६ ॥

स सङ्गृह्य स्वयं वाहान् भारद्वाज॰ प्रतापवान्।
व्यधमत्पाण्डवीं सेना तूलराशिमिवानलः ॥ १७ ॥

ते वध्यमाना द्रोणेन भीष्मेण च नरोत्तमाः।
सृञ्जया॰ केकयैः सार्धं पलायनपराऽभवन् ॥ १८ ॥

तथैव तावकं सैन्यं भीमार्जुनपरिक्षतम्।
मुह्यते तत्र तत्रैव समदेव वराङ्गना ॥ १९ ॥

धृत०— एवं बहुगुणं सैन्यमेवं बहुविधं पुरा।
(अ. ७६) व्यूढमेवं यथाशास्त्रममोघं चैव सञ्जय ॥ ११२० ॥

नातिवृद्धमबालं च न कृशं न च पीवरम्।
लघुवृत्तायतप्रायं सारयोधमनामयम् ॥ २१ ॥

नागाश्वरथयानेषु बहुशः सुपरीक्षितम्।
परीक्ष्य च यथान्यायं वेतनेनोपपादितम् ॥ २२ ॥

गुप्तं प्रवीरैर्लोकैश्च सारवद्भिर्महात्मभिः।
यदहन्यत सङ्ग्रामे दैवमत्र पुरातनम् ॥ २३ ॥

ईदृशोऽपि बलौघस्तु संयुक्तः शस्त्रसंपदा।
वध्यते यत्र सङ्ग्रामे किमन्यद्भागधेयतः ॥ २४ ॥

पाण्डवार्थाय नियतं देवास्तत्र समागताः।
युध्यन्ते मामकं सैन्यं यथाऽवध्यत सञ्जय ॥ २५ ॥

उक्तो हि विदुरेणाहं हितं पथ्यं च नित्यशः।
न च जग्राह तन्मन्दः पुत्रो दुर्योधनो मम ॥ २६ ॥

तस्य मन्ये मतिः पूर्वं सर्वज्ञस्य महात्मनः।
आसीद्यथागतं तात येन दृष्टमिदं पुरा ॥ २७ ॥

अथवा भाव्यमेवं हि सञ्जयैतेन सर्वथा।
पुरा धात्रा यथा सृष्टं तत्तथा नैतदन्यथा ॥ २८ ॥

सञ्जय०–आत्मदोषात्त्वया राजन् प्राप्तं व्यसनमीदृशम्।
(अ. ७७) न हि दुर्योधनस्तानि पश्यते भरतर्षभ ॥ २९ ॥

यानि त्व दृष्टवान्राजन्धर्मसङ्करकारिते।
तव दोषात्पुरा वृत्तं द्यूतमेव विशांपते ॥ ११३० ॥

तव दोषेण युद्धं च प्रवृत्तं सह पाण्डवैः।
त्वमेवाद्य फलं भुङ्क्ष्व कृत्वा किल्बिषमात्मना ॥ ३१ ॥

आत्मनैव कृतं कर्म आत्मनैवोपभुज्यते।
इह च प्रेत्य वा राजंस्त्वया प्राप्तं यथातथम् ॥ ३२ ॥

तस्माद्राजन् स्थिरो भूत्वा प्राप्येदं व्यसनं महत्।
शृणु युद्धं यथावृत्त शंसतो मे नराधिप ॥ ३३ ॥

भीमसेनः सुनिशितैर्बाणैर्भित्त्वा महाचमूम् ।
आससाद ततो वीरः सर्वान्दुर्योधनानुजान् ॥ ३४ ॥
धार्तराष्ट्रान्सुसंक्रुद्धान्दृष्ट्वा भीमो महारथः ।
भीष्मेण समरे गुप्तां प्रविवेश महाचमूम् ॥ ३५ ॥
अथालोक्य प्रविष्टं तमूचुस्ते सर्व एव तु ।
जीवग्राहं निगृह्णीमो वयमेनं नराधिपा ॥ ३६ ॥
तेषां व्यवसितं ज्ञात्वा भीमसेनो जिघृक्षताम् ।
समस्तानां वधे राजन्मतिं चक्रे महामनाः ॥ ३७ ॥
ततो रथं समुत्सृज्य गदामादाय पाण्डवः ।
जघान धार्तराष्ट्राणां तं बलौघं महार्णवम् ॥ ३८ ॥
भीमसेने प्रविष्टे तु धृष्टद्युम्नोऽपि पार्षतः ।
निवार्य महतीं सेनां तावकानां नरर्षभः ॥ ३९ ॥
दृष्ट्वा विशोकं समरे भीमसेनस्य सारथिम् ।
अपृच्छद्बाष्पसंरुद्धो निःश्वसन्वाचमीरयन् ॥ ११४० ॥
मम प्राणैः प्रियतमः क्व भीम इति दुःखितः ।
विशोकस्तमुवाचेदं धृष्टद्युम्नं कृताञ्जलिः ॥ ४१ ॥
प्रविष्टो धार्तराष्ट्राणामेतद्बलमहार्णवम् ।
मामुक्त्वा पुरुषव्याघ्रः प्रीतियुक्तमिदं वचः ॥ ४२ ॥
प्रतिपालय मां सूत नियम्याश्वान्मुहूर्तकम् ।
यावदेतान्निहन्म्यद्य य इमे मद्वधोद्यताः ॥ ४३ ॥
विशोकस्य वचः श्रुत्वा धृष्टद्युम्नोऽथ पार्षतः ।
प्रत्युवाच ततः सूतं रणमध्ये महाबलः ॥ ४४ ॥
न हि मे जीवितेनापि विद्यतेऽद्य प्रयोजनम् ।
भीमसेनं रणे हित्वा स्नेहमुत्सृज्य पाण्डवैः ॥ ४५ ॥
अस्वस्ति तस्य कुर्वन्ति देवाः शक्रपुरोगमाः ।
यः सहायान्परित्यज्य स्वस्तिमानाव्रजेद्गृहम् ॥ ४६ ॥

सोऽहं तत्र गमिष्यामि यत्र यातो वृकोदरः ॥ ४७ ॥

एवमुक्त्वा ततो वीरो ययौ मध्येन भारत।
भीमसेनस्य मार्गेषु गदाप्रमथितैर्गजैः ॥ ४८ ॥

स ददर्श तदा भीमं दहन्तं रिपुवाहिनीम्।
वातो वृक्षानिव बलात्प्रभञ्जन्तं रणे रिपून् ॥ ४९ ॥

अथोपगच्छच्छरविक्षताङ्गं
पदातिनं क्रोधविषं वमन्तम्।
विशल्यमेनं च चकार तूर्ण-
मारोपयच्चात्मरथे महात्मा ॥ ११५० ॥

तस्मिन्विमर्दे महति प्रवृत्ते
ज्येष्ठाज्ञया नोदिता धार्तराष्ट्राः।
वधाय निष्पेतुरुदायुधास्ते
युगक्षये केतवो यद्वदुग्राः ॥
समभ्युदीर्णांश्च तवात्मजांस्तथा
निशम्य वीरानभितः स्थितान्रणे।
जिघांसुरुग्रं द्रुपदात्मजो युवा
प्रमोहनास्त्रं युयुजे महारथः ॥ ५१ ॥
ततो व्यमुह्यन्त रणे नृवीराः
प्रमोहनास्त्राहतबुद्धिसत्त्वाः।
प्रदुद्रुवुः कुरवश्चैव सर्वे
सवाजिनागाः सरथाः समन्तात् ॥ ५२ ॥

अथ शुश्राव तेजस्वी द्रोणः शस्त्रभृतां वरः।
प्रमोहनास्त्रेण रणे मोहितानात्मजांस्तव ॥ ५३ ॥

ततः प्रज्ञास्त्रमादाय मोहनास्त्रं व्यनाशयत् ॥ ५४ ॥

(अ. ७८) अपराह्ले महाराज प्रावर्तत महारणः।
तावकानां च बलिनां परेषां चैव भारत ॥ ५५ ॥

अभिमन्युर्विकर्णस्य हयान्हत्वा महाहवे।
अथैनं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ॥ ५६ ॥
दुःशासनस्तु समरे केकयान्पञ्च मारिष।
योधयामास राजेन्द्र तदद्भुतमिवाभवत् ॥ ५७ ॥
पुत्रोऽपि तव दुर्धर्षो द्रौपद्यास्तनयान् रणे।
सायकैर्निशितै राजन्नाजघान पृथक्पृथक् ॥ ५८ ॥
भीष्मोऽपि समरे राजन्पाण्डवानामनीकिनीम्।
कालयामास बलवान्पालः पशुगणानिव ॥ ५९ ॥
ततो गाण्डीवनिर्घोषः प्रादुरासीद्दिशांपते।
दक्षिणेन वरूथिन्याः पार्थस्यारीन्विनिघ्नतः ॥ ११६० ॥
उत्तस्थुः समरे तत्र कबन्धानि समन्ततः।
कुरूणां चैव सैन्येषु पाण्डवानां च भारत ॥ ६१ ॥
छिन्नहस्ता विकवचा विदेहाश्च नरोत्तमाः।
दृश्यन्ते पतितास्तत्र शतशोऽथ सहस्रशः ॥ ६२ ॥
एवं युयुधिरे वीराः प्रार्थयाना महद्यशः।
तावकाः पाण्डवैः सार्धमाकाङ्क्षन्तो जय युधि ॥ ६३ ॥
(अ ७९) ततो दुर्योधनो राजा लोहितायति भास्करे।
सङ्ग्रामरभसो भीमं हन्तुकामोऽभ्यधावत ॥ ६४ ॥
तमायान्तमभिप्रेक्ष्य नृवीरं दृढवैरिणम्।
भीमसेनः सुसङ्क्रुद्ध इदं वचनमब्रवीत् ॥ ६५ ॥
अयं स कालः संप्राप्तो वर्षपूगाभिवाञ्छितः।
अद्य त्वां निहनिष्यामि यदि नोत्सृजसे रणम् ॥ ६६ ॥
एवमुक्त्वा धनुर्घोरं विकृष्योद्भ्राम्य चासकृत्।
समाधत्त शरान्घोरान्महाशनिसमप्रभान् ॥ ६७ ॥
ततोऽस्य कार्मुकं द्वाभ्यां सूतं द्वाभ्यां च विव्यधे।
चतुर्भिरश्वान् जवनाननयद्यमसादनम् ॥ ६८ ॥

अथैनं दशभिर्बाणैस्तोत्रैरिव महाद्विपम् ।
आजघान रणे वीरं स्मयन्निव महारथः ॥ ६९ ॥

स गाढविद्धो व्यथितो भीमसेनेन संयुगे ।
निषसाद रथोपस्थे राजन्दुर्योधनस्तदा ॥ ११७० ॥

ततः शान्तनवः क्रुद्धः शरैः सन्नतपर्वभिः ।
नाशयामास सेनां तां भीष्मस्तेषां महात्मनाम् ॥ ७१ ॥
पञ्चालाना च सैन्यानि शरैर्निन्ये यमक्षयम् ॥ ७२ ॥

एवं भित्त्वा महेष्वासः पाण्डवानामनीकिनीम् ।
कृत्वाऽवहारं सैन्यानां ययौ स्वशिबिरं नृप ॥ ७३ ॥

## भीष्मेण दुर्योधनः विशल्यः कृतः, सप्तमदिनयुद्धम्

(अ. ८०) ततस्तव सुतो राजंश्चिन्तयाऽभिपरिप्लुतः ।
विस्रवच्छोणिताक्ताङ्गः पप्रच्छेदं पितामहम् ॥ ७४ ॥

सैन्यानि रौद्राणि भयानकानि
व्यूढानि सम्यग्बहुलध्वजानि ।
विदार्य हत्वा च निपीड्य शूरा-
स्ते पाण्डवाना त्वरिता महारथाः ॥ ७५ ॥

संमोह्य सर्वान् युधि कीर्तिमन्तो
व्यूहं च त मकरं वज्रकल्पम् ।
प्रविश्य भीमेन रणे हतोऽस्मि
घोरैः शरैर्मृत्युदण्डप्रकाशैः ॥ ७६ ॥

क्रुद्धं तमुद्वीक्ष्य भयेन राजन्
संमूर्च्छितो न लभे शान्तिमद्य ।
इच्छे प्रसादात्तव सत्यसन्ध
प्राप्तुं जयं पाण्डवेयांश्च हन्तुम् ॥ ७७ ॥

तेनैवमुक्तः प्रहसन्महात्मा
दुर्योधनं मन्युगतं विदित्वा ।

तं प्रत्युवाचाविमना मनस्वी
गङ्गासुतः शस्त्रभृतां वरिष्ठः ॥ ७८ ॥
परेण यत्नेन विगाह्य सेनां
सर्वात्मनाऽहं तव राजपुत्र ।
इच्छामि दातुं विजयं सुखं च
न चात्मानं छादयेऽहं त्वदर्थे ॥ ७९ ॥
(अ. ८१) अवश्यं हि मया राजंस्तव वाच्यं हितं सदा ।
अशक्या॰ पाण्डवा जेतुं देवैरपि सवासवैः ॥ ११८० ॥
सर्वथाऽहं तु राजेन्द्र करिष्ये वचनं तव ॥ ८१ ॥
एवमुक्त्वा ददावस्मै विशल्यकरणीं शुभाम् ।
औषधीं वीर्यसम्पन्ना विशल्यश्चाभवत्तदा ॥ ८२ ॥
तत॰ प्रभाते विमले स्वेन सैन्येन वीर्यवान् ।
अव्यूहत स्वयं व्यूहं भीष्मो व्यूहविशारदः ॥ ८३ ॥
मण्डलं मनुजश्रेष्ठो नानाशस्त्रसमाकुलम् ॥ ८४ ॥
मण्डलं तु समालोक्य व्यूहं परमदुर्जयम् ।
स्वयं युधिष्ठिरो राजा वज्रं व्यूहमथाकरोत् ॥ ८५ ॥
(अ ८४) ततः प्रवृत्तः सुमहान्सङ्ग्रामः शोणितोदकः ।
तावकानां च समरे पाण्डवानां च भारत ॥ ८६ ॥
(अ. ८६) तस्मिंस्तथा वर्तमाने तुमुले सङ्कुले भृशम् ।
भीष्मः शान्तनवस्तूर्णं युधिष्ठिरमुपाद्रवत् ॥ ८७ ॥
युधिष्ठिरोऽपि कौरव्यो यमाभ्यां सहित॰ प्रभुः ।
महेष्वासं नरव्याघ्रं भीष्मं शान्तनवं ययौ ॥ ८८ ॥
ततः शरसहस्राणि प्रमुञ्चन् पाण्डवो युधि ।
भीष्मं संछादयामास यथा मेघो दिवाकरम् ॥ ८९ ॥
तेन सम्यक्प्रणीतानि शरजालानि मारिष ।
प्रतिजग्राह गाङ्गेयः शतशोऽथ सहस्रशः ॥ ११९० ॥

तथैव शरजालानि भीष्मेणास्तानि मारिष।
आकाशे समदृश्यन्त खगमानां व्रजा इव ॥ ९१ ॥
निमेषार्धेन कौन्तेयं भीष्मः शान्तनवो युधि।
अदृश्यं समरे चक्रे शरजालेन भागशः ॥ ९२ ॥
ततो युधिष्ठिरो राजा कौरव्यस्य महात्मनः।
नाराचं प्रेषयामास क्रुद्ध आशीविषोपमम् ॥ ९३ ॥
तं तु छित्त्वा रणे भीष्मो नाराचं कालसंमितम्।
निजघ्ने कौरवेन्द्रस्य हयान्काञ्चनभूषणान् ॥ ९४ ॥
हताश्वं तु रथं त्यक्त्वा धर्मपुत्रो युधिष्ठिरः।
आरुरोह रथं तूर्णं नकुलस्य महात्मनः ॥ ९५ ॥
ततो युधिष्ठिरो वश्यान्राज्ञस्तान्समचोदयत्।
भीष्मं शान्तनवं सर्वे निहतेति सुहृद्गणान् ॥ ९६ ॥
ततस्ते पार्थिवाः सर्वे श्रुत्वा पार्थस्य भाषितम्।
महता रथवंशेन परिवव्रुः पितामहम् ॥ ९७ ॥
स समन्तात्परिवृतः पिता देवव्रतस्तव।
चिक्रीड धनुषा राजन्पातयानो महारथान् ॥ ९८ ॥
तं चरन्तं रणे पार्था ददृशुः कौरवं युधि।
मृगमध्य प्रविश्येव यथा सिंहशिशुं वने ॥ ९९ ॥
रणे भारतसिंहस्य ददृशुः क्षत्रिया गतिम्।
अग्नेर्वायुसहायस्य यथा कक्षं दिधक्षतः ॥ १२०० ॥
शिरांसि रथिनां भीष्मः पातयामास संयुगे।
तालेभ्यः परिपक्वानि फलानि कुशलो नरः ॥ १ ॥
तस्मिन्सुतुमुले युद्धे वर्तमाने भयानके।
सर्वेषामेव सैन्यानामासीद्व्यतिकरो महान् ॥ २ ॥
शिखण्डी तु समासाद्य भरतानां पितामहम्।
अभिदुद्राव वेगेन तिष्ठ तिष्ठेति चाब्रवीत् ॥ ३ ॥

अनादृत्य ततो भीष्मस्तं शिखण्डिनमाहवे।
प्रययौ सृञ्जयान्क्रुद्धः स्त्रीत्व चिन्त्य शिखण्डिनः ॥ ४ ॥

ततः प्रववृते युद्धं व्यतिषक्तरथद्विपम्।
पश्चिमां दिशमासाद्य स्थिते सवितरि प्रभो ॥ ५ ॥

द्रोणस्तु समरे क्रुद्धः पुत्रस्य प्रियकृत्तव।
व्यधमत्सर्वपञ्चालांस्तूलराशिमिवानलः ॥ ६ ॥

युध्यता तु तथा तेषां कुर्वतां कर्म दुष्करम्।
अस्तं गिरिमथारूढे अप्रकाशति भास्करे ॥ ७ ॥

शिवाभिरशिवाभिश्च रुवद्भिर्भैरवं रवम्।
घोरमायोधनं जज्ञे भूतसङ्घैः समाकुलम् ॥ ८ ॥

राक्षसाश्च पिशाचाश्च तथान्ये पिशिताशिनः।
समन्ततो व्यदृश्यन्त शतशोऽथ सहस्रशः ॥ ९ ॥

ततः स्वशिबिरं गत्वा पाण्डवाः कुरवस्तथा।
न्यवसन्त महाराज पूजयन्तः परस्परम् ॥ १२१० ॥

रक्षां कृत्वा ततः शूरा न्यस्य गुल्मान्यथाविधि।
अपनीय च शल्यानि स्नात्वा च विविधैर्जलैः ॥ ११ ॥

कृतस्वस्त्ययनाः सर्वे संस्तूयन्तश्च बन्दिभिः।
गीतवादित्रशब्देन व्यक्रीडन्त यशस्विनः ॥ १२ ॥

मुहूर्तादिव तत्सर्वमभवत्स्वर्गसन्निभम्।
न हि युद्धकथां काश्चित्तत्राकुर्वन्महारथाः ॥ १३ ॥

## अष्टमदिनयुद्धम्, सुनाभादिधार्तराष्ट्रवधः, इरावद्वधः

(अ. ८७) परिणाम्य निशां तां तु सुखं प्राप्ता जनेश्वराः।
कुरवः पाण्डवाश्चैव पुनर्युद्धाय निर्ययुः ॥ १४ ॥

ततः प्रववृते युद्धं घोररूपं भयावहम्।
तावकानां परेषां च निघ्नतामितरेतरम् ॥ १५ ॥

(अ. ८८) भीष्मं तु समरे क्रुद्धं प्रतपन्तं समन्ततः।
न शेकुः पाण्डवा द्रष्टुं तपन्तमिव भास्करम् ॥ १६ ॥

ततः सर्वाणि सैन्यानि धर्मपुत्रस्य शासनात्।
अभ्यद्रवन्त गाङ्गेयं मर्दयन्तं शितैः शरैः ॥ १७ ॥

स तु भीष्मो रणश्लाघी सोमकान्सहसृञ्जयान्।
पञ्चालांश्च महेष्वासान्पातयामास सायकैः ॥ १८ ॥

न तत्रासीत्पुमान्कश्चित्पाण्डवानां विशांपते।
अन्यत्र रथिनां श्रेष्ठाद्भीमसेनान्महाबलात् ॥ १९ ॥

स हि भीष्मं समासाद्य ताडयामास संयुगे ॥ १२२० ॥

ततो दुर्योधनो राजा सोदर्यैः परिवारितः।
भीष्मं जुगोप समरे वर्तमाने जनक्षये ॥ २१ ॥

भीमस्तु सारथिं हत्वा भीष्मस्य रथिना वरः।
प्रद्रुताश्वे रथे तस्मिन्द्रवमाणे समन्ततः।
सुनाभस्य शरेणाशु शिरश्चिच्छेद भारत ॥ २२ ॥

धनुः प्रपीड्य वामेन करेणामित्रकर्शनः।
शिरश्चिच्छेद समरे शरेणानतपर्वणा।
अपराजितस्य सुनसं तव पुत्रस्य सयुगे ॥ २३ ॥

अथापरेण भल्लेन कुण्डधारं महारथम्।
प्राहिणोन्मृत्युलोकाय सर्वलोकस्य पश्यतः ॥ २४ ॥

ततः पुनरमेयात्मा प्रसंधाय शिलीमुखम्।
प्रेषयामास समरे पण्डितं प्रति भारत ॥ २५ ॥

स शरः पण्डितं हत्वा विवेश धरणीतलम् ॥ २६ ॥

विशालाक्षशिरश्छित्वा पातयामास भूतले।
त्रिभिः शरैरदीनात्मा स्मरन्क्लेशं पुरातनम् ॥ २७ ॥

महोदरं महेष्वासं नाराचेन स्तनान्तरे।
विव्याध समरे राजन्स हतो न्यपतद्भुवि ॥ २८ ॥

आदित्यकेतोः केतुं च च्छित्वा बाणेन संयुगे।
भल्लेन भृशतीक्ष्णेन शिरश्चिच्छेद भारत ॥ २९ ॥
बह्वाशिनं ततो भीमः शरेणानतपर्वणा।
प्रेषयामास संक्रुद्धो यमस्य सदनं प्रति ॥ १२३० ॥
प्रदुद्रुवुस्ततस्तेऽन्ये पुत्रास्तव विशांपते।
मन्यमाना हि तत्सत्यं सभाया तस्य भाषितम् ॥ ३१ ॥
ततो दुर्योधनो राजा भीष्ममासाद्य संयुगे।
दुःखेन महताऽऽविष्टो विललाप सुदुःखितः ॥ ३२ ॥
निहता भ्रातरः शूरा भीमसेनेन मे युधि।
यतमानास्तथाऽन्येपि हन्यन्ते सर्वसैनिकाः ॥ ३३ ॥
भवांश्च मध्यस्थतया नित्यमस्मानुपेक्षते।
सोऽहं कुपथमारूढः पश्य दैवमिदं मम ॥ ३४ ॥
एतच्छ्रुत्वा वचः क्रूरं पिता देवव्रतस्तव।
दुर्योधनमिदं वाक्यमब्रवीत्साश्रुलोचनः ॥ ३५ ॥
उक्तमेतन्मया पूर्वं द्रोणेन विदुरेण च।
गान्धार्या च यशस्विन्या तत्त्वं तात न बुद्धवान् ॥ ३६ ॥
यं यं हि धार्तराष्ट्राणां भीमो द्रक्ष्यति संयुगे।
हनिष्यति रणे नित्यं सत्यमेतद्ब्रवीमि ते ॥ ३७ ॥
न शक्याः पाण्डवा जेतुं सेन्द्रैरपि सुरासुरैः।
तस्माद्युद्धे स्थिरां कृत्वा मतिं युद्ध्यस्व भारत ॥ ३८ ॥
धृत०— दृष्ट्वा मे निहतान्पुत्रान्बहूनेकेन सञ्जय।
(अ. ८९) मन्येऽहं सर्वथा सूत दैवेनोपहतो भृशम् ॥ ३९ ॥
न हि दुर्योधनो मन्दः पुरा प्रोक्तमबुध्यत।
वार्यमाणो मया तात भीष्मेण विदुरेण च ॥ १२४० ॥
सञ्जय०—इदं तत्समनुप्राप्तं क्षत्तुर्वचनमुत्तमम्।
न बुद्धवानसि विभो प्रोच्यमानं हितं तदा ॥ ४१ ॥

न शुश्रूषसि यद्वाक्यं मर्त्यः पथ्यमिवौषधम् ।
तदेव त्वामनुप्राप्तं वचनं साधुभाषितम् ॥ ४२ ॥
विदुरद्रोणभीष्माणां तथाऽन्येषां हितैषिणाम् ।
अकृत्वा वचनं पथ्यं क्षयं गच्छन्ति कौरवाः ॥ ४३ ॥
तस्मात्त्वं शृणु तत्त्वेन यथा युद्धमवर्तत ॥ ४४ ॥
(अ. ९०) अर्जुनस्य सुतः श्रीमानिरावान्नाम वीर्यवान् ।
स्नुषायां नागराजस्य जातः पार्थेन धीमता ॥ ४५ ॥
ऐरावतेन सा दत्ता अनपत्या महात्मना ।
पत्यौ हते सुपर्णेन कृपणा दीनचेतना ॥ ४६ ॥
भार्यार्थे तां च जग्राह पार्थः कामवशानुगाम् ।
एवमेष समुत्पन्नः परक्षेत्रेऽर्जुनात्मजः ॥ ४७ ॥
स नागलोके संवृद्धो मात्रा च परिरक्षितः ।
पितृव्येण परित्यक्तः पार्थद्वेषाद्दुरात्मना ॥ ४८ ॥
इन्द्रलोकं जगामाशु श्रुत्वा तत्रार्जुनं गतम् ।
सोऽर्जुनेन समाज्ञप्तो देवलोके तदा नृप ॥ ४९ ॥
युद्धकाले त्वयाऽस्माकं साह्यं देयमिति प्रभो ।
बाढमित्येवमुक्त्वा तु युद्धकाल इहागतः ।
कामवर्णजवैरश्वैर्बहुभिः संवृतो नृप ॥ १२५० ॥
ते हयाः काञ्चनापीडा नानावर्णा मनोजवाः ।
उत्पेतुः सहसा राजन्हंसा इव महोदधौ ॥ ५१ ॥
तथैव तावका राजन्समेत्यान्योन्यमाहवे ।
परस्परवधं घोरं चक्रुस्ते हयसादिनः ॥ ५२ ॥
ततः क्षीणे हयानीके किञ्चिच्छेषे च भारत ।
सौबलस्यानुजाः शूरा निर्गता रणमूर्धनि ॥ ५३ ॥
गजो गवाक्षो वृषभश्चर्मवानार्जवः शुकः ।
इरावन्तमभिद्रुत्य सर्वतः पर्यवारयन् ॥ ५४ ॥

इरावानपि संक्रुद्धः सर्वांस्तान्निशितैः शरैः।
मोहयामास समरे विद्ध्वा परपुरञ्जयः॥ ५५॥
विकृष्य च शितं खड्गं गृहीत्वा च शरावरम्।
पदातिर्द्रुतमागच्छज्जिघांसुः सौबलान्युधि॥ ५६॥
भूमिष्ठमथ तं सङ्ख्ये सम्प्रदृश्य ततः पुनः।
परिवार्य भृशं सर्वे ग्रहीतुमुपचक्रमुः॥ ५७॥
अथाभ्याशगतानां स खड्गेनामित्रकर्शनः।
असिहस्तापहस्ताभ्यां तेषां गात्राण्यकृन्तत॥ ५८॥
वृषभस्तु महाराज बहुधा विपरिक्षतः।
अमुच्यत महारौद्रात्तस्माद्वीरावकर्तनात्॥ ५९॥
तान्सर्वान्पतितान्दृष्ट्वा भीतो दुर्योधनस्ततः।
अभ्यधावत संक्रुद्धो राक्षसं घोरदर्शनम्॥ १२६०॥
आर्ष्यश्रृङ्गिं महेष्वासं मायाविनमरिन्दमम्।
वैरिणं भीमसेनस्य पूर्वं बकवधेन वै॥ ६१॥
पश्य वीर यथा ह्येष फाल्गुनस्य सुतो बली।
मायावी विप्रियं कर्तुमकार्षीन्मे बलक्षयम्॥ ६२॥
त्वं च कामगमस्तात मायास्त्रे च विशारदः।
कृतवैरश्च पार्थेन तस्मादेनं रणे जहि॥ ६३॥
बाढमित्येवमुक्त्वा तु राक्षसो घोरदर्शनः।
प्रययौ सिंहनादेन यत्रार्जुनसुतो युवा॥ ६४॥
इरावानपि संक्रुद्धस्त्वरमाणः पराक्रमी।
हन्तुकामममित्रघ्नो राक्षसं प्रत्यवारयत्॥ ६५॥
तमापतन्तं संप्रेक्ष्य राक्षसः सुमहाबलः।
त्वरमाणस्ततो मायां प्रयोक्तुमुपचक्रमे॥ ६६॥
इरावानपि संक्रुद्धो मायां स्रष्टुं प्रचक्रमे।
योऽन्वयो मातृकस्तस्य स एनमभिपेदिवान्॥ ६७॥

स नागैर्बहुभी राजन्निरावान्संवृतो रणे।
दधार सुमहद्रूपमनन्त इव भोगवान् ॥ ६८ ॥
ततो बहुविधैर्नागैश्छादयामास राक्षसम्।
छाद्यमानस्तु नागै स ध्यात्वा राक्षसपुङ्गव.।
सौपर्णं रूपमास्थाय भक्षयामास पन्नगान् ॥ ६९ ॥
मायया भक्षिते तस्मिन्नन्वये तस्य मातृके।
विमोहितमिरावन्त न्यहनद्राक्षसोऽसिना ॥ १२७० ॥
तस्मिंस्तु विहते वीरे राक्षसेनार्जुनात्मजे।
विशोका· समपद्यन्त धार्तराष्ट्रा· सराजका· ॥ ७१ ॥
(अ. ९१) इरावन्तं तु निहतं संग्रामे वीक्ष्य राक्षस.।
व्यनदत्सुमहानाद भैमसेनिर्घटोत्कचः ॥ ७२ ॥
ततो दुर्योधनो राजा घटोत्कचमुपाद्रवत् ॥ ७३ ॥
पृष्ठतोऽनुययौ चैनं स्रवद्भि· पर्वतोपमै·।
कुञ्जरैर्दशसाहस्रैर्वङ्गानामधिप· स्वयम् ॥ ७४ ॥
तमापतन्तं संप्रेक्ष्य गजानीकेन संवृतम्।
पुत्र तव महाराज चुकोप स निशाचर· ॥ ७५ ॥
अथैनमब्रवीत्क्रुद्धः क्रूरः संरक्तलोचनः।
अद्यानृण्यं गमिष्यामि पितॄणां मातुरेव च ॥ ७६ ॥
ये त्वया सुनृशंसेन दीर्घकालं प्रवासिताः।
यच्च ते पाण्डवा राजंश्छलद्यूते पराजिताः ॥ ७७ ॥
यच्चैव द्रौपदी कृष्णा एकवस्त्रा रजस्वला।
सभामानीय दुर्बुद्धे बहुधा क्लेशिता त्वया ॥ ७८ ॥
एतेषामपमानानामन्येषां च कुलाधम।
अन्तमद्य गमिष्यामि यदि नोत्सृजसे रणम् ॥ ७९ ॥
एवमुक्त्वा तु हैडिम्बो महद्विस्फार्य कार्मुकम्।
शरवर्षेण महता दुर्योधनमवाकिरत् ॥ १२८० ॥

(अ. ९२) ततः क्रोधसमाविष्टो निःश्वसन्निव पन्नग ।
संशयं परमं प्राप्तः पुत्रस्ते भरतर्षभ ॥ ८१ ॥

क्षत्रधर्मं पुरस्कृत्य आत्मनश्चाभिमानिताम् ।
प्राप्तेऽपक्रमणे राजा तस्थौ गिरिरिवाचलः ॥ ८२ ॥

संधाय च शितं बाणं कालाग्निसमतेजसम् ।
मुमोच परमक्रुद्धस्तस्मिन्घोरे निशाचरे ॥ ८३ ॥

तमापतन्तं संप्रेक्ष्य बाणमिन्द्राशनिप्रभम् ।
लाघवान्मोचयामास महात्मा वै घटोत्कचः ॥ ८४ ॥

भूयश्च विननादोग्रं क्रोधसंरक्तलोचनः ।
(अ. ९४) प्रादुश्चक्रे ततो मायां घोररूपां सुदारुणाम् ॥ ८५ ॥

ततस्ते तावकाः सर्वे मायया विमुखीकृताः ।
अन्योन्यं समपश्यन्त निकृत्ता मेदिनीतले ॥ ८६ ॥

विचेष्टमानाः कृपणाः शोणितेन परिप्लुताः ।
विध्वस्ता रथिनः सर्वे राजानश्च निपातिताः ॥ ८७ ॥

हयाश्चैव हयारोहाः सन्निकृत्ताः सहस्रशः ।
तद्दृष्ट्वा तावकं सैन्यं विद्रुतं शिबिरं प्रति ॥ ८८ ॥

मम प्राक्रोशतो राजंस्तथा देवव्रतस्य च ।
युध्यध्वं मा पलायध्वं मायैषा राक्षसी रणे ॥ ८९ ॥

घटोत्कचप्रमुक्तेति नातिष्ठन्त विमोहिताः ।
नैव ते श्रद्दधुर्भीता वदतोरावयोर्वचः ॥ १२९० ॥

तांश्च प्रद्रवतो दृष्ट्वा जयं प्राप्ताश्च पाण्डवाः ।
घटोत्कचेन सहिताः सिंहनादान्प्रचक्रिरे ॥ ९१ ॥

(अ. ९६) पुत्रं विनिहतं श्रुत्वा इरावन्तं धनञ्जयः ।
दुःखेन महताऽऽविष्टो निःश्वसन्पन्नगो यथा ।
अब्रवीत्समरे राजन्वासुदेवमिदं वचः ॥ ९२ ॥

अर्थहेतोर्नरश्रेष्ठ क्रियते कर्म कुत्सितम् ।
धिगर्थान्यत्कृते ह्येव क्रियते ज्ञातिसङ्क्षयः ॥ ९३ ॥
अधनस्य मृतं श्रेयो न च ज्ञातिवधाद्धनम् ।
किं नु प्राप्स्यामहे कृष्ण हत्वा ज्ञातीन्समागतान् ॥ ९४ ॥
इदानीं च विजानामि सुकृतं मधुसूदन ।
कृतं राज्ञा महाबाहो याचता च सुयोधनम् ।
राज्यार्धं पञ्च वा ग्रामान्नाकार्षीत्स च दुर्मतिः ॥ ९५ ॥
दृष्ट्वा हि क्षत्रियान् शूरान् शयानान्धरणीतले ।
निन्दामि भृशमात्मानं धिगस्तु क्षत्रजीविकाम् ॥ ९६ ॥
अशक्तमिति मामेते ज्ञास्यन्ते क्षत्रिया रणे ।
युद्धं तु मे न रुचितं ज्ञातिभिर्मधुसूदन ॥ ९७ ॥
सञ्चोदय हयान् शीघ्रं धार्तराष्ट्रचमूं प्रति ।
प्रतरिष्ये महापारं भुजाभ्यां समरोदधिम् ॥ ९८ ॥
नायं यापयितुं कालो विद्यते माधव क्वचित् ॥ ९९ ॥
एवमुक्तस्तु पार्थेन केशवः परवीरहा ।
चोदयामास तानश्वान्पाण्डुरान्वातरंहसः ॥ १३०० ॥
अपराह्णे महाराज संग्रामः समपद्यत ।
पर्जन्यसमनिर्घोषो भीष्मस्य सह पाण्डवैः ॥ १ ॥
ततो राजंस्तव सुता भीमसेनमुपाद्रवन् ।
परिवार्य रणे द्रोणं वसवो वासवं यथा ॥ २ ॥
भीमसेनस्तु संप्रेक्ष्य पुत्रांस्तव जनेश्वर ।
प्रजज्वाल रणे क्रुद्धो हविषा हव्यवाडिव ॥ ३ ॥
व्यूढोरस्कं ततो भीमः पातयामास भारत ।
क्षुरप्रेण सुतीक्ष्णेन सोऽभवद्धतजीवितः ॥ ४ ॥
अपरेण तु भल्लेन पीतेन निशितेन तु ।
अपातयत्कुण्डलिनं सिंहः क्षुद्रमृगं यथा ॥ ५ ॥

ततः सुनिशितान्पीतान्समादत्त शिलीमुखान् ।
ससर्ज त्वरया युक्तः पुत्रांस्ते प्राप्य मारिष ॥ ६ ॥
प्रेषिता भीमसेनेन शरास्ते दृढधन्वना ।
अपातयन्त पुत्रांस्ते रथेभ्यः सुमहारथान् ॥ ७ ॥
अनाधृष्टिं कुण्डभेदिं वैराटं दीर्घलोचनम् ।
दीर्घबाहुं सुबाहुं च तथैव कनकध्वजम् ॥ ८ ॥
ततः प्रदुद्रुवुः शेषास्तव पुत्रा महाहवे ।
तं कालमिव मन्यन्तो भीमसेनं महाबलम् ॥ ९ ॥
यथा हि पशुमध्यस्थो दारयेत पशून्वृकः ।
वृकोदरस्तव सुतांस्तथा व्यद्रावयद्रणे ॥ १३१० ॥
गाङ्गेयो भगदत्तश्च गौतमश्च महारथाः ।
पाण्डवं रभसं युद्धे वारयामासुरर्जुनम् ॥ ११ ॥
धृष्टद्युम्नमुखास्त्वन्ये तव सैन्यमयोधयन् ।
तथैव तावकाः सर्वे पाण्डुसैन्यमयोधयन् ॥ १२ ॥
तत्राक्रन्दो महानासीत्तव तेषां च भारत ।
निघ्नता दृढमन्योन्यं कुर्वतां कर्म दुष्करम् ॥ १३ ॥
नानाविधानि शस्त्राणि प्रगृह्य पतिता नराः ।
जीवन्त इव दृश्यन्ते गतसत्त्वा महारथाः ॥ १४ ॥
गदाविमथितैर्गात्रैर्मुसलैर्भिन्नमस्तकाः ।
गजवाजिरथक्षुण्णाः शेरते स्म नराः क्षितौ ॥ १५ ॥
तथैवाश्वनृनागानां शरीरैर्विबभौ तदा ।
संछन्ना वसुधा राजन्पर्वतैरिव सर्वशः ॥ १६ ॥
पद्मेन्दुद्युतिभिश्चैव वदनैश्चारुकुण्डलैः ।
क्लृप्तश्मश्रुभिरत्यर्थं वीराणां समलङ्कृतैः ॥ १७ ॥
अपविद्धैर्महाराज सुवर्णोज्ज्वलकुण्डलैः
ग्रहनक्षत्रशबला द्यौरिवासीद्वसुन्धरा ॥ १८ ॥

एवमेते महासेने मृदिते तत्र भारत ।
परस्परं समासाद्य तव तेषां च संयुगे ॥ १९ ॥
तेषु श्रान्तेषु भग्नेषु मृदितेषु च भारत ।
रात्रिः समभवत्तत्र नापश्याम ततोऽनुगान् ।
ततोऽवहारं सैन्यानां प्रचक्रुः कुरुपाण्डवाः ॥ १३२० ॥

## भीष्मदुर्योधनसंवादः, नवमदिनयुद्धम्

(अ. ९७) ततो दुर्योधनो राजा शकुनिश्चापि सौबलः ।
दुःशासनश्च पुत्रस्ते सूतपुत्रश्च दुर्जयः ॥ २१ ॥
समागम्य महाराज मन्त्रं चक्रुर्विवक्षितम् ।
कथं पाण्डुसुताः संख्ये जेतव्याः सगणा इति ॥ २२ ॥
कर्ण०– निवृत्ते युधि गाङ्गेये न्यस्तशस्त्रे च भारत ।
अहं पार्थान्हनिष्यामि सहितान्सर्वसोमकैः ॥ २३ ॥
पाण्डवेषु दयां नित्यं स हि भीष्मः करोति वै ।
अशक्तश्च रणे भीष्मो जेतुमेतान्महारथान् ॥ २४ ॥
स त्वं शीघ्रमितो गत्वा भीष्मस्य शिबिरं प्रति ।
अनुमान्य गुरुं वृद्धं शस्त्रं न्यासय भारत ॥ २५ ॥
न्यस्तशस्त्रे ततो भीष्मे निहतान्पश्य पांडवान् ।
मयैकेन रणे राजन्ससुहृद्गणबान्धवान् ॥ २६ ॥
एवमुक्तस्तु कर्णेन कर्णमाह जनेश्वरः ॥ २७ ॥
अनुमान्य रणे भीष्ममेषोऽहं द्विपदां वरम् ।
आगमिष्ये ततः क्षिप्रं त्वत्सकाशमरिन्दम ।
अपक्रान्ते ततो भीष्मे प्रहरिष्यसि संयुगे ॥ २८ ॥
निष्पपात ततस्तूर्णं पुत्रस्तव विशांपते ।
सहितो भ्रातृभिस्तैस्तु देवैरिव शतक्रतुः ॥ २९ ॥
संप्राप्य तु ततो राजा भीष्मस्य सदनं शुभम् ।
उवाच प्राञ्जलिर्भीष्मं बाष्पकण्ठोऽश्रुलोचनः ॥ १३३० ॥

त्वां वयं हि समाश्रित्य सयुगे शत्रुसूदन ।
उत्सहेम रणे जेतुं सेन्द्रानपि सुरासुरान् ॥ ३१ ॥

किमु पाण्डुसुतान्वीरान्ससुहृद्गणबाधवान् ।
तस्मादर्हसि गाङ्गेय कृपां कर्तुं मयि प्रभो ॥ ३२ ॥

जहि पाण्डुसुतान्वीरान्महेन्द्र इव दानवान् ।
अहं सर्वान्महाराज निहनिष्यामि सोमकान् ॥ ३३ ॥

दयया यदि वा राजन्द्वेष्यभावान्मम प्रभो ।
मन्दभाग्यतया वापि मम रक्षसि पाण्डवान् ॥ ३४ ॥

अनुजानीहि समरे कर्णमाहवशोभिनम् ।
स जेष्यति रणे पार्थान्ससुहृद्गणबांधवान् ॥ ३५ ॥

(अ ९८) वाक्शल्यैस्तव पुत्रेण सोऽतिविद्धो महामनाः ।
दुःखेन महताऽऽविष्टो नोवाचाप्रियमण्वपि ॥ ३६ ॥

अब्रवीत्तव पुत्रं स सामपूर्वमिदं वचः ।
किं त्वं दुर्योधनैवं मां वाक्शल्यैरपकृन्तसि ।
घटमानं यथाशक्ति कुर्वाणं च तव प्रियम् ॥ ३७ ॥

यदा तु पाण्डवः शूरः खाण्डवेऽग्निमतर्पयत् ।
पराजित्य रणे शक्रं पर्याप्तं तन्निदर्शनम् ॥ ३८ ॥

यदा च त्वां महाबाहो गन्धर्वैर्हृतमोजसा ।
अमोचयत्पाण्डुसुतः पर्याप्तं तन्निदर्शनम् ॥ ३९ ॥

यच्च नः सहितान्सर्वान्विराटनगरे तदा ।
एक एव समुद्यातः पर्याप्तं तन्निदर्शनम् ॥ १३४० ॥

विजित्य च यदा कर्णं सदा पुरुषमानिनम् ।
उत्तरायै ददौ वस्त्रं पर्याप्तं तन्निदर्शनम् ॥ ४१ ॥

को हि शक्तो रणे जेतुं पाण्डवं रभसं तदा ।
यस्य गोप्ता जगद्गोप्ता शङ्खचक्रगदाधरः ॥ ४२ ॥

अहं तु सोमकान्सर्वान्पञ्चालांश्च समागतान् ।
निहनिष्ये नरव्याघ्र वर्जयित्वा शिखण्डिनम् ॥ ४३ ॥

पूर्वं हि स्त्री समुत्पन्ना शिखण्डी राजवेश्मनि ।
वरदानात्पुमान् जातः सैषा वै स्त्री शिखण्डिनी ॥ ४४ ॥

तमहं न हनिष्यामि प्राणत्यागेऽपि भारत ॥ ४५ ॥

सुखं स्वपिहि गांधारे श्वोऽस्मि कर्ता महारणम् ।
यं जनाः कथयिष्यन्ति यावत्स्थास्यति मेदिनी ॥ ४६ ॥

एवमुक्तस्तव सुतो निर्जगाम जनेश्वर ।
अभिवाद्य गुरुं मूर्ध्ना प्रययौ संनिवेशनम् ॥ ४७ ॥

प्रभातायां च शर्वर्यां प्रातरुत्थाय तान्नृपः ।
राज्ञः समाज्ञापयत सेनां योजयतेति ह ॥ ४८ ॥

अद्य भीष्मो रणे क्रुद्धो निहनिष्यति सोमकान् ।
तत्र कार्यतमं मन्ये भीष्मस्यैवाभिरक्षणम् ॥ ४९ ॥

अब्रवीद्धि विशुद्धात्मा नाहं हन्यां शिखण्डिनम् ।
स्त्रीपूर्वको ह्यसौ राजस्तस्माद्वर्ज्यो मया रणे ॥ १३५० ॥

तत्र सर्वात्मना मन्ये गाङ्गेयस्यैव पालनम् ।
अरक्ष्यमाणं हि वृको हन्यात्सिंहं महाहवे ॥ ५१ ॥

मा वृकेणेव गाङ्गेयं घातयेम शिखण्डिना ।
यत्ता रक्षन्तु गाङ्गेयं तस्मिन्गुप्ते ध्रुवो जयः ॥ ५२ ॥

एतच्छ्रुत्वा तु ते सर्वे दुर्योधनवचस्तदा ।
सर्वतो रथवंशेन गाङ्गेय पर्यवारयन् ॥ ५३ ॥

(अ. ९९) ततः शान्तनवो भीष्मो निर्ययौ सह सेनया ।
व्यूहं चाव्यूहत महत्सर्वतोभद्रमात्मनः ॥ ५४ ॥

एवं तेऽपि महाव्यूहं प्रतिव्यूह्य सुदुर्जयम् ।
पाण्डवाः समरे शूराः स्थिता युद्धाय दंशिताः ॥ ५५ ॥

ततोऽन्योन्यं प्रधावन्तः संप्रहारं प्रचक्रिरे।
ततः शब्देन महता प्रचकम्पे वसुन्धरा ॥ ५६ ॥

(अ.१०३) तत्रासीत्सुमहद्युद्धं तव तेषां च सङ्कुलम्।
नराश्वरथनागानां यमराष्ट्रविवर्धनम् ॥ ५७ ॥

तस्मिन्रौद्रे तथा युद्धे वर्तमाने महाभये।
प्रावर्तत नदी घोरा शोणितान्त्रतरङ्गिणी ॥ ५८ ॥

प्राक्रोशन्क्षत्रियास्तत्र दृष्ट्वा तद्वैशसं महत्।
दुर्योधनापराधेन गच्छन्ति क्षत्रियाः क्षयम् ॥ ५९ ॥

गुणवत्सु कथं द्वेषं धृतराष्ट्रो जनेश्वरः।
कृतवान्पाण्डुपुत्रेषु पापात्मा लोभमोहितः ॥ १३६० ॥

एवं बहुविधा वाचः श्रूयन्ते स्म परस्परम्।
पाण्डवस्तवसंयुक्ताः पुत्राणां ते सुदारुणाः ॥ ६१ ॥

यत्पुरा न निगृह्णासि वार्यमाणो महात्मभि ।
वैचित्रवीर्य तस्येदं फलं पश्य सुदारुणम् ॥ ६२ ॥

(अ.१०४) एकीभूतास्ततः सर्वे कुरवः सह पाण्डवैः।
अयुध्यन्त महाराज मध्यं प्राप्ते दिवाकरे ॥ ६३ ॥

सात्यकिः कृतवर्माणं वारयित्वा महारणे।
शरैर्बहुविधै राजन्नाससाद पितामहम् ॥ ६४ ॥

तस्यायसीं महाशक्तिं चिक्षेपाथ पितामहः।
तामापतन्तीं सहसा मृत्युकल्पां सुदुर्जयाम्।
व्यंसयामास वार्ष्णेयो लाघवेन महायशाः ॥ ६५ ॥

वार्ष्णेयस्तु ततो राजन्स्वां शक्तिं कनकप्रभाम्।
वेगवद्गृह्य चिक्षेप पितामहरथं प्रति ॥ ६६ ॥

छित्त्वा शक्तिं तु गाङ्गेयः सात्यकिं नवभि शरैः।
आजघानोरसि क्रुद्धः प्रहसञ्छत्रुकर्शनः ॥ ६७ ॥

ततः सरथनागाश्वा पाण्डवाः पाण्डुपूर्वज।
परिवव्रू रणे भीष्मं माधवत्राणकारणात् ॥ ६८ ॥

(अ.१०५) दृष्ट्वा भीष्मं रणे क्रुद्धं पाण्डवैरभिसंवृतम्।
दुर्योधनो महाराज दुःशासनमभाषत ॥ ६९ ॥

रक्ष्यमाणो हि समरे भीष्मोऽस्माकं पितामहः।
निहन्यात्समरे यत्तान्पञ्चालान्पाण्डवैः सह ॥ १३७० ॥

स भवान्सर्वसैन्येन परिवार्य पितामहम्।
समरे कर्म कुर्वाणं दुष्करं परिरक्षतु ॥ ७१ ॥

स एवमुक्तः समरे पुत्रो दुःशासनस्तव।
परिवार्य स्थितो भीष्मं सैन्येन महता वृतः ॥ ७२ ॥

ततो दुर्योधनो राजा शूराणां हयसादिनाम्।
अयुतं प्रेषयामास पाण्डवानां निवारणे ॥ ७३ ॥

ततो युधिष्ठिरो राजा माद्रीपुत्रौ च पाण्डवौ।
न्यकृन्तन्नुत्तमाङ्गानि शरेण हयसादिनाम् ॥ ७४ ॥

पाण्डवाश्च महाराज जित्वा शत्रून्महामृधे।
दध्मुः शङ्खांश्च भेरीश्च ताडयामासुराहवे ॥ ७५ ॥

ततो दुर्योधनो दीनो दृष्ट्वा सैन्यं पराजितम्।
अब्रवीद्भरतश्रेष्ठ मद्रराजमिदं वचः ॥ ७६ ॥

एष पाण्डुसुतो ज्येष्ठो यमाभ्यां सहितो रणे।
पश्यतां वो महाबाहो सेनां द्रावयति प्रभो।
तं वारय महाबाहो वेलेव मकरालयम् ॥ ७७ ॥

पुत्रस्य तव तद्वाक्यं श्रुत्वा शल्यः प्रतापवान्।
स ययौ रथवेगेन यत्र राजा युधिष्ठिरः ॥ ७८ ॥

ततो युद्धं महाघोरं प्रावर्तत सुदारुणम्।
अपरां दिशमास्थाय पतमाने दिवाकरे ॥ ७९ ॥

स चाश्वान्रजतप्रख्याश्चोदयामास माधवः ।
यतो भीष्मस्ततो राजन्दुष्प्रेक्ष्यो रश्मिवानिव ॥ ९२ ॥

ततस्तत्पुनरावृत्तं युधिष्ठिरबलं महत् ।
दृष्ट्वा पार्थं महाबाहुं भीष्मायोद्यतमाहवे ॥ ९३ ॥

ततो भीष्मः कुरुश्रेष्ठः सिंहवद्विनदन्मुहुः ।
धनञ्जयरथं शीघ्रं शरवर्षैरवाकिरत् ॥ ९४ ॥

क्षणेन स रथस्तस्य सहयः सहसारथिः ।
शरवर्षेण महता न प्राज्ञायत भारत ॥ ९५ ॥

(अ. ५९) अदर्शयद्वासुदेवो हययाने परं बलम् ।
मोघान्कुर्वन् शरांस्तस्य मण्डलान्याचरंल्लघु ॥ ९६ ॥

तथा भीष्मस्तु सुदृढं वासुदेवधनञ्जयौ ।
विव्याध निशितैर्बाणैः सर्वगात्रेषु भारत ॥ ९७ ॥

शिशुभाते नरव्याघ्रौ तौ भीष्मशरविक्षतौ ।
गोवृषाविव संरब्धौ विषाणोल्लिखिताङ्कितौ ॥ ९८ ॥

पुनश्चापि सुसंरब्धः शरैः शतसहस्रशः ।
कृष्णयोर्युधि संरब्धो भीष्मोऽथावारयद्दिशः ॥ ९९ ॥

वार्ष्णेयं च शरैस्तीक्ष्णैः कम्पयामास रोषितः ।
मुहुरभ्यर्दयन्भीष्मः प्रहस्य स्वनवत्तदा ॥ १४०० ॥

ततस्तु कृष्णः समरे दृष्ट्वा भीष्मपराक्रमम् ।
संप्रेक्ष्य च महाबाहुः पार्थस्य मृदुयुद्धताम् ॥ १ ॥

भीष्मं च शरवर्षाणि सृजन्तमनिशं युधि ।
प्रतपन्तमिवादित्यं मध्यमासाद्य सेनयोः ॥ २ ॥

वरान्वरान्विनिघ्नन्तं पाण्डुपुत्रस्य सैनिकान् ।
युगान्तमिव कुर्वाणं भीष्मं यौधिष्ठिरे बले ॥ ३ ॥

अमृष्यमाणो भगवान्केशवः परवीरहा ।
अचिन्तयदमेयात्मा नास्ति यौधिष्ठिरं बलम् ॥ ४ ॥

एकाह्ना हि रणे भीष्मो नाशयेद्देवदानवान् ।
किं नु पाण्डुसुतान्युद्धे सबलान्सपदानुगान् ॥ ५ ॥
द्रवते च महासैन्यं पाडवस्य महात्मन. ॥ ६ ॥
एते च कौरवास्तूर्णं प्रभग्नान्वीक्ष्य सोमकान् ।
प्राद्रवन्ति रणे दृष्ट्वा हर्षयन्त पितामहम् ॥ ७ ॥
सोऽहं भीष्मं निहन्म्यद्य पाण्डवार्थाय दंशितः ।
भारमेतं विनेष्यामि पाण्डवाना महात्मनाम् ॥ ८ ॥
अर्जुनो हि शरैस्तीक्ष्णैर्वध्यमानोऽपि संयुगे ।
कर्तव्यं नाभिजानाति रणे भीष्मस्य गौरवात् ॥ ९ ॥
तथा चिन्तयतस्तस्य भूय एव पितामह. ।
प्रेषयामास संक्रुद्ध. शरान्पार्थरथं प्रति ॥ १४१० ॥
तत. सुनाभं वसुदेवपुत्रः
सूर्यप्रभं वज्रसमप्रभावम् ।
क्षुरान्तमुद्यम्य भुजेन चक्रं
रथादवप्लुत्य विसृज्य वाहान् ॥ ११ ॥
संकम्पयन्गां चरणैर्महात्मा
वेगेन कृष्ण. प्रससार भीष्मम् ।
मदान्धमाजौ समुदीर्णदर्पं
सिंहो जिघांसन्निव वारणेन्द्रम् ॥ १२ ॥
सोऽभिद्रवन्भीष्ममनीकमध्ये
क्रुद्धो महेन्द्रावरज प्रमाथी ।
व्यालम्बिपीतान्तपटश्चकाशे
घनो यथा खे तडितावनद्धः ॥ १३ ॥
सुदर्शनं चास्य रराज शौरे-
स्तच्चक्रपद्मं सुभुजोरुनालम् ।
यथादिपद्मं तरुणार्कवर्णं
रराज नारायणनाभिजातम् ॥ १४ ॥

तन्कृष्णकोपोदयसूर्यबुद्धं
क्षुरान्ततीक्ष्णाग्रसुजातपत्रम् ।
तस्यैव देहोरुसरःप्ररूढं
रराज नारायणबाहुनालम् ॥ १५ ॥

(अ १०६) दृष्ट्वा माधवमाक्रन्दे भीष्मायोद्यतमन्तिके ।
हतो भीष्मो हतो भीष्मस्तत्र तत्र वचो महत् ।
अश्रूयत महाराज वासुदेवभयात्तदा ॥ १६ ॥

तमापतन्तं संप्रेक्ष्य पुण्डरीकाक्षमाहवे ।
असंभ्रमं रणे भीष्मो विचकर्ष महद्धनुः ॥ १७ ॥

उवाच चैव गोविन्दमसम्भ्रान्तेन चेतसा ।
एह्येहि पुण्डरीकाक्ष देवदेव नमोऽस्तु ते ॥ १८ ॥

मामद्य सात्वतश्रेष्ठ पातयस्व महाहवे ।
त्वया हि देव संग्रामे हतस्यापि ममानघ ॥ १९ ॥

श्रेय एव परं कृष्ण लोके भवति सर्वतः ।
संभावितोऽस्मि गोविन्द त्रैलोक्येनाद्य संयुगे ।
प्रहरस्व यथेष्टं वै दासोऽस्मि तव चानघ ॥ १४२० ॥

अन्वगेव ततः पार्थः समभिद्रुत्य केशवम् ।
निजग्राह महाबाहुर्बाहुभ्यां परिगृह्य वै ॥ २१ ॥

निगृह्यमाणः पार्थेन कृष्णो राजीवलोचनः ।
जगामैवैनमादाय वेगेन पुरुषोत्तमः ॥ २२ ॥

पार्थस्तु विष्टभ्य बलाच्चरणौ परवीरहा ।
निजग्राह हृषीकेशं कथञ्चिद्दशमे पदे ॥ २३ ॥

तत एवमुवाचार्तः क्रोधपर्याकुलेक्षणम् ।
निःश्वसन्तं यथा नागमर्जुनः प्रणयात्सखा ॥ २४ ॥

निवर्तस्व महाबाहो नानृतं कर्तुमर्हसि ।
यत्त्वया कथितं पूर्वं न योत्स्यामीति केशव ॥ २५ ॥

मिथ्यावादीति लोकास्त्वां कथयिष्यन्ति माधव ।
ममैष भारः सर्वो हि हनिष्यामि पितामहम् ॥ २६ ॥

शपे केशव शस्त्रेण सत्येन सुकृतेन च ।
अन्तं यथा गमिष्यामि शत्रूणां शत्रुसूदन ॥ २७ ॥

अद्यैव पश्य दुर्धर्षं पात्यमानं महारथम् ।
तारापतिमिवापूर्णमन्तकाले यदृच्छया ॥ २८ ॥

माधवस्तु वचः श्रुत्वा फाल्गुनस्य महात्मनः ।
न किञ्चिदुक्त्वा सक्रोध आरुरोह रथं पुनः ॥ २९ ॥

तौ रथस्थौ नरव्याघ्रौ भीष्मः शान्तनवः पुनः ।
ववर्ष शरवर्षेण मेघो वृष्ट्या यथाऽचलौ ॥ १४३० ॥

प्राणानादत्त योधानां पिता देवव्रतस्तव ।
गभस्तिभिरिवादित्यस्तेजांसि शिशिरात्यये ॥ ३१ ॥

हतविद्रुतसैन्यास्तु निरुत्साहा विचेतसः ।
निरीक्षितुं न शेकुस्ते भीष्ममप्रतिमं रणे ॥ ३२ ॥

तथा पाण्डवसैन्यानि द्राव्यमाणानि भारत ।
त्रातारं नाध्यगच्छन्त गावः पङ्कगता इव ॥ ३३ ॥
पिपीलिका इव क्षुण्णा दुर्बला बलिना रणे ॥ ३४ ॥

विमृद्नतस्तस्य तु पाण्डुसेना-
मस्तं जगामाथ सहस्ररश्मिः ।
ततो बलानां श्रमकर्शितानां
मनोऽवहारं प्रति संबभूव ॥ ३५ ॥

(अ.१०७)ततोऽवहारं सैन्यानां चक्रे राजा युधिष्ठिरः ।
तथैव तव सैन्यानामवहारो ह्यभूत्तदा ॥ ३६ ॥

### भीष्मोक्तः स्ववधोपायः

तस्मिन् रात्रिमुखे घोरे पाण्डवा वृष्णिभिः सह ।
सृञ्जयाश्च दुराधर्षा मन्त्राय समुपाविशन् ॥ ३७ ॥

ततो युधिष्ठिरो राजा मन्त्रयित्वा चिरं नृप।
वासुदेवं समुद्वीक्ष्य वचनं चेदमाददे ॥ ३८ ॥

कृष्ण पश्य महात्मानं भीष्मं भीमपराक्रमम्।
गजं नलवनानीव विमृद्नन्तं बलं मम ॥ ३९ ॥

सोऽहमेवंगते कृष्ण निमग्नः शोकसागरे।
वनं यास्यामि दुर्धर्ष श्रेयो वै तत्र मे गतम् ॥ १४४० ॥

न युद्धं रोचते कृष्ण हन्ति भीष्मो हि नः सदा ॥ ४१ ॥

जीवितं बहुमन्येऽहं जीवितं ह्यद्य दुर्लभम्।
जीवितस्याद्य शेषेण चरिष्ये धर्ममुत्तमम् ॥ ४२ ॥

एवं श्रुत्वा वचस्तस्य कारुण्याद्बहुविस्तरम्।
प्रत्युवाच ततः कृष्णः सान्त्वयानो युधिष्ठिरम् ॥ ४३ ॥

यदि भीष्मे हते वीरे जयं पश्यसि पाण्डव।
हन्ताऽस्म्येकरथेनाद्य कुरुवृद्धं पितामहम् ॥ ४४ ॥

पश्य मे विक्रमं राजन्महेन्द्रस्येव संयुगे।
विमुञ्चन्तं महास्त्राणि पातयिष्यामि तं रथात् ॥ ४५ ॥

यः शत्रुः पाण्डुपुत्राणां मच्छत्रुः स न संशयः।
मदर्था भवदीया ये ये मदीयास्तवैव ते ॥ ४६ ॥

तव भ्राता मम सखा संबन्धी शिष्य एव च।
मांसान्युत्कृत्य दास्यामि फाल्गुनार्थे महीपते ॥ ४७ ॥

एष चापि नरव्याघ्रो मत्कृते जीवितं त्यजेत्।
एष नः समयस्तात तारयेम परस्परम्।
स मां नियुंक्ष्व राजेन्द्र यथा योद्धा भवाम्यहम् ॥ ४८ ॥

युधि०– एवमेतन्महाबाहो यथा वदसि माधव।
सर्वे ह्येते न पर्याप्तास्तव वेगविधारणे ॥ ४९ ॥

न तु त्वामनृतं कर्तुमुत्सहे स्वात्मगौरवात्।
अयुध्यमानः साहाय्यं यथोक्तं कुरु माधव ॥ १४५० ॥

समयस्तु कृतः कश्चिन्मम भीष्मेण संयुगे।
मन्त्रयिष्ये तवार्थाय न तु योत्स्ये कथञ्चन ॥ ५१ ॥

तस्माद्देवव्रतं भूयो वधोपायार्थमात्मनः।
भवता सहिताः सर्वे प्रयाम मधुसूदन ॥ ५२ ॥

सञ्जय०–ततोऽब्रवीन्महाराज वार्ष्णेयः कुरुनन्दनम्।
रोचते मे महाप्राज्ञ राजेन्द्र तव भाषितम् ॥ ५३ ॥

गत्वा शान्तनवं वृद्धं मन्त्रं पृच्छाम भारत।
स वो दास्यति मन्त्रं यं तेन योत्स्यामहे परान् ॥ ५४ ॥

एवमामन्त्र्य ते वीराः पाण्डवाः पाण्डुपूर्वज।
जग्मुस्ते सहिताः सर्वे वासुदेवश्च वीर्यवान् ॥ ५५ ॥

विमुक्तशस्त्रकवचा भीष्मस्य सदनं प्रति।
प्रविश्य च तदा भीष्मं शिरोभिः प्रणिपेदिरे ॥ ५६ ॥

तानुवाच महाबाहुर्भीष्मः कुरुपितामह।
स्वागत तव वार्ष्णेय स्वागतं ते धनञ्जय ॥ ५७ ॥

स्वागतं धर्मपुत्राय भीमाय यमयोस्तथा ॥ ५८ ॥

किं वा कार्यं करोम्यद्य युष्माकं प्रीतिवर्धनम्।
सर्वात्मनाऽपि कर्ताऽस्मि यदपि स्यात्सुदुष्करम् ॥ ५९ ॥

तथा ब्रुवाणं गाङ्गेयं प्रीतियुक्तं पुनः पुनः।
उवाच राजा दीनात्मा प्रीतियुक्तमिदं वचः ॥ १४६० ॥

कथं जयेम सर्वज्ञ कथं राज्यं लभेमहि।
प्रजानां संशयो न स्यात्कथं तन्मे वद प्रभो।
भवान्हि नो वधोपायं ब्रवीतु स्वयमात्मनः ॥ ६१ ॥

भीष्म०– अर्जुनः समरे शूरः पुरस्कृत्य शिखण्डिनम्।
मामेव विशिखैस्तीक्ष्णैरभिद्रवतु दंशितः ॥ ६२ ॥

अमङ्गल्यध्वजे तस्मिन् स्त्रीपूर्वे च विशेषतः।
न प्रहर्तुमभीप्सामि गृहीतेषु कथञ्चन ॥ ६३ ॥

तदन्तरं समासाद्य पाण्डवो मां धनञ्जय।
शरैर्घातयतु क्षिप्रं समन्ताद्भरतर्षभ ॥ ६४ ॥

सञ्जय०–ते तु ज्ञात्वा ततः पार्था जग्मुः स्वशिबिरं प्रति।
अभिवाद्य महात्मानं भीष्मं कुरुपितामहम् ॥ ६५ ॥

तथोक्तवति गाङ्गेये परलोकाय दीक्षिते।
अर्जुनो दुःखसन्तप्तः सव्रीडमिदमब्रवीत् ॥ ६६ ॥

गुरुणा कुरुवृद्धेन कृतप्रज्ञेन धीमता।
पितामहेन सङ्ग्रामे कथं योद्धाऽस्मि माधव ॥ ६७ ॥

क्रीडता हि मया बाल्ये वासुदेव महामनाः।
पांसुरूषितगात्रेण महात्मा परुषीकृतः ॥ ६८ ॥

यस्याहमधिरुह्याङ्कं बालः किल गदाग्रज।
तातेत्यवोचं पितरं पितुः पाण्डोर्महात्मनः ॥ ६९ ॥

नाहं तातस्तव पितुस्तातोऽस्मि तव भारत।
इति मामब्रवीद्बाल्ये यः स वध्यः कथं मया ॥ १४७० ॥

कामं वध्यतु सैन्यं मे नाहं योत्स्ये महात्मना।
जयो वाऽस्तु वधो वा मे कथं वा कृष्ण मन्यसे ॥ ७१ ॥

वासु०– प्रतिज्ञाय वधं जिष्णो पुरा भीष्मस्य संयुगे।
क्षत्रधर्मे स्थितः पार्थ कथं नैनं हनिष्यसि ॥ ७२ ॥

पातयैनं रथात्पार्थ क्षत्रियं युद्धदुर्मदम्।
नाहत्वा युधि गाङ्गेयं विजयस्ते भविष्यति ॥ ७३ ॥

जहि भीष्मं स्थिरो भूत्वा शृणु चेदं वचो मम ॥ ७४ ॥

यथोवाच पुरा शक्रं महाबुद्धिर्बृहस्पतिः।
ज्यायांसमपि चेद्वृद्धं गुणैरपि समन्वितम्।
आततायिनमायान्तं हन्याद्घातकमात्मनः ॥ ७५ ॥

शाश्वतोऽयं स्थितो धर्मः क्षत्रियाणां धनञ्जय।
योद्धव्यं रक्षितव्यं च यष्टव्यं चानसूयुभिः ॥ ७६ ॥

अर्जुन०-शिखण्डी निधनं कृष्ण भीष्मस्य भविता ध्रुवम् ।
दृष्ट्वैव हि सदा भीष्मः पाञ्चाल्यं विनिवर्तते ॥ ७७ ॥
ते वयं प्रमुखे तस्य पुरस्कृत्य शिखण्डिनम् ।
गाङ्गेयं पातयिष्याम उपायेनेति मे मतिः ॥ ७८ ॥
इत्येवं निश्चयं कृत्वा पाण्डवाः सहमाधवाः ।
अनुमान्य महात्मानं प्रययुर्हृष्टमानसाः ।
शयनानि यथास्वानि भेजिरे पुरुषर्षभाः ॥ ७९ ॥

## दशमदिनयुद्धम् , भीष्मपतनम्

(अ.१०८)ततस्ते पाण्डवाः सर्वे सूर्यस्योदयनं प्रति ।
सञ्जय०-अभ्यद्रवन्त सङ्ग्रामे त्यक्त्वा जीवितमात्मनः ॥ १४८० ॥
तथैव कुरवो राजन्भीष्मं कृत्वा महारथम् ।
अग्रतः सर्वसैन्यानां प्रययुः पाण्डवान्प्रति ॥ ८१ ॥
ततः प्रववृते युद्धं तव तेषां च भारत ।
अन्योन्यं निघ्नतां राजन्यमराष्ट्रविवर्धनम् ॥ ८२ ॥
अर्जुनप्रमुखाः पार्थाः पुरस्कृत्य शिखण्डिनम् ।
भीष्मं युद्धेऽभ्यवर्तन्त किरन्तो विविधान् शरान् ॥ ८३ ॥
तं शिखण्डी त्रिभिर्बाणैरभ्यविध्यत्स्तनान्तरे ।
आशीविषमिव क्रुद्धं कालसृष्टमिवान्तकम् ॥ ८४ ॥
स तेनातिभृशं विद्धः प्रेक्ष्य भीष्मः शिखंडिनम् ।
अनिच्छन्निव सङ्क्रुद्धः प्रहसन्निदमब्रवीत् ॥ ८५ ॥
काममभ्यस वा मा वा न त्वां योत्स्ये कथंचन ।
यैव हि त्वं कृता धात्रा सैव हि त्व शिखंडिनी ॥ ८६ ॥
तस्य तद्वचनं श्रुत्वा शिखण्डी क्रोधमूर्छितः ।
उवाचैनं तथा भीष्मं सृक्किणी परिसंलिहन् ॥ ८७ ॥
जानामि त्वां महाबाहो क्षत्रियाणां क्षयंकरम् ।
मया श्रुतं च ते युद्धं जामदग्न्येन वै सह ॥ ८८ ॥

दिव्यश्च ते प्रभावोऽयं मया च बहुशः श्रुतः।
जानन्नपि प्रभावं ते योत्स्येऽद्याहं त्वया सह ॥ ८९ ॥
ध्रुवं च त्वां हनिष्यामि शपे सत्येन तेऽग्रतः।
एतच्छ्रुत्वा च मद्वाक्यं यत्कृत्यं तत्समाचर ॥ १४९० ॥
काममभ्यस वा मा वा न मे जीवन्प्रमोक्ष्यसे।
सुदृष्टः क्रियतां भीष्म लोकोऽयं समितिञ्जय ॥ ९१ ॥
तस्य तद्वचनं श्रुत्वा सव्यसाची महारथः।
कालोऽयमिति संचिन्त्य शिखण्डिनमचोदयत् ॥ ९२ ॥
अहं त्वामनुयास्यामि परान्विद्रावयन् शरैः।
अभिद्रव सुसंरब्धो भीष्मं भीमपराक्रमम् ॥ ९३ ॥
न हि ते संयुगे पीडां शक्तः कर्तुं महाबलः।
तस्मादद्य महाबाहो यत्नाद्भीष्ममभिद्रव ॥ ९४ ॥
अहत्वा समरे भीष्मं यदि यास्यसि मारिष।
अवहास्योऽस्य लोकस्य भविष्यसि मया सह ॥ ९५ ॥
नावहास्या यथा वीर भवेम परमाहवे।
तथा कुरु रणे यत्नं साधयस्व पितामहम् ॥ ९६ ॥
अहं ते रक्षणं युद्धे करिष्यामि महाबल।
वारयन्रथिनः सर्वान्साधयस्व पितामहम् ॥ ९७ ॥
(अ.१०९)अनेक शतसाहस्रास्तावकानां महारथाः।
सञ्जय०–अभ्यवर्तन्त युद्धाय पुरस्कृत्य पितामहम् ॥ ९८ ॥
यथाप्रतिज्ञं कौरव्य स चापि समितिञ्जयः।
पार्थानामकरोद्भीष्मः सततं समिति क्षयम् ॥ ९९ ॥
न हि भीष्मं महेष्वासं पाण्डवाः पाण्डुपूर्वज।
अशक्नुवन्रणे जेतुं पाशहस्तमिवान्तकम् ॥ १५०० ॥
अथोपायान्महाराज सव्यसाची धनञ्जयः।
त्रासयन्रथिनः सर्वान्बीभत्सुरपराजितः ॥ १ ॥

सिंहवद्विनदन्नुच्चैर्धनुर्ज्यां विक्षिपन्मुहुः।
शरौघान्विसृजन्पार्थो व्यचरत्कालवद्रणे ॥ २ ॥

तस्य शब्देन वित्रस्तास्तावका भरतर्षभ।
सिंहस्येव मृगा राजन्व्यद्रवन्त महाभयात् ॥ ३ ॥

जयन्तं पाण्डवं दृष्ट्वा त्वत्सैन्यं चाभिपीडितम्।
दुर्योधनस्ततो भीष्ममब्रवीद्भृशपीडितः ॥ ४ ॥

एष पाण्डुसुतस्तात श्वेताश्वः कृष्णसारथिः।
दहते मामकान्सर्वान्कृष्णवर्त्मेव काननम् ॥ ५ ॥

वध्यमानस्य सैन्यस्य सर्वैरेतैर्महारथैः।
नान्यां गतिं प्रपश्यामि स्थाने युद्धे च भारत ॥ ६ ॥

ऋते त्वां पुरुषव्याघ्र देवतुल्यपराक्रम।
पर्याप्तस्तु भवान् शीघ्रं पीडितानां गतिर्भव ॥ ७ ॥

एवमुक्तो महाराज पिता देवव्रतस्तव।
चिन्तयित्वा मुहूर्तं तु कृत्वा निश्चयमात्मनः।
तव संधारयन्पुत्रमब्रवीच्छान्तनोः सुतः ॥ ८ ॥

दुर्योधन विजानीहि स्थिरो भूत्वा विशांपते।
पूर्वकाल तव मया प्रतिज्ञातं महाबल ॥ ९ ॥

हत्वा दशसहस्राणि क्षत्रियाणां महात्मनाम्।
संग्रामाद्व्यपयातव्यमेतत्कर्म ममाह्निकम् ॥ १५१० ॥

इति तत्कृतवांश्चाहं यथोक्तं भरतर्षभ।
अद्य चापि महत्कर्म प्रकरिष्ये महाबल ॥ ११ ॥

अहं वाऽद्य हतः शेष्ये हनिष्ये वाऽद्य पाण्डवान् ॥ १२ ॥

अद्य ते पुरुषव्याघ्र प्रतिमोक्ष्ये ऋणं तव।
भर्तृपिण्डकृत राजन्निहतः पृतनामुखे ॥ १३ ॥

इत्युक्त्वा भरतश्रेष्ठ क्षत्रियान्प्रवपञ्छरैः।
आससाद दुराधर्षः पाण्डवानामनीकिनीम् ॥ १४ ॥

अनीकमध्ये तिष्ठन्तं गाङ्गेयं भरतर्षभ।
आशीविषमिव क्रुद्ध पाण्डवाः प्रत्यवारयन् ॥ १५ ॥

(अ.११५)दशमेऽहनि तस्मिंस्तु भीष्मार्जुनसमागमे।
अवर्तत महारौद्रः सततं समिति क्षयः ॥ १६ ॥

तस्मिन्नयुतशो राजन्भूयशश्च परंतप.।
भीष्मः शान्तनवो योधाञ्जघान परमास्त्रवित् ॥ १७ ॥

येषामज्ञातकल्पानि नामगोत्राणि पार्थिव।
ते हतास्तत्र भीष्मेण शूरा. सर्वेऽनिवर्तिन. ॥ १८ ॥

दशाहानि ततस्तप्त्वा भीष्मः पाण्डववाहिनीम्।
निरविद्यत धर्मात्मा जीवितेन परंतप ॥ १९ ॥

स क्षिप्र वधमन्विच्छन्नात्मनोऽभिमुखो रणे।
न हन्या मानवश्रेष्ठान्संग्रामे सुबहूनिति ॥ १५२० ॥

चिन्तयित्वा महाबाहु. पिता देवव्रतस्तव।
अभ्याशस्थं महाराज पाण्डवं वाक्यमब्रवीत् ॥ २१ ॥

निर्विण्णोऽस्मि भृशं तात देहेनानेन भारत।
घ्नतश्च मे गत. काल' सुबहून्प्राणिनो रणे ॥ २२ ॥

तस्मात्पार्थं पुरोधाय पञ्चालान्सृंजयांस्तथा।
मद्वधे क्रियतां यत्नो मम चेदिच्छसि प्रियम् ॥ २३ ॥

धृष्टद्युम्नस्ततो राजन्पाण्डवश्च युधिष्ठिरः।
श्रुत्वा भीष्मस्य ता वाच चोदयामासतुर्बलम् ॥ २४ ॥

अभिद्रवध्व युद्धयध्वं भीष्मं जयत संयुगे।
रक्षिताः सत्यसन्धेन जिष्णुना रिपुजिष्णुना ॥ २५ ॥

अयं चापि महेष्वासः पार्षतो वाहिनीपतिः।
भीमसेनश्च समरे पालयिष्यति वो ध्रुवम् ॥ २६ ॥

मा वो भीष्माद्भयं किञ्चिदस्त्वद्य युधि सृञ्जयाः।
ध्रुवं भीष्मं विजेष्यामः पुरस्कृत्य शिखण्डिनम् ॥ २७ ॥

(अ.११६) ततोऽर्जुनो महाराज भीष्ममभ्यद्रवद्द्रुतम्।
शिखण्डिनं पुरस्कृत्य ततो युद्धमवर्तत ॥ २८ ॥
ततस्ते तावकाः शूराः पाण्डवं रभसं युधि।
समभ्यधावन्क्रोशन्तस्तदद्भुतमिवाभवत् ॥ २९ ॥
नानाविधान्यनीकानि पुत्राणां ते जनाधिप।
अर्जुनो व्यधमत्काले दिवीवाभ्राणि मारुतः ॥ १५३० ॥
शिखण्डी तु समासाद्य भरतानां पितामहम्।
इषुभिस्तूर्णमव्यग्रो बहुभिः स समाचिनोत् ॥ ३१ ॥
(अ.११९) शिखण्डी तु महाबाणान् यान्मुमोच महारथः।
न चक्रुस्ते रुजं तस्य स्वर्णपुङ्खाः शिलाशिताः ॥ ३२ ॥
ततः किरीटी संरब्धो भीष्ममेवाभ्यधावत।
शिखंडिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत् ॥ ३३ ॥
सोऽन्यत्कार्मुकमादाय गाङ्गेयो वेगवत्तरम्।
तदप्यस्य शितैर्बाणैस्त्रिभिश्चिच्छेद फाल्गुनः ॥ ३४ ॥
एवं स पाण्डवः क्रुद्ध आत्तमात्तं पुनःपुनः।
धनुश्चिच्छेद भीष्मस्य सव्यसाची परन्तपः ॥ ३५ ॥
स छिन्नधन्वा संक्रुद्धः सृक्किणी परिसंलिहन्।
शक्तिं जग्राह तरसा गिरीणामपि दारणीम्।
तां च चिक्षेप संक्रुद्धः फाल्गुनस्य रथं प्रति ॥ ३६ ॥
तामापतन्तीं संप्रेक्ष्य ज्वलन्तीमशनीमिव।
समादत्त शितान्भल्लान्पञ्च पाण्डवनन्दनः ॥ ३७ ॥
तस्य चिच्छेद तां शक्तिं पञ्चधा पञ्चभिः शरैः ॥ ३८ ॥
छिन्नां तां शक्तिमालोक्य भीष्मः क्रोधसमन्वितः।
अचिन्तयद्रणे वीरो बुद्ध्या परपुरञ्जयः ॥ ३९ ॥
शक्तोऽहं धनुषैकेन निहन्तुं सर्वपाण्डवान्।
यद्येषा न भवेद्गोप्ता विष्वक्सेनो महाबलः ॥ १५४० ॥

कारणद्वयमास्थाय नाहं योत्स्यामि पाण्डवान् ।
अवध्यत्वाच्च पाण्डूनां स्त्रीभावाच्च शिखण्डिनः ॥ ४१ ॥

पित्रा तुष्टेन मे पूर्वं यदा कालीमुदावहम् ।
स्वच्छन्दमरणं दत्तमवध्यत्वं रणे तथा ॥ ४२ ॥

तस्मान्मृत्युमहं मन्ये प्राप्तकालमिवात्मनः ॥ ४३ ॥

एवं ज्ञात्वा व्यवसितं भीष्मस्यामिततेजसः ।
ऋषयो वसवश्चैव वियत्स्था भीष्ममब्रुवन् ॥ ४४ ॥

यत्ते व्यवसितं तात तदस्माकमपि प्रियम् ।
तत्कुरुष्व महाराज युद्धे बुद्धिं निवर्तय ॥ ४५ ॥

अस्य वाक्यस्य निधने प्रादुरासीच्छिवोऽनिलः ।
अनुलोमः सुगन्धी च पृषतैश्च समन्वित. ॥ ४६ ॥

देवदुन्दुभयश्चैव संप्रणेदुर्महास्वना. ।
पपात पुष्पवृष्टिश्च भीष्मस्योपरि मारिष ॥ ४७ ॥

ततः शान्तनवो भीष्मो बीभत्सुं नात्यवर्तत ।
भिद्यमानः शितैर्बाणै. सर्वावरणभेदिभि. ॥ ४८ ॥

ततः प्रहस्य बीभत्सुर्व्याक्षिपन्गांडिव धनुः ।
गाङ्गेयं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ॥ ४९ ॥

पुनः पुन. शतैरेनं त्वरमाणो धनञ्जयः ।
सर्वगात्रेषु संक्रुद्ध. सर्वमर्मस्वताडयत् ॥ १५५० ॥

सोऽतिविद्धो महेष्वासो दु शासनमभाषत ॥ ५१ ॥

वज्रदण्डसमस्पर्शा वज्रवेगदुरासदाः ।
मम प्राणानारुजन्ति नेमे बाणाः शिखण्डिनः ॥ ५२ ॥

भुजगा इव संक्रुद्धा लेलिहाना विषोल्बणा. ।
समाविशंति मर्माणि नेमे बाणाः शिखण्डिन ॥ ५३ ॥

अर्जुनस्य इमे बाणा नेमे बाणा. शिखण्डिन ।
कृन्तन्ति मम गात्राणि माघमासे गवा इव ॥ ५४ ॥

सञ्जय०-योधानामयुतं हत्वा तस्मिन्स दशमेऽहनि।
अतिष्ठदाहवे भीष्मो भिद्यमानेषु मर्मसु ॥ ५५ ॥

न तस्यासीदनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरम्।
एवंभूतस्तव पिता शरैर्विशकलीकृत. ॥ ५६ ॥

शिताग्रै. फाल्गुनेनाजौ प्राक्शिराः प्रापतद्रथात्।
किञ्चिच्छेषे दिनकरे पुत्राणां तव पश्यताम् ॥ ५७ ॥

हाहेति दिवि देवानां पार्थिवानां च भारत।
पतमाने रथाद्भीष्मे बभूव सुमहास्वनः ॥ ५८ ॥

संपतन्तमभिप्रेक्ष्य महात्मानं पितामहम्।
सह भीष्मेण सर्वेषां प्रापतन् हृदयानि नः ॥ ५९ ॥

स पपात महाबाहुर्वसुधामनुनादयन्।
इन्द्रध्वज इवोत्सृष्ट. केतु सर्वधनुष्मताम्।
धरणीं न स पस्पर्श शरसङ्घै. समावृत. ॥ १५६० ॥

शरतल्पे महेष्वासं शयानं पुरुषर्षभम्।
रथात्प्रपतितं चैनं दिव्यो भाव. समाविशत् ॥ ६१ ॥

अभ्यवर्षच्च पर्जन्यः प्राकम्पत च मेदिनी।
पतन्स ददृशे चापि दक्षिणेन दिवाकरम् ॥ ६२ ॥

संज्ञां चोपालभद्वीरः कालं सञ्चिन्त्य भारत।
अन्तरिक्षे च शुश्राव दिव्या वाचः समन्तत. ॥ ६३ ॥

कथं महात्मा गाङ्गेय सर्वशस्त्रभृतां वरः।
कालं कर्ता नरव्याघ्र. सप्राप्ते दक्षिणायने ॥ ६४ ॥

स्थितोऽस्मीति च गाङ्गेयस्तच्छ्रुत्वा वाक्यमब्रवीत् ॥ ६५ ॥

धारयामास च प्राणान्पतितोऽपि महीतले।
उत्तरायणमन्विच्छन्भीष्मः कुरुपितामह ॥ ६६ ॥
तस्य तन्मतमाज्ञाय गङ्गा हिमवतः सुता।
महर्षीन्हंसरूपेण प्रेषयामास तत्र वै ॥ ६७ ॥

ततः संपातिनो हंसास्त्वरिता मानसौकसः।
आजग्मुः सहिता द्रष्टुं भीष्मं कुरुपितामहम्।
यत्र शेते नरश्रेष्ठः शरतल्पे पितामहः ॥ ६८ ॥

ते तु भीष्मं समासाद्य ऋषयो हंसरूपिणः।
अपश्यञ्छरतल्पस्थं भीष्मं कुरुकुलोद्वहम् ॥ ६९ ॥

ते तं दृष्ट्वा महात्मानं कृत्वा चापि प्रदक्षिणम्।
गाङ्गेयं भरतश्रेष्ठं दक्षिणेन च भास्करम् ॥ १५७० ॥

इतरेतरमामन्त्र्य प्राहुस्तत्र मनीषिणः।
भीष्मः कथं महात्मा सन्संस्थाता दक्षिणायने ॥ ७१ ॥

इत्युक्त्वा प्रस्थिता हंसा दक्षिणामभितो दिशम् ॥ ७२ ॥
संप्रेक्ष्य वै महाबुद्धिश्चिन्तयित्वा च भारत।
तानब्रवीच्छान्तनवो नाहं गन्ता कथञ्चन।
दक्षिणावर्त आदित्ये एतन्मे मनसि स्थितम् ॥ ७३ ॥

गमिष्यामि स्वकं स्थानमासीद्यन्मे पुरातनम्।
उदगायन आदित्ये हंसाः सत्यं ब्रवीमि वः ॥ ७४ ॥

धारयिष्याम्यहं प्राणानुत्तरायणकाङ्क्षया।
ऐश्वर्यभूतः प्राणानामुत्सर्गो हि यतो मम ॥ ७५ ॥

सञ्जय०—तस्मिन्हते महासत्त्वे भरतानां पितामहे।
न किञ्चित्प्रत्यपद्यन्त पुत्रास्ते भरतर्षभ ॥ ७६ ॥

संमोहश्चैव तुमुलः कुरूणामभवत्तदा।
कृपदुर्योधनमुखा निःश्वस्य रुरुदुस्ततः ॥ ७७ ॥

विषादाच्च चिरं कालमतिष्ठन्विगतेन्द्रियाः।
दध्युश्चैव महाराज न युद्धे दधिरे मनः ॥ ७८ ॥
ऊरुग्राहगृहीताश्च नाभ्यधावन्त पाण्डवान् ॥ ७९ ॥

अवध्ये शान्तनोः पुत्रे हते भीष्मे महौजसि।
अभावः सहसा राजन्कुरुराजस्य तर्कितः ॥ १५८० ॥

सेनयोरुभयोश्चापि गाङ्गेये निहते विभौ।
संन्यस्य वीराः शस्त्राणि प्राध्यायन्त समंततः ॥ ८१ ॥

प्राक्रोशन्प्राद्रवंश्चान्ये जग्मुर्मोहं तथापरे।
क्षत्रं चान्येऽभ्यनिन्दन्त भीष्मं चान्येऽभ्यपूजयन् ॥ ८२ ॥

ऋषयः पितरश्चैव प्रशशंसुर्महाव्रतम्।
भरतानां च ये पूर्वे ते चैनं प्रशशंसिरे ॥ ८३ ॥

महोपनिषदं चैव योगमास्थाय वीर्यवान्।
जपन् शान्तनवो धीमान्कालाकाङ्क्षी स्थितोऽभवत् ॥८४॥

भीष्माय उपधानदानम्

(अ.१२०)भीष्मे रथात्प्रपतिते प्रच्युते धरणीतले।
हाहेति तुमुलः शब्दो भूतानां समपद्यत ॥ ८५ ॥

सीमावृक्षे निपतिते कुरूणां समितिंजये।
सेनयोरुभयो राजन्क्षत्रियान्भयमाविशत् ॥ ८६ ॥

अयं ब्रह्मविदां श्रेष्ठो ह्ययं ब्रह्मविदां वरः।
इत्यभाषन्त भूतानि शयानं पुरुषर्षभम् ॥ ८७ ॥

अयं पितरमाज्ञाय कामार्तं शन्तनुं पुरा।
ऊर्ध्वरेतसमात्मानं चकार पुरुषर्षभः ॥ ८८ ॥

इति स्म शरतल्पस्थं भरतानां महत्तमम्।
ऋषयस्त्वभ्यभाषन्त सहिताः सिद्धचारणैः ॥ ८९ ॥

दृष्ट्वा च पतितं भीष्मं पुत्रो दुःशासनस्तव।
उत्तमं जवमास्थाय द्रोणानीकमुपाद्रवत् ॥ १५९० ॥

ततो द्रोणाय निहतं भीष्ममाचष्ट कौरवः।
द्रोणस्तत्राप्रियं श्रुत्वा मुमोह भरतर्षभ ॥ ९१ ॥

स संज्ञामुपलभ्याशु भारद्वाजः प्रतापवान्।
निवारयामास तदा स्वान्यनीकानि मारिष ॥ ९२ ॥

विनिवृत्तान्कुरून्दृष्ट्वा पाण्डवाऽपि स्वसैनिकान्।
दूतैः शीघ्राश्वसंयुक्तैः समन्तात्पर्यवारयन् ॥ ९३ ॥
निवृत्तेषु च सैन्येषु पारंपर्येण सर्वशः।
निर्मुक्तकवचाः सर्वे भीष्ममीयुर्नराधिपाः ॥ ९४ ॥
व्युपरम्य ततो युद्धाद्योधाः शतसहस्रशः।
उपतस्थुर्महात्मानं प्रजापतिमिवामराः ॥ ९५ ॥
ते तु भीष्मं समासाद्य शयानं भरतर्षभम्।
अभिवाद्यावतिष्ठन्त पाण्डवाः कुरुभिः सह ॥ ९६ ॥
अथ पाण्डून्कुरूंश्चैव प्रणिपत्याग्रतः स्थितान्।
अभ्यभाषत धर्मात्मा भीष्मः शान्तनवस्तदा ॥ ९७ ॥
स्वागतं वो महाभागाः स्वागतं वो महारथाः।
तुष्यामि दर्शनाच्चाहं युष्माकममरोपमाः ॥ ९८ ॥
अभिमन्त्र्याथ तानेवं शिरसालम्बताऽब्रवीत्।
शिरो मे लम्बतेऽत्यर्थमुपधानं प्रदीयताम् ॥ ९९ ॥
ततो नृपाः समाजह्रुस्तनूनि च मृदूनि च।
उपधानानि मुख्यानि नैच्छत्तानि पितामहः ॥ १६०० ॥
अथाब्रवीन्नरव्याघ्रः प्रहसन्निव तान्नृपान्।
नैतानि वीरशय्यासु युक्तरूपाणि पार्थिवाः ॥ १ ॥
ततो वीक्ष्य नरश्रेष्ठमभ्यभाषत पाण्डवम्।
धनञ्जयं दीर्घबाहुं सर्वलोकमहारथम् ॥ २ ॥
धनञ्जय महाबाहो शिरो मे तात लम्बते।
दीयतामुपधानं वै यद्युक्तमिह मन्यसे ॥ ३ ॥
फाल्गुनोऽपि तथेत्युक्त्वा व्यवसायमरोचयत्।
गृह्यानुमन्त्र्य गाण्डीवं शरान्सन्नतपर्वणः ॥ ४ ॥
अनुमान्य महात्मानं भरतानां महारथम्।
त्रिभिस्तीक्ष्णैर्महावेगैरन्वगृह्णाच्छिरः शरैः ॥ ५ ॥

अभिप्राये तु विदिते धर्मात्मा सव्यसाचिना।
अतुष्यद्भरतश्रेष्ठो भीष्मो धर्मार्थतत्त्ववित् ॥ ६ ॥
उपधानेन दत्तेन प्रत्यनन्दद्धनञ्जयम्।
प्राह सर्वान्समुद्वीक्ष्य भरतान्भारतं प्रति ॥ ७ ॥
कुन्तीपुत्रं युधां श्रेष्ठं सुहृदां प्रीतिवर्धनम्।
शयनस्यानुरूपं मे पाण्डवोपहितं त्वया ॥ ८ ॥
एवमुक्त्वा तु बीभत्सुं सर्वास्तानब्रवीद्वचः।
पश्यध्वमुपधानं मे पाण्डवेनाभिसंधितम् ॥ ९ ॥
शिश्येऽहमस्यां शय्यायां यावदावर्तनं रवेः।
परिखाः खन्यतामत्र ममावसदने नृपाः ॥ १६१० ॥
उपासिष्ये विवस्वन्तमेवं शरशताचितः।
उपारमध्वं संग्रामाद्वैरमुत्सृज्य पार्थिवाः ॥ ११ ॥
सञ्जय०–उपातिष्ठन्नथो वैद्याः शल्योद्धरणकोविदाः।
सर्वोपकरणैर्युक्ताः कुशलैः साधुशिक्षिताः ॥ १२ ॥
तान्दृष्ट्वा जाह्नवीपुत्रः प्रोवाच तनयं तव।
धनं दत्त्वा विसृज्यन्तां पूजयित्वा चिकित्सकाः ॥ १३ ॥
एवंगते मयेदानीं वैद्यैः कार्यमिहास्ति किम्।
क्षत्रधर्मे प्रशस्तां हि प्राप्तोऽस्मि परमां गतिम् ॥ १४ ॥
नैष धर्मो महीपालाः शरतल्पगतस्य मे।
एभिरेव शरैश्चाहं दग्धव्योऽस्मि नराधिपाः ॥ १५ ॥
तच्छ्रुत्वा वचनं तस्य पुत्रो दुर्योधनस्तव।
वैद्यान्विसर्जयामास पूजयित्वा यथार्हत ॥ १६ ॥
ततस्ते विस्मयं जग्मुर्नानाजनपदेश्वराः।
स्थितिं धर्मे परां दृष्ट्वा भीष्मस्यामिततेजसः ॥ १७ ॥
तेऽभिवाद्य ततो भीष्मं कृत्वा च त्रि प्रदक्षिणम्।
विधाय रक्षां भीष्मस्य सर्व एव समन्ततः ॥ १८ ॥

वीराः स्वशिबिराण्येव ध्यायन्त· परमातुराः।
निवेशायाभ्युपागच्छन्सायाह्ने रुधिरोक्षिताः ॥ १९ ॥
निविष्टान्पाण्डवांश्चैव प्रीयमाणान्महारथान् ।
भीष्मस्य पतने हृष्टानुपगम्य महाबल ।
उवाच माधव· काले धर्मपुत्रं युधिष्ठिरम् ॥ १६२० ॥
दिष्ट्या जयसि कौरव्य दिष्ट्या भीष्मो निपातितः।
अवध्यो मानुषैरेव सत्यसन्धो महारथ· ॥ २१ ॥
अथवा दैवतैः सार्ध सर्वशास्त्रस्य पारगः।
त्वा तु चक्षुर्हणं प्राप्य दग्धो घोरेण चक्षुषा ॥ २२ ॥
एवमुक्तो धर्मराजः प्रत्युवाच जनार्दनम् ॥ २३ ॥
तव प्रसादाद्विजयः क्रोधात्तव पराजयः।
त्वं हि नः शरणं कृष्ण भक्तानामभयङ्करः ॥ २४ ॥
अनाश्चर्यो जयस्तेषां येषां त्वमसि केशव ।
रक्षिता समरे नित्यं नित्यं चापि हिते रत· ।
सर्वथा त्वा समासाद्य नाश्चर्यमिति मे मति· ॥ २५ ॥
एवमुक्तः प्रत्युवाच स्मयमानो जनार्दनः।
तवैवैतद्युक्तरूपं वचनं पार्थिवोत्तम ॥ २६ ॥

## जलधारया भीष्मतृप्तिः, दुर्योधनाय भीष्मोपदेशः

(अ.१२१) व्युष्टायां तु महाराज शर्वर्यां सर्वपार्थिवा·।
पाण्डवा धार्तराष्ट्राश्च उपातिष्ठन्पितामहम् ॥ २७ ॥
तं वीरशयने वीरं शयानं कुरुसत्तम।
अभिवाद्योपतस्थुर्वै क्षत्रिया क्षत्रियर्षभम् ॥ २८ ॥
भीष्मस्तु वेदनां धैर्यान्निगृह्य भरतर्षभ ।
पानीयमिति संप्रेक्ष्य राज्ञस्तान्प्रत्यभाषत ॥ २९ ॥
ततस्ते क्षत्रिया राजन्नुपाजह्रु· समन्ततः।
भक्ष्यानुच्चावचान्राजन्वारिकुम्भांश्च शीतलान् ॥ १६३० ॥

उपानीतं तु पानीयं दृष्ट्वा शान्तनवोऽब्रवीत् ।
नाद्यातीता मया शक्या भोगाः केचन मानुषाः ॥ ३१ ॥

अपक्रान्तो मनुष्येभ्यः शरशय्यां गतो ह्यहम् ।
प्रतीक्षमाणस्तिष्ठामि निवृत्तिं शशिसूर्ययोः ॥ ३२ ॥

एवमुक्त्वा शान्तनवो निन्दन्वाक्येन पार्थिवान् ।
अभ्यभाषत धर्मात्मा भीष्मः प्रीतो धनञ्जयम् ॥ ३३ ॥

दह्यतीव शरीरं मे संवृतस्य तवेषुभिः ।
मर्माणि परिदूयन्ते मुखं च परिशुष्यति ॥ ३४ ॥

वेदनार्तशरीरस्य प्रयच्छापो ममार्जुन ।
त्वं हि शक्तो महेष्वास दातुमापो यथाविधि ॥ ३५ ॥

अर्जुनस्तु तथेत्युक्त्वा रथमारुह्य वीर्यवान् ।
अधिज्यं बलवत्कृत्वा गाण्डीवं व्याक्षिपद्धनुः ॥ ३६ ॥

संधाय च शरं दीप्तमभिमन्त्र्य स पाण्डवः ।
पर्जन्यास्त्रेण संयोज्य सर्वलोकस्य पश्यतः ।

अविध्यत्पृथिवीं पार्थः पार्श्वे भीष्मस्य दक्षिणे ॥ ३७ ॥

उत्पपात ततो धारा वारिणो विमला शुभा ।
शीतस्यामृतकल्पस्य दिव्यगन्धरसस्य च ॥ ३८ ॥

अतर्पयत्ततः पार्थः शीतया जलधारया ।
भीष्मं कुरूणामृषभं दिव्यकर्मपराक्रमम् ॥ ३९ ॥

कर्मणा तेन पार्थस्य शक्रस्येव विकुर्वतः ।
विस्मयं परमं जग्मुस्ततस्ते वसुधाधिपाः ॥ १६४० ॥

तत्कर्म प्रेक्ष्य बीभत्सोरतिमानुषविक्रमम् ।
संप्रावेपन्त कुरवो गावः शीतार्दिता इव ॥ ४१ ॥

विस्मयाच्चोत्तरीयाणि व्याविध्यन्सर्वतो नृपाः ।
शङ्खदुन्दुभिनिर्घोषस्तुमुलः सर्वतोऽभवत् ॥ ४२ ॥

तृप्त शान्तनवश्चापि राजन्बीभत्सुमब्रवीत्।
सर्वपार्थिववीराणां सन्निधौ पूजयन्निव ॥ ४३ ॥
नैतच्चित्रं महाबाहो त्वयि कौरवनन्दन।
कथितो नारदेनासि पूर्वर्षिरमितद्युते ॥ ४४ ॥
वासुदेवसहायस्त्वं महत्कर्म करिष्यसि।
यन्नोत्सहति देवेन्द्रः सह देवैरपि ध्रुवम् ॥ ४५ ॥
विदुस्त्वां निधनं पार्थ सर्वक्षत्रस्य तद्विदः।
धनुर्धराणामेकस्त्व पृथिव्यां प्रवरो नृषु ॥ ४६ ॥
मनुष्या जगति श्रेष्ठाः पक्षिणा पतगेश्वरः।
सरिता सागरः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ॥ ४७ ॥
आदित्यस्तेजसां श्रेष्ठो गिरीणां हिमवान्वरः।
जातीनां ब्राह्मणः श्रेष्ठः श्रेष्ठस्त्वमसि धन्विनाम् ॥ ४८ ॥

न वै श्रुतं धार्तराष्ट्रेण वाक्यं
मयोच्यमान विदुरेण चैव।
स शेष्यते वै निहतश्चिराय
शास्त्रातिगो भीमबलाभिभूतः ॥ ४९ ॥
एतच्छ्रुत्वा तद्वचः कौरवेन्द्रो
दुर्योधनो दीनमना बभूव।
तमब्रवीच्छान्तनवोऽभिवीक्ष्य
निबोध राजन्भव वीतमन्युः ॥ १६५० ॥

दृष्टं दुर्योधनैतत्ते यथा पार्थेन धीमता।
जलस्य धारा जनिता शीतस्यामृतगन्धिनः ॥ ५१ ॥
एतस्य कर्ता लोकेऽस्मिन्नान्यः कश्चन विद्यते ॥ ५२ ॥
तेन सत्त्ववता संख्ये शूरेणाहवशोभिना।
कृतिना समरे राजन्सन्धिर्भवतु मा चिरम् ॥ ५३ ॥
यावत्कृष्णो महाबाहुः स्वाधीनः कुरुसत्तम।
तावत्पार्थेन शूरेण सन्धिस्ते तात युज्यताम् ॥ ५४ ॥

युद्धं मदन्तमेवास्तु तात संशाम्य पाण्डवैः।
एतत्तु रोचतां वाक्यं यदुक्तोऽसि मयाऽनघ।
एतत् क्षेममहं मन्ये तव चैव कुलस्य च ॥ ५५ ॥

राज्यस्यार्धं दीयतां पाण्डवाना-
मिन्द्रप्रस्थं धर्मराजोऽभियातु।
मा मित्रध्रुक् पार्थिवानां जघन्यः
पापां कीर्तिं प्राप्स्यसे कौरवेन्द्र ॥ ५६ ॥

ममावसानाच्छान्तिरस्तु प्रजानां
संगच्छन्तां पार्थिवा प्रीतिमन्तः।
पिता पुत्रं मातुलं भागिनेयो
भ्राता चैव भ्रातरं प्रैतु राजन् ॥ ५७ ॥

न चेदेवं प्राप्तकालं वचो मे
मोहाविष्टः प्रतिपत्स्यस्यबुद्ध्या।
तप्स्यस्यन्ते एतदन्ताः स्थ सर्वे
सत्यामेतां भारतीमीरयामि ॥ ५८ ॥

एतद्वाक्यं सौहृदादापगेयो
मध्ये राज्ञां भारतं श्रावयित्वा।
तूष्णीमासीच्छल्यसन्तप्तमर्मा
योज्यात्मानं वेदनां संनियम्य ॥ ५९ ॥

धर्मार्थसहितं वाक्यं श्रुत्वा हितमनामयम्।
नारोचयत पुत्रस्ते मुमूर्षुरिव भेषजम् ॥ १६६० ॥

## भीष्मकर्णसंवादः

(अ.१२२)ततस्ते पार्थिवाः सर्वे जग्मुः स्वानालयान्पुनः।
तूष्णींभूते महाराज भीष्मे शान्तनुनन्दने ॥ ६१ ॥

श्रुत्वा तु निहतं भीष्मं राधेयः पुरुषर्षभः।
ईषदागतसंत्रासस्त्वरयोपजगाम ह ॥ ६२ ॥

स ददर्श महात्मानं शरतल्पगतं तदा ।
जन्मशय्यागतं वीरं कार्तिकेयमिव प्रभुम् ॥ ६३ ॥
निमीलिताक्षं त वीरं साश्रुकण्ठस्तदा वृषः ।
भीष्म भीष्म महाबाहो इत्युवाच महाद्युतिः ॥ ६४ ॥
राधेयोऽहं कुरुश्रेष्ठ नित्यमक्षिगतस्तव ।
द्वेष्योऽहं तव सर्वत्र इति चैनमुवाच ह ॥ ६५ ॥
तच्छ्रुत्वा कुरुवृद्धो हि बली संवृतलोचनः ।
शनैरुद्वीक्ष्य सस्नेहमिदं वचनमब्रवीत् ॥ ६६ ॥
रहितं धिष्ण्यमालोक्य समुत्सार्य च रक्षिणः ।
पितेव पुत्रं गाङ्गेयः परिरभ्यैकपाणिना ॥ ६७ ॥
एह्येहि मे विप्रतीप स्पर्धसे त्वं मया सह ।
यदि मां नाधिगच्छेथा न ते श्रेयो ध्रुवं भवेत् ॥ ६८ ॥
कौन्तेयस्त्व न राधेयो न तवाधिरथः पिता ।
सूर्यजस्त्वं महाबाहो विदितो नारदान्मया ॥ ६९ ॥
कृष्णद्वैपायनाच्चैव तच्च सत्यं न संशयः ।
न च द्वेषोऽस्ति मे तात त्वयि सत्यं ब्रवीमि ते ॥ १६७० ॥
तेजोवधनिमित्तं तु परुषं त्वाऽहमब्रुवम् ।
अकस्मात्पाण्डवान्सर्वानवाक्षिपसि सुव्रत ॥ ७१ ॥
येनासि बहुशो राज्ञा चोदितः सूतनन्दन ।
जातोऽसि धर्मलोपेन ततस्ते बुद्धिरीदृशी ॥ ७२ ॥
नीचाश्रयान्मत्सरेण द्वेषिणी गुणिनामपि ।
तेनासि बहुशो रूक्षं श्रावितः कुरुसंसदि ॥ ७३ ॥
जानामि समरे वीर्यं शत्रुभिर्दुःसहं भुवि ।
ब्रह्मण्यतां च शौर्यं च दाने च परमां स्थितिम् ॥ ७४ ॥
न त्वया सदृशः कश्चित्पुरुषेष्वमरोपम ।
कुलभेदभयाच्चाहं सदा परुषमुक्तवान् ॥ ७५ ॥

व्यपनीतोऽद्य मन्युर्मे यस्त्वां प्रति पुरा कृतः।
दैवं पुरुषकारेण न शक्यमतिवर्तितुम् ॥ ७६ ॥

सोदर्याः पाण्डवा वीरा भ्रातरस्तेऽरिसूदन।
संगच्छ तैर्महाबाहो मम चेदिच्छसि प्रियम् ॥ ७७ ॥

मया भवतु निर्वृत्तं वैरमादित्यनन्दन।
पृथिव्यां सर्वराजानो भवन्त्वद्य निरामया ॥ ७८ ॥

कर्ण०- जानाम्येव महाबाहो सर्वमेतन्न संशयः।
यथा वदसि मे भीष्म कौन्तेयोऽहं न सूतजः ॥ ७९ ॥

अवकीर्णस्त्वहं कुन्त्या सूतेन च विवर्धितः।
भुक्त्वा दुर्योधनैश्वर्यं न मिथ्या कर्तुमुत्सहे ॥ १६८० ॥

वसुदेवसुतो यद्वत्पाण्डवाय दृढव्रतः।
वसु चैव शरीरं च पुत्रदारं तथा यशः।
सर्वं दुर्योधनस्यार्थे त्यक्तं मे भूरिदक्षिण ॥ ८१ ॥

मा चैतद्व्याधिमरणं क्षत्रं स्यादिति कौरव।
कोपिताः पाण्डवा नित्यं समाश्रित्य सुयोधनम् ॥ ८२ ॥

अवश्यभावी ह्यर्थोऽयं यो न शक्यो निवर्तितुम्।
दैवं पुरुषकारेण को निवर्तितुमुत्सहेत् ॥ ८३ ॥

न च शक्यमवस्रष्टुं वैरमेतत्सुदारुणम्।
धनञ्जयेन योत्स्येऽहं स्वधर्मप्रीतमानसः ॥ ८४ ॥

अनुजानीष्व मां तात युद्धाय कृतनिश्चयम्।
अनुज्ञातस्त्वया वीर युद्ध्येयमिति मे मतिः ॥ ८५ ॥

दुरुक्तं विप्रतीपं वा रभसाच्चापलात्तथा।
यन्मयेह कृतं किञ्चित्तन्मे त्वं क्षन्तुमर्हसि ॥ ८६ ॥

भीष्म०- न चेच्छक्यमवस्रष्टुं वैरमेतत् सुदारुणम्।
अनुजानामि कर्ण त्वां युद्ध्यस्व स्वर्गकाम्यया ॥ ८७ ॥

निर्मन्युर्गतसंरम्भः कृतकर्मा रणे स्म ह।
यथाशक्ति यथोत्साहं सता वृत्तेषु वृत्तवान् ॥ ८८ ॥

अहं त्वामनुजानामि यदिच्छसि तदाप्नुहि।
क्षत्रधर्मजिताँल्लोकानवाप्स्यसि धनञ्जयात् ॥ ८९ ॥

युध्यस्व निरहङ्कारो बलवीर्यव्यपाश्रयः।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ १६९० ॥

प्रशमे हि कृतो यत्नः सुमहान्सुचिरं मया।
न चैव शकितः कर्तुं कर्ण सत्यं ब्रवीमि ते ॥ १६९१ ॥

इत्युक्तवति गाङ्गेये अभिवाद्योपमन्त्र्य च।
राधेयो रथमारुह्य प्रायात्तव सुतं प्रति ॥ १६९२ ॥

आदिपर्वतः श्लोकाः ॥ ६६८७ ॥

इति श्रीमहाभारतसारे भीष्मपर्व समाप्तम्।

---

# महाभारतसारः

## ७. द्रोणपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्॥

### द्रोणस्य सेनापतित्वम्, द्रोणवधकथनम्

वैश०- निहतं पितरं श्रुत्वा धृतराष्ट्रो जनाधिपः।
(अ. १) लेभे न शान्तिं कौरव्यश्चिन्ताशोकपरायण॰॥ १॥

तस्य चिन्तयतो दुःखमनिशं पार्थिवस्य तत्।
आजगाम विशुद्धात्मा पुनर्गावल्गणिस्तदा॥ २॥
शिबिरात् सञ्जयं प्राप्तं निशि नागाह्वयं पुरम्।
आम्बिकेयो महाराज धृतराष्ट्रोऽन्वपृच्छत॥ ३॥
देवव्रते तु निहते कुरूणामृषभे तदा।
किमकार्षुर्नृपतयस्तन्ममाचक्ष्व सञ्जय॥ ४॥
सञ्जय०-निहते तु तदा भीष्मे राजन् सत्यपराक्रमे।
तावकाः पाण्डवेयाश्च प्राध्यायन्त पृथक् पृथक्॥ ५॥
मोहात् तव सपुत्रस्य वधाच्छान्तनवस्य च।
कौरव्या मृत्युसाद्भूताः सहिताः सर्वराजभिः॥ ६॥
अजावय इवागोपा वने श्वापदसंकुले।
भृशमुद्विग्नमनसो हीना देवव्रतेन ते॥ ७॥
पतिते भरतश्रेष्ठे बभूव कुरुवाहिनी।
द्यौरिवापेतनक्षत्रा हीनं खमिव वायुना॥ ८॥
विपन्नसस्येव मही वाक् चैवासंस्कृता तथा।
आसुरीव यथा सेना निगृहीते नृपे बलौ॥ ९॥
विधवेव वरारोहा शुष्कतोयेव निम्नगा।
वृकैरिव वने रुद्धा पृषती हतयूथपा॥ १०॥

शरभाहतमिवेह महती गिरिकन्दरा ।
भारती भरतश्रेष्ठ पतिते जाह्नवीसुते ।
विष्वग्वाताहता रुग्णा नौरिवासीन्महार्णवे ॥ ११ ॥

तस्यां त्रस्ता नृपतयः सैनिकाश्च पृथग्विधाः ।
पाताल इव मज्जन्तो हीना देवव्रतेन ते ॥ १२ ॥

तस्मिंस्तु निहते शूरे सत्यसन्धे महौजसि ।
त्वत्सुताः कर्णमस्मार्षुस्तर्तुकामा इव प्लवम् ॥ १३ ॥

तावकास्तव पुत्राश्च सहिताः सर्वराजभिः ।
हा कर्ण इति चाक्रन्दन् कालोऽयमिति चाब्रुवन् ॥ १४ ॥

(अ. २) श्रुत्वा तु कर्णः पुरुषेन्द्रमच्युतम्
निपातितं शान्तनवं महारथम् ।
पितेव पुत्रांस्त्वरितोऽभ्ययात् ततः
सन्तारयिष्यंस्तव पुत्रस्य सेनाम् ॥ १५ ॥

(अ. ४) हर्षिताः कुरवः सर्वे दुर्योधनपुरोगमाः ।
कर्णं दृष्ट्वा महात्मानं युद्धाय समुपस्थितम् ॥ १६ ॥

(अ. ५) रथस्थं पुरुषव्याघ्रं दृष्ट्वा कर्णमवस्थितम् ।
हृष्टो दुर्योधनो राजन्निदं वचनमब्रवीत् ॥ १७ ॥

भीष्मः सेनाप्रणेतासीद्वयसा विक्रमेण च ।
श्रुतेन चोपसंपन्नः सर्वैर्योधगणैस्तथा ॥ १८ ॥

तस्मिन्नसुकरं कर्म कृतवत्यास्थिते दिवम् ।
कं नु सेनाप्रणेतारं मन्यसे तदनंतरम् ॥ १९ ॥

न विना नायकं सेना मुहूर्तमपि तिष्ठति ।
आहवेष्वाहवश्रेष्ठ नेतृहीनेव नौर्जले ॥ २० ॥

स भवान् वीक्ष्य सर्वेषु मामकेषु महात्मसु ।
पश्य सेनापतिं युक्तमनु शान्तनवादिह ॥ २१ ॥

कर्ण०- सर्व एव महात्मान इमे पुरुषसत्तमाः।
सेनापतित्वमर्हन्ति नात्र कार्या विचारणा ॥ २२ ॥

कुलसंहननज्ञानैर्बलविक्रमबुद्धिभिः।
युक्ताः श्रुतज्ञा धीमन्त आहवेष्वनिवर्तिनः ॥ २३ ॥

युगपन्न तु ते शक्याः कर्तुं सर्वे पुरस्सराः।
एक एव तु कर्तव्यो यस्मिन् वैशेषिका गुणाः ॥ २४ ॥

अन्योन्यस्पर्धिनां ह्येषां यद्येकं यं करिष्यसि।
शेषा विमनसो व्यक्तं न योत्स्यन्ति हितास्तव ॥ २५ ॥

अयं च सर्वयोधानामाचार्यः स्थविरो गुरुः।
युक्तः सेनापतिः कर्तुं द्रोणः शस्त्रभृतां वरः ॥ २६ ॥

(अ. ६) कर्णस्य वचनं श्रुत्वा राजा दुर्योधनस्तदा।
सेनामध्यगतं द्रोणमिदं वचनमब्रवीत् ॥ २७ ॥

वर्णश्रैष्ठ्यात्कुलोत्पत्त्या श्रुतेन वयसा धिया।
वीर्याद्दाक्ष्याद्धृष्यत्वादर्थज्ञानान्नयाज्जयात् ॥ २८ ॥

तपसा च कृतज्ञत्वाद् वृद्धः सर्वगुणैरपि।
युक्तो भवत्समो गोप्ता राज्ञामन्यो न विद्यते।
स भवान् पातु नः सर्वान् देवानिव शतक्रतुः ॥ २९ ॥

ध्रुवं युधिष्ठिरं संख्ये सानुबन्धं सबान्धवम्।
जेष्यामि पुरुषव्याघ्र भवान् सेनापतिर्यदि ॥ ३० ॥

एवमुक्ते ततो द्रोणं जयेत्यूचुर्नराधिपाः।
सिंहनादेन महता हर्षयन्तस्तवात्मजम् ॥ ३१ ॥

दुर्योधनं ततो राजन् द्रोणो वचनमब्रवीत् ॥ ३२ ॥

द्रोण०- वेदं षडङ्ग वेदाहमर्थविद्यां च मानवीम्।
(अ ७) त्रैयम्बकमथेष्वस्त्रं शस्त्राणि विविधानि च ॥ ३३ ॥

ये चाप्युक्ता मयि गुणा भवद्भिर्जयकांक्षिभिः।
चिकीर्षुस्तानहं सर्वान् योधयिष्यामि पाण्डवान् ॥ ३४ ॥

पार्षतं तु रणे राजन्न हनिष्ये कथंचन।
स हि सृष्टो वधार्थाय ममैव पुरुषर्षभः॥ ३५॥

सञ्जय०–अथाभिषिषिचुर्द्रोणं दुर्योधनमुखा नृपाः।
सैनापत्ये यथा स्कन्दं पुरा शक्रमुखाः सुराः॥ ३६॥

सैनापत्यं तु संप्राप्य भारद्वाजो महारथः।
युयुत्सुर्व्यूह्य सैन्यानि प्रायात्तव सुतैः सह॥ ३७॥

अस्माकं शकटव्यूहो द्रोणेन विहितोऽभवत्।
परेषां क्रौञ्च एवासीद् व्यूहो राजन्महात्मनाम्॥ ३८॥

ततः प्रववृते युद्धं परस्परवधैषिणाम्।
कुरुपाण्डवसैन्यानां शब्देनापूरयञ्जगत्॥ ३९॥

ते त्वन्योन्यं सुसंरब्धाः पाण्डवाः कौरवैः सह।
अभ्यघ्नन्निशितैः शस्त्रैर्जयगृद्धाः प्रहारिणः॥ ४०॥

स पाण्डवानां महतीं महेष्वासो महाद्युतिः।
वेगेनाभ्यद्रवत्सेनां किरन् शरशतैः शितैः॥ ४१॥

विक्षोभ्यमाणा द्रोणेन भिद्यमाना महाचमूः।
व्यशीर्यत सपाञ्चाला वातेनेव बलाहकाः॥ ४२॥

(अ. ८) ततो युधिष्ठिरो राजा धृष्टद्युम्नधनञ्जयौ।
अब्रवीत् सर्वतो यत्तैः कुंभयोनिर्निवार्यताम्॥ ४३॥

तत्रैनमर्जुनश्चैव पार्षतश्च सहानुगः।
प्रत्यगृण्हात् ततः सर्वे समापेतुर्महारथाः॥ ४४॥

संरक्ष्यमाणां तां दृष्ट्वा पाण्डवैर्वाहिनीं रणे।
व्यावृत्य चक्षुषी कोपाद्भारद्वाजोऽन्ववैक्षत॥ ४५॥

स तीव्रं कोपमास्थाय रथे समरदुर्जयः।
व्यधमत् पाण्डवानीकमभ्राणीव सदागतिः॥ ४६॥

रथानश्वान्नरान्नागानभिधावन्नितस्ततः।
चचारोन्मत्तवद्द्रोणो वृद्धोऽपि तरुणो यथा॥ ४७॥

तं कार्मुकमहावेगमस्त्रज्वलितपावकम् ।
द्रोणमासादयाञ्चक्रुः पञ्चालाः पाण्डवैः सह ॥ ४८ ॥

तान् सकुञ्जरपत्त्यश्वान् प्राहिणोद्यमसादनम् ।
चक्रेऽचिरेण च द्रोणो महीं शोणितकर्दमाम् ॥ ४९ ॥

एवं रुक्मरथः शूरो हत्वा शतसहस्रशः ।
पाण्डवानां रणे योधान् पार्षतेन निपातित. ॥ ५० ॥

अक्षौहिणीमभ्यधिकां शूराणामनिवर्तिनाम् ।
निहत्य पश्चाद्धृतिमानगच्छत् परमां गतिम् ॥ ५१ ॥

पाण्डवै सह पञ्चालैरशिवै. क्रूरकर्मभिः ।
हतो रुक्मरथो राजन् कृत्वा कर्म सुदुष्करम् ॥ ५२ ॥

ततो निनादो भूतानामाकाशे समजायत ।
सैन्यानां च ततो राजन्नाचार्ये निहते युधि ॥ ५३ ॥

द्यां धरां खं दिशो वापि प्रदिशश्चानुनादयन् ।
अहो धिगिति भूतानां शब्दः समभवद्भृशम् ॥ ५४ ॥

पाण्डवास्तु जयं लब्ध्वा सिंहनादान् प्रचक्रिरे ।
सिंहनादेन महता समकम्पत मेदिनी ॥ ५५ ॥

## धृतराष्ट्रशोकः

(अ. ९) ब्राह्मे दैवे तथेष्वस्त्रे यमुपासन् गुणार्थिनः ।
धृत०- ब्राह्मणा राजपुत्राश्च स कथं मृत्युना हतः ॥ ५६ ॥

क्षत्रं च ब्रह्म चैवेह योऽभ्यतिष्ठत् परंतपः ।
स कथं ब्राह्मणो वृद्धः शस्त्रेण वधमाप्तवान् ॥ ५७ ॥

दिवि शक्र इव श्रेष्ठो महासत्त्वो महाबलः ।
स कथं निहतः पार्थैः क्षुद्रमत्स्यैर्यथा तिमिः ॥ ५८ ॥

यं द्वौ न जहतः शब्दौ जीवमानं कदाचन ।
ब्राह्मश्च वेदकामानां ज्याघोषश्च धनुष्मताम् ॥ ५९ ॥

अदीनं पुरुषव्याघ्रं ह्रीमन्तमपराजितम् ।
नाहं मृष्ये हतं द्रोणं सिंहद्विरदविक्रमम् ॥ ६० ॥

कथं सञ्जय दुर्धर्षमनाधृष्ययशोबलम् ।
पश्यतां पुरुषेन्द्राणां समरे पार्षतोऽवधीत् ॥ ६१ ॥

न स पृष्ठमरेस्त्रासाद्रणे शौर्यात् प्रदर्शयेत् ।
परामप्यापदं प्राप्य स कथं निहतः परैः ॥ ६२ ॥

(अ.११) युगस्येव विपर्यासो लोकानामिव मोहनम् ।
भीष्मस्य च वधस्तात द्रोणस्य च महात्मनः ॥ ६३ ॥

न ह्येव ब्रह्मचर्येण न वेदाध्ययनेन च ।
न क्रियाभिर्न चास्त्रेण मृत्योः कश्चिन्निवार्यते ॥ ६४ ॥

लोकसंभावितौ वीरौ कृतास्त्रौ युद्धदुर्मदौ ।
भीष्मद्रोणौ हतौ श्रुत्वा किं नु जीवामि सञ्जय ॥ ६५ ॥

यां तां श्रियमसूयामः पुरा दृष्ट्वा युधिष्ठिरे ।
अद्य तामनुजानीमो भीष्मद्रोणवधेन ह ॥ ६६ ॥

मत्कृते चाप्यनुप्राप्तः कुरूणामेष संक्षयः ।
पक्वाना हि वधे सूत वज्रायन्ते तृणान्युत ॥ ६७ ॥

अन्यथा चिन्तिता ह्यर्था नरैस्तात मनस्विभिः ।
अन्यथैव प्रपद्यन्ते दैवादिति मतिर्मम ॥ ६८ ॥

तस्मादपरिहार्येऽर्थे संप्राप्ते कृच्छ्र उत्तमे ।
अपारणीये दुश्चिन्त्ये यथाभूतं प्रचक्ष्व मे ॥ ६९ ॥

## द्रोणप्रतिज्ञा, एकादशदिनयुद्धम्

(अ. १२) हन्त ते कथयिष्यामि सर्वं प्रत्यक्षदर्शिवान् ।
सञ्जय०-यथा स न्यपतत् द्रोणः सूदितः पाण्डुसृञ्जयैः ॥ ७० ॥

सेनापतित्वं संप्राप्य भारद्वाजो महारथः ।
मध्ये सर्वस्य सैन्यस्य पुत्रं ते वाक्यमब्रवीत् ॥ ७१ ॥

करोमि कामं कं तेऽद्य प्रवृणीष्व यमिच्छसि ।
ततो दुर्योधनो राजा कर्णदुःशासनादिभिः ।
संमन्त्र्योवाच दुर्धर्षमाचार्यं जयतां वरम् ॥ ७२ ॥

ददासि चेद्वरं मह्यं जीवग्राहं युधिष्ठिरम् ।
गृहीत्वा रथिनां श्रेष्ठं मत्समीपमिहानय ॥ ७३ ॥

ततः कुरूणामाचार्यः श्रुत्वा पुत्रस्य ते वचः ।
सेनां प्रहर्षयन् सर्वामिदं वचनमब्रवीत् ॥ ७४ ॥

धन्यः कुन्तीसुतो राजन् यस्य ग्रहणमिच्छसि ।
न वधार्थं सुदुर्धर्ष वरमद्य प्रयाचसे ॥ ७५ ॥

किमर्थं च नरव्याघ्र न वधं तस्य कांक्षसे ।
नाशंससि क्रियामेतां मत्तो दुर्योधन ध्रुवम् ॥ ७६ ॥

आहोस्विद्धर्मराजस्य द्वेष्टा तस्य न विद्यते ।
यदीच्छसि त्वं जीवन्तं कुलं रक्षसि चात्मनः ॥ ७७ ॥

अथवा भरतश्रेष्ठ निर्जित्य युधि पाण्डवान् ।
राज्यं संप्रति दत्त्वा च सौभ्रात्रं कर्तुमिच्छसि ॥ ७८ ॥

धन्यः कुन्तीसुतो राजा सुजातं चास्य धीमतः ।
अजातशत्रुता सत्या तस्य यत् स्निह्यते भवान् ॥ ७९ ॥

द्रोणेन चैवमुक्तस्य तव पुत्रस्य भारत ।
सहसा निःसृतो भावो योऽस्य नित्यं हृदि स्थितः ॥ ८० ॥

नाकारो गूहितुं शक्यो बृहस्पतिसमैरपि ।
तस्मात्तव सुतो राजन् प्रहृष्टो वाक्यमब्रवीत् ॥ ८१ ॥

वधे कुन्तिसुतस्याजौ नाचार्य विजयो मम ।
य एव तेषां शेषः स्यात्स एवास्मान्न शेषयेत् ॥ ८२ ॥

सत्यप्रतिज्ञे त्वानीते पुनर्द्यूतेन निर्जिते ।
पुनर्यास्यन्त्यरण्याय पाण्डवास्तमनुव्रताः ॥ ८३ ॥

सोऽय मम जयो व्यक्तं दीर्घकालं भविष्यति।
अतो न वधमिच्छामि धर्मराजस्य कर्हिचित्॥ ८४॥

तस्य जिह्ममभिप्रायं ज्ञात्वा द्रोणोऽर्थतत्त्ववित्।
तं वरं सान्तरं तस्मै ददौ सञ्चिन्त्य बुद्धिमान्॥ ८५॥

द्रोण०— न चेद्युधिष्ठिरं वीरः पालयत्यर्जुनो युधि।
मन्यस्व पाण्डवश्रेष्ठमानीतं वशमात्मन.॥ ८६॥

फाल्गुनस्य समीपे तु न हि शक्यो युधिष्ठिरः।
ग्रहीतुं समरे राजन् सेन्द्रैरपि सुरासुरैः॥ ८७॥

सञ्जय०—सान्तरं तु प्रतिज्ञाते राज्ञो द्रोणेन निग्रहे।
गृहीतं तममन्यन्त तव पुत्राः सुबालिशा.॥ ८८॥

पाण्डवेयेषु साक्षेपं द्रोणं जानाति ते सुतः।
तत. प्रतिज्ञास्थैर्यार्थं स मन्त्रो बहुलीकृतः॥ ८९॥

(अ १३) सान्तरे तु प्रतिज्ञाते राज्ञो द्रोणेन निग्रहे।
ततस्ते सैनिका. श्रुत्वा तं युधिष्ठिरनिग्रहम्।
सिंहनादरवांश्चक्रुर्बाहुशब्दांश्च कृत्स्नशः॥ ९०॥

तच्च सर्वं यथान्यायं धर्मराजेन भारत।
आप्तैराशु परिज्ञातं भारद्वाजचिकीर्षितम्॥ ९१॥

ततः सर्वान् समानाय्य भ्रातृनन्यांश्च सर्वशः।
अब्रवीद्धर्मराजस्तु धनञ्जयमिदं वचः॥ ९२॥

श्रुतं ते पुरुषव्याघ्र द्रोणस्याद्य चिकीर्षितम्।
यथा तन्न भवेत्सत्यं तथा नीतिर्विधीयताम्॥ ९३॥

स त्वमद्य महाबाहो युध्यस्व मदनन्तरम्।
यथा दुर्योधन. कामं नेमं द्रोणादवाप्नुयात्॥ ९४॥

अर्जुन०—यथा मे न वधः कार्य आचार्यस्य कदाचन।
तथा तव परित्यागो न मे राजंश्चिकीर्षित.॥ ९५॥

अप्येवं पाण्डव प्राणानुत्सृजेयमहं युधि ।
प्रतीपो नाहमाचार्ये भवेयं वै कथञ्चन ॥ ९६ ॥

त्वां निगृह्याहवे राज्यं धार्तराष्ट्रोऽयमिच्छति ।
न स तं जीवलोकेऽस्मिन् कामं प्राप्येत् कथञ्चन ॥ ९७ ॥

प्रपतेत् द्यौः सनक्षत्रा पृथिवी शकलीभवेत् ।
न त्वां द्रोणो निगृह्णीयाज्जीवमाने मयि ध्रुवम् ॥ ९८ ॥

सञ्जय०—ततः शंखाश्च भेर्यश्च मृदंगाश्चानकैः सह ।
प्रावाद्यन्त महाराज पाण्डवानां निवेशने ॥ ९९ ॥

श्रुत्वा शंखस्य निर्घोषं पाण्डवस्य महौजसः ।
त्वदीयेष्वप्यनीकेषु वादित्राण्यभिजघ्निरे ॥ १०० ॥

ततो व्यूढान्यनीकानि तव तेषां च भारत ।
शनैरुपेयुरन्योन्यं योध्यमानानि संयुगे ॥ १०१ ॥

ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
पाण्डवानां कुरूणां च द्रोणपाञ्चाल्ययोरपि ॥ १०२ ॥

यतमानाः प्रयत्नेन द्रोणानीकविशातने ।
न शेकुः सृञ्जया युद्धे तद्धि द्रोणेन पालितम् ॥ १०३ ॥

तथैव तव पुत्रस्य रथोदाराः प्रहारिणः ।
न शेकुः पाण्डवीं सेना पाल्यमानां किरीटिना ॥ १०४ ॥

(अ. १४) ततः स पाण्डवानीके जनयन्सुमहद्भयम् ।
व्यचरत् पृतनां द्रोणो दहन् कक्षमिवानलः ॥ १०५ ॥

तस्य विद्युदिवाभ्रेषु चापं हेमपरिष्कृतम् ।
भ्रमद्रथाम्बुदे चास्मिन् दृश्यते स्म पुनः पुनः ॥ १०६ ॥

(अ. १६) स मध्यं प्राप्य सैन्यानां सर्वाः प्रविचरन् दिशः ।
तव सैन्यस्य गोप्ताऽऽसीद्भारद्वाजो द्विजर्षभः ॥ १०७ ॥

व्यक्षोभयद्रणे योधान् यथामुख्यमभिद्रवन् ।
अभ्यवर्तत संप्रेप्सुः कुन्तीपुत्रं युधिष्ठिरम् ॥ १०८ ॥

ततो विराटद्रुपदौ केकयाः सात्यकिः शिविः।
व्याघ्रदत्तश्च पाञ्चाल्य· सिंहसेनश्च वीर्यवान् ॥ १०९ ॥

एते चान्ये च बहव· परीप्सन्तो युधिष्ठिरम्।
आवव्रुस्तस्य पन्थानं किरन्त· सायकान् बहून् ॥ ११० ॥

तान् प्रमृज्य शरव्रातैः पाण्डवानां महारथान्।
युधिष्ठिररथाभ्याशे तस्थौ मृत्युरिवान्तकः ॥ १११ ॥

ततोऽभवन्महाशब्दो राजन् यौधिष्ठिरे बले।
हतो राजेति योधानां समीपस्थे यतव्रते ॥ ११२ ॥

अब्रुवन् सैनिकास्तत्र दृष्ट्वा द्रोणस्य विक्रमम्।
अद्य राजा धार्तराष्ट्रः कृतार्थो वै भविष्यति ॥ ११३ ॥

अस्मिन् मुहूर्ते द्रोणस्तु पाण्डवं गृह्य हर्षितः।
आगमिष्यति नो नूनं धार्तराष्ट्रस्य संयुगे ॥ ११४ ॥

एवं सञ्जल्पतां तेषां तावकानां महारथः।
आयाज्जवेन कौन्तेयो रथघोषेण नादयन् ॥ ११५ ॥

ततः किरीटी सहसा द्रोणानीकमुपाद्रवत्।
छादयन्निषुजालेन महता मोहयन्निव ॥ ११६ ॥

शीघ्रमभ्यस्यतो बाणान् संदधानस्य चानिशम्।
नान्तरं ददृशे कश्चित् कौन्तेयस्य यशस्विनः ॥ ११७ ॥

न दिशो नान्तरिक्षं च न द्यौर्नैव च मेदिनी।
अदृश्यन्त महाराज बाणभूता इवाभवन् ॥ ११८ ॥

नादृश्यत तदा राजंस्तत्र किंचन संयुगे।
बाणान्धकारे महति कृते गाण्डीवधन्वना ॥ ११९ ॥

सूर्ये चास्तमनुप्राप्ते तमसा चाभिसंवृते।
नाज्ञायत तदा शत्रुर्न सुहृन्न च कश्चन ॥ १२० ॥
ततोऽवहारं चक्रुस्ते द्रोणदुर्योधनादय· ॥ १२१ ॥

तान् विदित्वा पुनस्त्रस्तानयुद्धमनसः परान् ।
स्वान्यनीकानि बीभत्सुः शनकैरवहारयत् ।
ततोऽभितुष्टुवुः पार्थं प्रहृष्टाः पाण्डुसृञ्जयाः ॥ १२२ ॥

## अर्जुनसंशप्तकयुद्धम् , द्वादशदिनयुद्धम् , सत्यजिद्वधः

(अ. १७) कृत्वाऽवहारं सैन्यानां द्रोणः परमदुर्मनाः ।
दुर्योधनमभिप्रेक्ष्य सव्रीडमिदमब्रवीत् ॥ १२३ ॥

उक्तमेतन्मया पूर्वं न तिष्ठति धनञ्जये ।
शक्यो ग्रहीतुं संग्रामे देवैरपि युधिष्ठिरः ॥ १२४ ॥

इति तद्वः प्रयततां कृतं पार्थेन संयुगे ।
मा विशङ्कीर्वचो मह्यमजेयौ कृष्णपाण्डवौ ॥ १२५ ॥

अपनीते तु योगेन केनचिच्छ्वेतवाहने ।
तत एष्यति ते राजन् वशमेष युधिष्ठिरः ॥ १२६ ॥

कश्चिदाहूय तं सङ्ख्ये देशमन्यं प्रकर्षतु ।
तमजित्वा न कौन्तेयो निवर्तेत कथंचन ॥ १२७ ॥

एतस्मिन्नन्तरे शून्ये धर्मराजमहं नृप ।
ग्रहीष्यामि चमूं भित्त्वा धृष्टद्युम्नस्य पश्यतः ॥ १२८ ॥

अर्जुनेन विहीनस्तु यदि नोत्सृजते रणम् ।
मामुपायान्तमालोक्य गृहीतं विद्धि पाण्डवम् ॥ १२९ ॥

अथापयाति सङ्ग्रामाद्विजयात्तद्विशिष्यते ॥ १३० ॥

द्रोणस्य तद्वचः श्रुत्वा त्रिगर्ताधिपतिस्तदा ।
भ्रातृभिः सहितो राजन्निदं वचनमब्रवीत् ॥ १३१ ॥

वयं विनिकृता राजन् सदा गाण्डीवधन्वना ।
अनागःस्वपि चागस्तत्कृतमस्मासु तेन वै ॥ १३२ ॥

ते वयं स्मरमाणास्तान् विनिकारान् पृथग्विधान् ।
क्रोधाग्निना दह्यमाना न शेमहि सदा निशि ॥ १३३ ॥

स नो दिष्ट्यास्त्रसम्पन्नश्चक्षुर्विषयमागत.।
वयमेनं हनिष्यामो निकृष्यायोधनाद्बहि.॥ १३४॥

अद्यास्त्वनर्जुना भूमिरत्रिगर्ताऽथ वा पुन ।
सत्यं ते प्रतिजानीमो नैतन्मिथ्या भविष्यति ॥ १३५॥

ततो ज्वलनमानर्च्य हुत्वा सर्वे पृथक्पृथक्।
शृण्वतां सर्वभूतानामुच्चैर्वाचो बभाषिरे॥ १३६॥

सर्वे धनञ्जयवधे प्रतिज्ञां चापि चक्रिरे॥ १३७॥

ये वै लोकाश्चाव्रतिनां ये चैव ब्रह्मघातिनाम्।
मद्यपस्य च ये लोका गुरुदाररतस्य च॥ १३८॥

नास्तिकानां च ये लोका येऽग्निमातृपितृत्यजाम्।
तानाप्नुयामहे लोकान् ये च पापकृतामपि॥ १३९॥

यद्यहत्वा वयं युद्धे निवर्तेम धनञ्जयम्।
तेन चाभ्यर्दितास्त्रासाद्भवेम हि पराङ्मुखाः॥ १४०॥

एवमुक्त्वा तदा राजंस्तेऽभ्यवर्तन्त संयुगे।
आह्वयन्तोऽर्जुनं वीराः पितृजुष्टां दिशं प्रति॥ १४१॥

आहूतस्तैर्नरव्याघ्रै पार्थः परपुरञ्जयः।
धर्मराजमिदं वाक्यमपदान्तरमब्रवीत्॥ १४२॥

आहूतो न निवर्तेयमिति मे व्रतमाहितम्।
संशप्तकाश्च मां राजन्नाह्वयन्ति महामृधे॥ १४३॥

एष च भ्रातृभि. सार्धं सुशर्माऽह्वयते रणे।
नैतच्छक्नोमि संसोढुमाह्वानं पुरुषर्षभ॥ १४४॥

युधि०– श्रुतं ते तत्त्वतस्तात यद्द्रोणस्य चिकीर्षितम्।
यथा तदनृतं तस्य भवेत् तत्त्व समाचर॥ १४५॥

अर्जुन०– अयं वै सत्यजिद्राजन्नद्य त्वां रक्षिता युधि।
म्रियमाणे च पाञ्चाल्ये नाचार्यः काममाप्स्यति॥ १४६॥

नैर्हतैर्हन्यमानैश्च पतद्भिः पातितैरपि ।
भ्रमद्भिर्निघ्नद्भिश्च क्रूरमायोधनं बभौ ॥ १६० ॥
रजश्च सुमहज्जातं शान्तं रुधिरवृष्टिभिः ।
मही चाप्यभवद्दुर्गा कबन्धशतसंकुला ॥ १६१ ॥
एतस्मिन्नन्तरे चैव प्रमत्ते सव्यसाचिनि ।
व्यूढानीकस्ततो द्रोणो युधिष्ठिरमुपाद्रवत् ॥ १६२ ॥
(अ. २०) व्यूहं दृष्ट्वा सुपर्णं तु भारद्वाजकृतं तदा ।
व्यूहेन मण्डलार्धेन प्रत्यव्यूहद्युधिष्ठिरः ॥ १६३ ॥
द्रोणो यौधिष्ठिरं सैन्यं बहुधा व्यधमच्छरैः ।
अनिलेन यथाऽभ्राणि विच्छिन्नानि समन्ततः ।
तथा पार्थस्य सैन्यानि विच्छिन्नानि क्वचित् क्वचित् ॥१६४॥
मुहूर्तमिव तद्युद्धमासीन्मधुरदर्शनम् ।
तत उन्मत्तवद्राजन्निर्मर्यादमवर्तत ॥ १६५ ॥
नैव स्वे न परे राजन्नाज्ञायन्त परस्परम् ।
अनुमानेन सञ्ज्ञाभिर्युद्धं तत् समवर्तत ॥ १६६ ॥
गजाश्वरथयोधानां शरीरौघसमावृता ।
बभूव पृथिवी राजन् मांसशोणितकर्दमा ॥ १६७ ॥
वर्तमाने तथा युद्धे घोररूपे भयङ्करे ।
मोहयित्वा परान् द्रोणो युधिष्ठिरमुपाद्रवत् ॥ १६८ ॥
(अ. २१) ततो द्रोणं महेष्वासः सत्यजित्सत्यविक्रमः ।
अविध्यन्निशिताग्रेण परमास्त्रं विदर्शयन् ॥ १६९ ॥
स सत्यजितमालोक्य तथोदीर्णं महाहवे ।
अर्धचन्द्रेण चिच्छेद शिरस्तस्य महात्मनः ॥ १७० ॥
तस्मिन्हते महामात्रे पाञ्चालानां महारथे ।
अपायाज्जवनैरश्वैर्द्रोणात् त्रस्तो युधिष्ठिरः ॥ १७१ ॥
निर्दहन्तमनीकानि तानि तानि पुनः पुनः ।
द्रोणं मत्स्यादवरजः शतानीकोऽभ्यवर्तत ॥ १७२ ॥

सूर्यरश्मिप्रतीकाशैः कर्मारपरिमार्जितैः।
बहुभिः ससूतं सहयं द्रोण विद्ध्वाऽनदद्भृशम् ॥ १७३ ॥

तस्य नानदतो द्रोणः शिरः कायात् सकुण्डलम्।
क्षुरेणापाहरत् तूर्णं ततो मत्स्याः प्रदुद्रुवुः ॥ १७४ ॥

एतांश्चान्यांश्च सुबहून्नानाजनपदेश्वरान्।
सर्वान् द्रोणोऽजयद्युद्धे कुरुभिः परिवारितः ॥ १७५ ॥

ते दानवा इवेन्द्रेण वध्यमाना महात्मना।
पञ्चालाः केकया मत्स्याः समकम्पन्त भारत ॥ १७६ ॥

(अ. २१) तान्दृष्ट्वा चलितान् संख्ये प्रणुन्नान् द्रोणसायकैः।
दुर्योधनोऽब्रवीत् कर्णं प्रहृष्टः प्रहसन्निव ॥ १७७ ॥

पश्य राधेय पञ्चालान् प्रणुन्नान् द्रोणसायकैः।
सिंहेनेव मृगान् वन्यांस्त्रासितान् दृढधन्वना ॥ १७८ ॥

नैते जातु पुनर्युद्धमीहेयुरिति मे मतिः।
यथा तु भग्ना द्रोणेन वातेनेव महाद्रुमाः ॥ १७९ ॥

अर्द्यमानाः शरैरेते रुक्मपुङ्खैर्महात्मना।
पथा नैकेन गच्छन्ति घूर्णमानास्ततस्ततः ॥ १८० ॥

एष भीमो महाक्रोधी हीनः पाण्डवसृञ्जयैः।
मदीयैरावृतो योधैः कर्ण नन्दयतीव माम् ॥ १८१ ॥

व्यक्तं द्रोणमयं लोकमद्य पश्यति दुर्मतिः।
निराशो जीविताद्नूनमद्य राज्याच्च पाण्डवः ॥ १८२ ॥

कर्ण०- नैष जातु महाबाहुर्जीवन्नाहवमुत्सृजेत्।
न चापि पाण्डवा युद्धे भज्येरन्निति मे मतिः ॥ १८३ ॥

निवृत्तो हि महाबाहुरमितौजा वृकोदरः।
पञ्चालाः केकया मत्स्याः पाण्डवाश्च विशेषतः ॥ १८४ ॥

अतिभारमहं मन्ये भारद्वाजे समाहितम्।
शीघ्रमनुगमिष्यामो यत्र द्रोणो व्यवस्थितः ॥ १८५ ॥

कोका इव महानाग मा वै हन्युर्यतव्रतम् ॥ १८६ ॥

राधेयस्य वचः श्रुत्वा राजा दुर्योधनस्ततः ।
भ्रातृभिः सहितो राजन् प्रायाद्द्रोणरथं प्रति ॥ १८७ ॥

तत्रारावो महानासीदेकं द्रोण जिघांसताम् ।
पाण्डवानां निवृत्तानां नानावर्णैर्हयोत्तमैः ॥ १८८ ॥

(अ. २४) व्यथयेयुरिमे सेना देवानामपि सञ्जय ।
धृतराष्ट्र०–आहवे ये न्यवर्तन्त वृकोदरमुखा नृपाः ॥ १८९ ॥

संप्रयुक्तः किलैवायं दिष्टैर्भवति पूरुषः ।
तस्मिन्नेव च सर्वार्थाः प्रदृश्यन्ते पृथग्विधाः ॥ १९० ॥

दीर्घं विप्रोषितः कालमरण्ये जटिलोऽजिनी ।
अज्ञातश्चैव लोकस्य विजहार युधिष्ठिरः ॥ १९१ ॥

स एव महतीं सेनां समावर्तयदाहवे ।
किमन्यद्दैवसंयोगान्मम पुत्रस्य चाभवत् ॥ १९२ ॥

युक्त एव हि भाग्येन ध्रुवमुत्पद्यते नरः ।
स तथा कृष्यते तेन न यथा स्वयमिच्छति ॥ १९३ ॥

यन्मां क्षत्ताऽब्रवीत्तात प्रपश्यन् पुत्रगृद्धिनम् ।
दुर्योधनेन तत् सर्वं प्राप्तं सूत मया सह ॥ १९४ ॥

नृशंसं तु परं नु स्यात्त्यक्त्वा दुर्योधनं यदि ।
पुत्रशेषं चिकीर्षेयं कृत्स्नं न मरणं व्रजेत् ॥ १९५ ॥

यो हि धर्मं परित्यज्य भवत्यर्थपरो नरः ।
सोऽस्माच्च हीयते लोकात् क्षुद्रभावं च गच्छति ॥ १९६ ॥

अद्य चाप्यस्य राष्ट्रस्य हतोत्साहस्य सञ्जय ।
अवशेषं न पश्यामि ककुदे मृदिते सति ॥ १९७ ॥

व्यक्तमेव च मे शंस यथा युद्धमवर्तत ।
केऽयुध्यन् के व्यपाकुर्वन् के क्षुद्राः प्राद्रवन् भयात् ॥ १९८ ॥

## भगदत्तवधः, नीलवधः

(अ. २६) तथा तेषु निवृत्तेषु प्रत्युद्यातेषु भागशः।
सञ्जय०–प्राग्जोतिषस्ततो भीमं कुञ्जरेण समाद्रवत् ॥ १९९ ॥

स नागप्रवरो भीमं सहसा समुपाद्रवत्।
वृकोदररथं साश्वमविशेषमचूर्णयत् ॥ २०० ॥

पद्भ्यां भीमोऽप्यथो धावस्तस्य गात्रेष्वलीयत।
गात्राभ्यन्तरगो भूत्वा करेणाताडयन्मुहुः ॥ २०१ ॥

कुलालचक्रवन्नागस्तदा तूर्णमथाभ्रमत्।
भीमोऽपि नागगात्रेभ्यो विनिःसृत्यापयाज्जवात् ॥ २०२ ॥

ततः पाण्डवयोधास्ते नागराजं शरैर्द्रुतम्।
सिषिचुर्भैरवान्नादान् विनदन्तो जिघांसवः ॥ २०३ ॥

नियन्तुः शिल्पयत्नाभ्यां प्रेरितोऽरिशरार्दितः।
परिचिक्षेप तान्नागः स रिपून् सव्यदक्षिणम् ॥ २०४ ॥

क्षिप्रं श्येनाभिपन्नानां वायसानामिव स्वनः।
बभूव पाण्डवेयानां भृशं विद्रवतां स्वनः ॥ २०५ ॥

(अ. २७) रजो दृष्ट्वा समुद्भूतं श्रुत्वा च गजनिःस्वनम्।
भगदत्ते विकुर्वाणे कौन्तेयः कृष्णमब्रवीत् ॥ २०६ ॥

यथा प्राग्ज्योतिषो राजा गजेन मधुसूदन।
त्वरमाणो विनिष्क्रान्तो ध्रुवं तस्यैष निःस्वनः ॥ २०७ ॥

स पाण्डवबलं सर्वमद्यैको नाशयिष्यति।
न चावाभ्यामृतेऽन्योऽस्ति शक्तस्तं प्रतिबाधितुम् ॥ २०८ ॥

त्वरमाणस्ततो याहि यतः प्राग्ज्योतिषाधिपः ॥ २०९ ॥

वचनादथ कृष्णस्तु प्रययौ सव्यसाचिनः।
दीर्यते भगदत्तेन यत्र पाण्डववाहिनी ॥ २१० ॥

त प्रयान्त तत· पश्चादाह्वयन्तो महारथाः ।
संशप्तका· समारोहन् सहस्राणि चतुर्दश ॥ २११ ॥

दशैव तु सहस्राणि त्रिगर्तानां महारथा ।
चत्वारि च सहस्राणि वासुदेवस्य चानुगा· ॥ २१२ ॥

स सन्निवृत्तः सहसा कपिप्रवरकेतन· ।
एको रथसहस्राणि निहन्तु वासवी रणे ॥ २१३ ॥

ततस्तान् प्रायश· पार्थो ब्रह्मास्त्रेण निजघ्निवान् ॥ २१४ ॥
संशप्तकांस्ततो हत्वा भूयिष्ठा ये व्यवस्थिता· ।
भगदत्ताय याहीति कृष्ण पार्थोऽभ्यनोदयत् ॥ २१५ ॥

(अ. २८) तं प्रयान्तं कुरुश्रेष्ठ स्वान् भ्रातॄन् द्रोणतापितान् ।
सुशर्मा भ्रातृभि· सार्धं युद्धार्थी पृष्ठतोऽन्वयात् ॥ २१६ ॥

ततोऽर्जुन· सुशर्माणं विद्ध्वा सप्तभिराशुगै· ।
ध्वजं धनुश्चास्य तथा क्षुराभ्यां समकृन्तत ॥ २१७ ॥

त्रिगर्ताधिपतेश्चापि भ्रातरं षड्भिराशुगैः ।
साश्वं ससूतं त्वरितः पार्थ· प्रैषीद्यमक्षयम् ॥ २१८ ॥

ततो भुजगसंकाशां सुशर्मा शक्तिमायसीम् ।
चिक्षेपार्जुनमादिश्य वासुदेवाय तोमरम् ॥ २१९ ॥

शक्तिं त्रिभि· शरैश्छित्त्वा तोमरं त्रिभिरर्जुनः ।
सुशर्माणं शरव्रातैर्मोहयित्वा न्यवर्तयत् ॥ २२० ॥

संवेष्टयन्ननीकानि शरवर्षेण पाण्डव· ।
सुपर्णपातवद्राजन्नायात् प्राग्ज्योतिषं प्रति ॥ २२१ ॥

यथा नलवनं क्रुद्ध· प्रभिन्नः षष्टिहायनः ।
मृद्नीयात्तद्वदायस्त· पार्थोऽमृद्नाच्चमूं तव ॥ २२२ ॥

तस्मिन् प्रमथिते सैन्ये भगदत्तो नराधिपः ।
तेन नागेन सहसा धनञ्जयमुपाद्रवत् ॥ २२३ ॥

तमापतन्तं द्विरदं दृष्ट्वा क्रुद्धमिवान्तकम्।
चक्रेऽपसव्यं त्वरितः स्यन्दनेन जनार्दनः॥ २२४॥

संप्राप्तमपि नेयेष परावृत्तं महाद्विपम्।
सारोहं मृत्युसात् कर्तुं स्मरन् धर्मं धनञ्जयः॥ २२५॥

(अ. २९) प्राग्ज्योतिषेण संसक्तावुभौ दाशार्हपाण्डवौ।
मृत्युदंष्ट्रान्तिकं प्राप्तौ सर्वभूतानि मेनिरे॥ २२६॥

ततो नागस्य तद्वर्म व्यधमत् पाकशासनिः।
शरजालेन महता तद्व्यशीर्यत भूतले॥ २२७॥

ततश्छत्रं ध्वजं चैव छित्त्वा राज्ञोऽर्जुनः शरैः।
विव्याध दशभिस्तूर्णमुत्स्मयन् पर्वतेश्वरम्॥ २२८॥

विद्धस्ततोऽतिव्यथितो वैष्णवास्त्रमुदीरयन्।
अभिमन्त्र्यांकुशं क्रुद्धो व्यसृजत् पाण्डवोरसि॥ २२९॥

विसृष्टं भगदत्तेन तदस्त्रं सर्वघाति वै।
उरसा प्रतिजग्राह पार्थं संछाद्य केशवः॥ २३०॥

वैजयन्त्यभवन्माला तदस्त्रं केशवोरसि।
पद्मकोशविचित्राढ्या सर्वर्तुकुसुमोत्कटा॥ २३१॥

ततोऽर्जुनः क्लान्तमनाः केशवं प्रत्यभाषत॥ २३२॥

अयुध्यमानस्तुरगान् संयन्तास्मीति चानघ।
इत्युक्त्वा पुण्डरीकाक्ष प्रतिज्ञां स्वां न रक्षसि॥ २३३॥

यद्यहं व्यसनी वा स्यामशक्तो वा निवारणे।
ततस्त्वयैवं कार्यं स्यान्न तत्कार्यं मयि स्थिते॥ २३४॥

ततोऽर्जुनं वासुदेवः प्रत्युवाचार्थवद्वचः।
शृणु गुह्यमिदं पार्थ पुरा वृत्तं यथाऽनघ॥ २३५॥

चतुर्मूर्तिरहं शश्वल्लोकत्राणार्थमुद्यतः।
एका मूर्तिस्तपश्चर्यां कुरुते मे भुवि स्थिता॥ २३६॥

अपरा पश्यति जगत् कुर्वाणं साध्वसाधुनी ।
अपरा कुरुते कर्म मानुषं लोकमाश्रिता ॥ २३७ ॥

शेते चतुर्थी त्वपरा निद्रां वर्षसहस्रिकीम् ।
याऽसौ वर्षसहस्रान्ते मूर्तिरुत्तिष्ठते मम ।
वरार्हेभ्यो वरान् श्रेष्ठांस्तस्मिन् काले ददाति सा ॥ २३८ ॥

तं तु कालमनुप्राप्तं विदित्वा पृथिवी तदा ।
अयाचत वरं यन्मां नरकार्थाय तच्छृणु ॥ २३९ ॥

देवानां दानवानां च अवध्यस्तनयोऽस्तु मे ।
उपेतो वैष्णवास्त्रेण तन्मे त्वं दातुमर्हसि ॥ २४० ॥

एवं वरमहं श्रुत्वा जगत्यास्तनये तदा ।
अमोघमस्त्रं प्रायच्छं वैष्णवं परमं पुरा ॥ २४१ ॥

अवोचं चैतदस्त्रं वै ह्यमोघं भवतु क्षमे ।
नरकस्याभिरक्षार्थं नैनं कश्चिद्वधिष्यति ॥ २४२ ॥

अनेनास्त्रेण ते गुप्तः सुतः परबलार्दनः ।
भविष्यति दुराधर्षः सर्वलोकेषु सर्वदा ॥ २४३ ॥

तथेत्युक्त्वा गता देवी कृतकामा मनस्विनी ।
स चाप्यासीद् दुराधर्षो नरकः शत्रुतापनः ॥ २४४ ॥

तस्मात् प्राग्ज्योतिष प्राप्तं तदस्त्रं पार्थ मामकम् ।
नास्यावध्योऽस्ति लोकेषु सेन्द्ररुद्रेषु मारिष ॥ २४५ ॥

तन्मया त्वत्कृते चैतदन्यथा व्यपनामितम् ।
विमुक्तं परमास्त्रेण जहि पार्थ महासुरम् ॥ २४६ ॥

ततः पार्थो महाबाहुरसंभ्रान्तो महामनाः ।
कुम्भयोरन्तरे नागं नाराचेन समार्पयत् ॥ २४७ ॥

स करी भगदत्तेन प्रेर्यमाणो मुहुर्मुहुः ।
न करोति वचस्तस्य दरिद्रस्येव योषिता ॥ २४८ ॥

स तु विष्टभ्य गात्राणि दन्ताभ्यामवनिं ययौ ।
नदन्नतिस्वनं प्राणानुत्ससर्ज महाद्विपः ॥ २४९ ॥

ततो गाण्डीवधन्वानमभ्यभाषत केशवः ।
अयं महत्तरः पार्थ पलितेन समावृतः ॥ २५० ॥

वलीसंछन्ननयनः शूरः परमदुर्जयः ।
अक्ष्णोरुन्मीलनार्थाय बद्धपट्टो ह्यसौ नृपः ॥ २५१ ॥

देववाक्यात् प्रचिच्छेद शरेण भृशमर्जुनः ।
छिन्नमात्रेऽशुके तस्मिन् रुद्धनेत्रो बभूव सः ।
तमोमयं जगन्मेने भगदत्तः प्रतापवान् ॥ २५२ ॥

ततश्चन्द्रार्धबिम्बेन बाणेन नतपर्वणा ।
बिभेद हृदयं राज्ञो भगदत्तस्य पाण्डवः ॥ २५३ ॥

स भिन्नहृदयो राजा भगदत्तः किरीटिना ।
शरासनं शरांश्चैव गतासु प्रमुमोच ह ॥ २५४ ॥

शिरसस्तस्य विभ्रष्टं पपात च वरांशुकम् ।
नालताडनविभ्रष्टं पलाशं नलिनादिव ॥ २५५ ॥

स हेममाली तपनीयभाण्डात्
पपात नागाद्गिरिसन्निकाशात् ।
सुपुष्पितो मारुतवेगरुग्णो
महीधराग्रादिव कर्णिकारः ॥ २५६ ॥

(अ. ३०) ततोऽर्जुनोऽस्त्रविच्छैव्यं दर्शयन्नात्मनोऽरिषु ।
अभ्यवर्षच्छरौघेण कौरवाणामनीकिनीम् ॥ २५७ ॥

सा हन्यमाना पार्थेन तव पुत्रस्य वाहिनी ।
द्वैधीभूता महाराज गङ्गेवासाद्य पर्वतम् ॥ २५८ ॥

द्रोणमेवान्वपद्यन्त केचित् तत्र नरर्षभाः ।
केचिद्दुर्योधनं राजन्नर्द्यमाना किरीटिना ॥ २५९ ॥

नापश्याम ततस्त्वेनं सैन्ये वै रजसावृते ॥ २६० ॥

ततः पुनर्दक्षिणतः संग्रामश्चित्रयोधिनाम्।
सुयुद्धं चार्जुनस्यासीदहं तु द्रोणमन्वियाम्॥ २६१॥
(अ. ३१) द्रोणं द्रोणमिति क्रूराः पञ्चालाः समचोदयन्।
मा द्रोणमिति पुत्रास्ते कुरून् सर्वानचोदयन्॥ २६२॥
द्रोणं द्रोणमिति ह्येके मा द्रोणमिति चापरे।
कुरूणां पाण्डवानां च द्रोणद्यूतमवर्तत॥ २६३॥
यं यं प्रमथते द्रोणः पञ्चालानां रथव्रजम्।
तत्र तत्र तु पाञ्चाल्यो धृष्टद्युम्नोऽभ्यवर्तत॥ २६४॥
तदद्भुतमभूद्युद्धं द्रोणपाञ्चालयोस्तथा।
नैव तस्योपमा काचिदिति मे निश्चिता मतिः॥ २६५॥
ततो नीलोऽनलप्रख्यो ददाह कुरुवाहिनीम्।
शरस्फुलिङ्गश्चापार्चिर्दहन् कक्षमिवानलः॥ २६६॥
तस्योन्नतांसं सुनसं शिरः कायात् सकुण्डलम्।
भल्लेनापाहरद्द्रौणिः स्मयमान इवानघ॥ २६७॥
ततः प्रविव्यथे सेना पाण्डवी भृशमाकुला।
आचार्यपुत्रेण हते नीले ज्वलिततेजसि॥ २६८॥
अचिन्तयंश्च ते सर्वे पाण्डवाना महारथाः।
कथं नो वासविस्त्रायाच्छत्रुभ्य इति मारिष॥ २६९॥
दक्षिणेन तु सेनायाः कुरुते कदनं बली।
संशप्तकावशेषस्य नारायणबलस्य च॥ २७०॥
(अ. ३२) ततो द्रोणोऽतिसक्रुद्धो विसृजञ्शतशः शरान्।
चेदिपञ्चालपाण्डूनामकरोत् कदनं महत्॥ २७१॥
एतस्मिन्नंतरे जिष्णुर्जित्वा संशप्तकान् बहून्।
अभ्ययात्तत्र यत्राऽसौ द्रोणः पाण्डून् प्रमर्दति॥ २७२॥
संशप्तकसमुद्रं तमुच्छोष्यास्त्रगभस्तिभिः।
स पाण्डवयुगान्तार्कः कुरूनप्यभ्यतीतपत्॥ २७३॥

तेन बाणसहस्रौघैर्गजाश्वरथयोधिनः।
ताड्यमानाः क्षितिं जग्मुर्मुक्तकेशाः शरार्दिताः॥ २७४॥

ते विकीर्णरथाश्चित्राः प्रायशश्च पराङ्मुखाः।
कुरवः कर्ण कर्णेति हाहेति च विचुक्रुशुः॥ २७५॥

तमाधिरथिराक्रन्दं विज्ञाय शरणैषिणाम्।
मा भैष्टेति प्रतिश्रुत्य ययावभिमुखोऽर्जुनम्॥ २७६॥

अर्जुनश्चापि राधेयं विद्ध्वा सप्तभिराशुगैः।
कर्णादवरजं बाणैर्जघान निशितैः शरैः॥ २७७॥

ततः शत्रुंजयं हत्वा पार्थः षड्भिरजिह्मगैः।
जहार सद्यो भल्लेन विपाटस्य शिरो रथात्॥ २७८॥

पश्यतां धार्तराष्ट्राणामेकेनैव किरीटिना।
प्रमुखे सूतपुत्रस्य सोदर्या निहतास्त्रयः॥ २७९॥

ततो भीमः समुत्पत्य स्वरथाद्वैनतेयवत्।
वरासिना कर्णपक्षान् जघान दश पञ्च च॥ २८०॥

एवमेष महारौद्रः क्षयार्थं सर्वधन्विनाम्।
तावकानां परेषां च त्यक्त्वा प्राणानभूद्रणः॥ २८१॥

ततो बले भृशलुलिते परस्परं
निरीक्षमाणे रुधिरौघसंप्लुते।
दिवाकरेऽस्तं गिरिमास्थिते शनै-
रुभे प्रयाते शिबिराय भारत॥ २८२॥

## त्रयोदशदिनयुद्धम्, चक्रव्यूहभेदनम्

(अ. ३३) ततः प्रभातसमये द्रोणं दुर्योधनोऽब्रवीत्॥ २८३॥

नूनं वयं वध्यपक्षे भवतो द्विजसत्तम।
तथा हि नाग्रहीः प्राप्तं समीपेऽद्य युधिष्ठिरम्॥ २८४॥

इच्छतस्ते न मुच्येत चक्षुःप्राप्तो रणे रिपुः।
जिघृक्षतो रक्ष्यमाणः सामरैरपि पाण्डवैः॥ २८५॥

वरं दत्वा मम प्रीतः पश्चाद्विकृतवानसि ।
आशाभङ्गं न कुर्वन्ति भक्तस्यार्या कथञ्चन ॥ २८६ ॥

ततोऽप्रीतस्तथोक्तः सन् भारद्वाजोऽब्रवीन्नृपम् ।
नार्हसे मां तथा ज्ञातुं घटमानं तव प्रिये ॥ २८७ ॥

ससुरासुरगन्धर्वाः सयक्षोरगराक्षसाः ।
नालं लोका रणे जेतुं पाल्यमानं किरीटिना ॥ २८८ ॥

सत्यं तात ब्रवीम्यद्य नैतज्जात्वन्यथा भवेत् ।
अद्यैकं प्रवरं कञ्चित् पातयिष्ये महारथम् ॥ २८९ ॥

तं च व्यूहं विधास्यामि योऽभेद्यस्त्रिदशैरपि ।
योगेन केनचिद्राजन्नर्जुनस्त्वपनीयताम् ॥ २९० ॥

न ह्यज्ञातमसाध्यं वा तस्य संख्येऽस्ति किञ्चन ।
तेनह्युपात्तं सकलं सर्वज्ञानमितस्ततः ॥ २९१ ॥

द्रोणेन व्याहृते त्वेवं संशप्तकगणाः पुनः ।
आह्वयन्नर्जुनं संख्ये दक्षिणामभितो दिशम् ॥ २९२ ॥

ततोऽर्जुनस्याथ परैः सार्धं समभवद्रणः ।
तादृशो यादृशो नान्य श्रुतो दृष्टोऽपि वा क्वचित् ॥ २९३ ॥

(अ. ३४) चक्रव्यूहो महाराज आचार्येणाभिकल्पितः ।
तत्र शक्रोपमाः सर्वे राजानो विनिवेशिताः ॥ २९४ ॥

(अ. ३५) तदनीकमनाधृष्यं भारद्वाजेन रक्षितम् ।
पार्था समभ्यवर्तन्त भीमसेनपुरोगमा ॥ २९५ ॥

समीपे वर्तमानांस्तान् भारद्वाजोऽतिवीर्यवान् ।
असंभ्रान्त शरौघेण महता समवारयत् ॥ २९६ ॥

तमायान्तमभिक्रुद्धं द्रोणं दृष्ट्वा युधिष्ठिरः ।
बहुधा चिन्तयामास द्रोणस्य प्रतिवारणम् ॥ २९७ ॥

अशक्यं तु तमन्येन द्रोणं मत्वा युधिष्ठिर ।
अब्रवीत् परवीरघ्नमभिमन्युमिदं वच ॥ २९८ ॥

एत्य नो नार्जुनो गर्हेद्यथा तात तथा कुरु ।
चक्रव्यूहस्य न वयं विद्मो भेदं कथञ्चन ॥ २९९ ॥

त्वं वाऽर्जुनो वा कृष्णो वा भिन्द्यात् प्रद्युम्न एव वा ।
चक्रव्यूहं महाबाहो पञ्चमो नोपपद्यते ॥ ३०० ॥

अभिमन्यो वरं तात याचतां दातुमर्हसि ।
क्षिप्रमस्त्रं समादाय द्रोणानीकं विशातय ॥ ३०१ ॥

अभि०-द्रोणस्य दृढमत्युग्रमनीकप्रवरं युधि ।
पितॄणां जयमाकांक्षन्नवगाहेऽविलम्बितम् ॥ ३०२ ॥

उपदिष्टो हि मे पित्रा योगोऽनीकविशातने ।
नोत्सहे हि विनिर्गन्तुमहं कस्यांचिदापदि ॥ ३०३ ॥

युधि०-भिन्ध्यनीकं युधां श्रेष्ठ द्वारं सञ्जनयस्व नः ।
वयं त्वानुगमिष्यामो येन त्वं तात यास्यसि ॥ ३०४ ॥

धनञ्जयसमं युद्धे त्वां वयं तात संयुगे ।
प्रणिधायानुयास्यामो रक्षन्त सर्वतोमुखा ॥ ३०५ ॥

(अ. ३६) सौभद्रस्तद्वचः श्रुत्वा धर्मराजस्य धीमतः ।
अचोदयत यन्तारं द्रोणानीकाय भारत ॥ ३०६ ॥

तेन सञ्चोद्यमानस्तु याहि याहीति सारथिः ।
प्रत्युवाच ततो राजन्नभिमन्युमिदं वचः ॥ ३०७ ॥

अतिभारोऽयमायुष्मन्नाहितस्त्वयि पाण्डवैः ।
संप्रधार्य क्षणं बुद्ध्या ततस्त्व योद्धुमर्हसि ॥ ३०८ ॥

आचार्यो हि कृती द्रोणः परमास्त्रे कृतश्रमः ।
अत्यन्तसुखसंवृद्धस्त्वं चायुद्धविशारदः ॥ ३०९ ॥

ततोऽभिमन्युः प्रहसन् सारथिं वाक्यमब्रवीत् ।
सारथे को न्वयं द्रोणः समग्रं क्षत्रमेव वा ॥ ३१० ॥

न ममैतद्द्विषत्सैन्यं कलामर्हति षोडशीम् ॥ ३११ ॥

अपि विश्वजित विष्णुं मातुल प्राप्य सूतज ।
पितरं चार्जुनं युद्धे न भीमांमुपयास्यति ॥ ३१२ ॥
ततः संनोदयामास हयानाशु त्रिहायनान् ।
नातिहृष्टमनाः सूतो हेमभाण्डपरिच्छदान् ॥ ३१३ ॥
तमुदीक्ष्य तथा यान्तं सर्वे द्रोणपुरोगमाः ।
अभ्यवर्तन्त कौरव्याः पाण्डवाश्च तमन्वयुः ॥ ३१४ ॥

स कर्णिकारप्रवरोच्छ्रितध्वजः
सुवर्णवर्मार्जुनिरर्जुनाद्वरः ।
युयुत्सया द्रोणमुखान् महारथान्
समासदत्सिंहशिशुर्यथा द्विपान् ॥ ३१५ ॥

ते विंशतिपदे यत्ताः संप्रहारं प्रचक्रिरे ।
आसीद्गाङ्ग इवावर्तो मुहूर्तमुदधाविव ॥ ३१६ ॥
शूराणां युध्यमानानां निघ्नतामितरेतरम् ।
संग्रामस्तुमुलो राजन् प्रावर्तत सुदारुणः ॥ ३१७ ॥
प्रवर्तमाने संग्रामे तस्मिन्नतिभयंकरे ।
द्रोणस्य मिषतो व्यूहं भित्त्वा प्राविशदार्जुनिः ॥ ३१८ ॥
तं प्रविष्टं विनिघ्नन्तं शत्रुसंघान्महाबलम् ।
हस्त्यश्वरथपत्त्योघाः परिवव्रुरुदायुधाः ॥ ३१९ ॥
तेषामापततां वीरः शीघ्रयोधी महाबलः ।
क्षिप्रास्त्रो न्यवधीद्राजन् मर्मज्ञो मर्मभेदिभिः ॥ ३२० ॥
ततस्तेषां शरीरैश्च शरीरावयवैश्च सः ।
सन्तस्तार क्षितिं क्षिप्रं कुशैर्वेदिमिवाध्वरे ॥ ३२१ ॥
तथा निर्मथितं तेन त्र्यङ्गं तव बलं महत् ।
यथाऽसुरबलं घोरं त्र्यम्बकेन महौजसा ॥ ३२२ ॥
कृत्वा कर्म रणेऽसह्यं परैरार्जुनिराहवे ।
अभिनच्च पदात्योघांस्त्वदीयानेव सर्वशः ॥ ३२३ ॥

(अ. ३९) तद् दृष्ट्वा चरितं तस्य सौभद्रस्यामितौजस ।
समकम्पन्त सैन्यानि त्वदीयानि सहस्रश ॥ ३२४ ॥

अथाब्रवीन्महाप्राज्ञो भारद्वाज प्रतापवान् ।
हर्षेणोत्फुल्लनयन कृपमाभाष्य सत्वरम् ॥ ३२५ ॥

घटयन्निव मर्माणि पुत्रस्य तव भारत ।
अभिमन्युं रणे दृष्ट्वा तदा रणविशारदम् ॥ ३२६ ॥
एष गच्छति सौभद्र· पार्थानां प्रथितो युवा ।
नंदयन् सुहृदः सर्वान् राजानं च युधिष्ठिरम् ॥ ३२७ ॥
नास्य युद्धे समं मन्ये कञ्चिदन्यं धनुर्धरम् ।
इच्छन् हन्यादिमां सेनां किमर्थमपि नेच्छति ॥ ३२८ ॥
द्रोणस्य प्रीतिसंयुक्तं श्रुत्वा वाक्यं तवात्मज· ।
आर्जुनिं प्रति संक्रुद्धो द्रोणं दृष्ट्वा स्मयन्निव ॥ ३२९ ॥
अथ दुर्योधन· कर्णमब्रवीद्बाह्लिकं नृप· ।
दुःशासनं मद्रराजं तांस्तथान्यान् महारथान् ॥ ३३० ॥
सर्वमूर्धाभिषिक्तानामाचार्यो ब्रह्मवित्तम· ।
अर्जुनस्य सुत मूढं नायं हन्तुमिहेच्छति ॥ ३३१ ॥
न ह्यस्य समरे युद्ध्येदन्तकोऽप्याततायिन· ।
किमङ्ग पुनरेवान्यो मर्त्य· सत्यं ब्रवीमि व· ॥ ३३२ ॥
अर्जुनस्य सुतं त्वेष शिष्यत्वादभिरक्षति ।
शिष्या· पुत्राश्च दयितास्तदपत्यं च धर्मिणाम् ॥ ३३३ ॥
संरक्ष्यमाणो द्रोणेन मन्यते वीर्यमात्मन· ।
आत्मसंभावितो मूढस्तं प्रमथ्नीत मा चिरम् ॥ ३३४ ॥
दुःशासनस्तु तच्छ्रुत्वा दुर्योधनवचस्तदा ।
सौभद्रमभ्ययात् क्रुद्ध· शरवर्षैरवाकिरन् ॥ ३३५ ॥
तमतिक्रुद्धमायान्तं तव पुत्रमरिन्दम· ।
अभिमन्यु· शरैस्तीक्ष्णै· षड्विंशत्या समार्पयत् ॥ ३३६ ॥

(अ. ४०) स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ।
दुःशासनो महाराज कश्मलं चाविशन्महत् ॥ ३३७ ॥

सारथिस्त्वरमाणस्तु दुःशासनमचेतनम् ।
रणमध्यादपोवाह सौभद्रशरपीडितम् ॥ ३३८ ॥

ततः कर्णः शरैस्तीक्ष्णैरभिमन्युं दुरासदम् ।
अभ्यवर्षत संक्रुद्धः पुत्रस्य हितकृत् तव ॥ ३३९ ॥

ततो मुहूर्तात् कर्णस्य बाणेनैकेन वीर्यवान् ।
सध्वजं कार्मुकं वीरश्छित्त्वा भूमावपातयत् ॥ ३४० ॥

ततः कृच्छ्रगतं कर्णं दृष्ट्वा कर्णादनन्तरः ।
सौभद्रमभ्ययात् तूर्णं दृढमुद्यम्य कार्मुकम् ॥ ३४१ ॥

(अ. ४१) तस्याभिमन्युरायस्य स्मयन्नेकेन पत्रिणा ।
शिरः प्रच्यावयामास तद्रथात् प्रापतद्भुवि ॥ ३४२ ॥

कर्णिकारमिवाधूतं वातेनापतितं नगात् ।
भ्रातरं निहतं दृष्ट्वा राजन् कर्णो व्यथां ययौ ॥ ३४३ ॥

## जयद्रथेन पाण्डववारणम्

(अ. ४२) गाहमानमनीकानि सदश्वैश्च त्रिहायनैः ।
धृत०— अपि यौधिष्ठिरात् सैन्यात् कश्चिदन्वपतद्बली ॥ ३४४ ॥

सञ्ज०— युधिष्ठिरो भीमसेनः शिखण्डी सात्यकिर्यमौ ।
धृष्टद्युम्नो विराटश्च द्रुपदश्च सकेकयः ।
धृष्टकेतुश्च संरब्धो मत्स्याश्चाभ्यपतन् रणे ॥ ३४५ ॥

तेनैव तु पथा यान्तः पितरो मातुलैः सह ।
अभ्यद्रवन् परीप्सन्तो व्यूढानीकाः प्रहारिणः ॥ ३४६ ॥
तान् दृष्ट्वा द्रवतः शूरांस्त्वदीया विमुखाभवन् ॥ ३४७ ॥
ततस्तद्विमुखं दृष्ट्वा तव सूनोर्महद्बलम् ।
जामाता तव तेजस्वी संस्तंभयिषुराद्रवत् ॥ ३४८ ॥

सैन्धवस्य महाराज पुत्रो राजा जयद्रथः ।
स पुत्रगृद्धिनः पार्थान् सहसैन्यानवारयत् ॥ ३४९ ॥

(अ. ४३) ततस्त्वदीयाः संहृष्टाः साधु साध्विति वादिनः ।
सिन्धुराजस्य तत् कर्म प्रेक्ष्याश्रद्धेयमद्भुतम् ॥ ३५० ॥

सौभद्रेण हतैः पूर्वं सोत्तरायोधिभिर्द्विपैः ।
पाण्डूनां दर्शितः पन्थाः सैन्धवेन निवारितः ॥ ३५१ ॥

यो यो हि यतते भेत्तुं द्रोणानीकं तवाहितः ।
तं तमेव वरं प्राप्य सैन्धवः प्रत्यवारयत् ॥ ३५२ ॥

(अ. ४४) प्रविश्याथार्जुनिः सेनां सत्यसन्धो दुरासदः ।
व्यक्षोभयत तेजस्वी मकरः सागरं यथा ॥ ३५३ ॥

तं सिंहमिव संक्रुद्धं प्रमथ्नन्तं शरैररीन् ।
आरादायान्तमभ्येत्य वसातीयोऽभ्ययाद्द्रुतम् ॥ ३५४ ॥

तमयस्मयवर्माणमिषुणा दूरपातिना ।
विव्याध हृदि सौभद्रः स पपात व्यसुः क्षितौ ॥ ३५५ ॥

(अ. ४५) ये केचन गतास्तस्य समीपमपलायिनः ।
न ते प्रतिन्यवर्तन्त समुद्रादिव सिन्धवः ॥ ३५६ ॥

महाग्राहगृहीतेव वातवेगभयार्दिता ।
समकम्पत सा सेना विभ्रष्टा नौरिवार्णवे ॥ ३५७ ॥

अथ रुक्मरथो नाम मद्रेश्वरसुतो बली ।
त्रस्तामाश्वासयन् सेनामत्रस्तो वाक्यमब्रवीत् ॥ ३५८ ॥

अलं त्रासेन वः शूरा नैष कश्चिन्मयि स्थिते ।
अहमेनं ग्रहीष्यामि जीवग्राहं न संशय ॥ ३५९ ॥

एवमुक्त्वा तु सौभद्रमभिदुद्राव वीर्यवान् ।
सोऽभिमन्युं त्रिभिर्बाणैर्विद्ध्वा वक्षस्यथानदत् ॥ ३६० ॥

स तस्येष्वसनं छित्वा फाल्गुनिः सव्यदक्षिणौ ।
भुजौ शिरश्च स्वक्षिभ्रु क्षितौ क्षिप्रमपातयत् ॥ ३६१ ॥

दृष्ट्वा रुक्मरथं रुग्णं पुत्रं शल्यस्य मानिनम्।
वयस्याः शल्यपुत्रस्य सुवर्णविकृतध्वजाः।
आर्जुनिं शरवर्षेण समन्तात् पर्यवारयन्॥ ३६२॥
धनूंष्यश्वान्नियन्तॄंश्च ध्वजान् बाहूंश्च साङ्गदान्।
शिरांसि च सितैर्बाणैस्तेषां चिच्छेद फाल्गुनिः॥ ३६३॥
चूतारामो यथा भग्नः पञ्चवर्षः फलोपगः।
राजपुत्रशत तद्वत्सौभद्रेण निपातितम्॥ ३६४॥
रथिनः कुञ्जरानश्वान् पदातींश्चापि मज्जतः।
दृष्ट्वा दुर्योधनः क्षिप्रमुपायात्तममर्षितः॥ ३६५॥
तयोः क्षणमिवापूर्णः संग्रामः समपद्यत।
अथाभवत्ते विमुखः पुत्रः शरशताहतः॥ ३६६॥

## लक्ष्मणवधः, बृहद्बलवधः

(अ. ४६) दुर्योधने च विमुखे राजपुत्रशते हते।
धृत०— सौभद्रे प्रतिपत्तिं कां प्रत्यपद्यन्त मामकाः॥ ३६७॥
सञ्जय०—संशुष्कास्याश्चलन्नेत्राः प्रस्विन्ना लोमहर्षणाः।
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये॥ ३६८॥
हतान् भ्रातॄन् पितॄन् पुत्रान् सुहृत्संबन्धिबान्धवान्।
उत्सृज्योत्सृज्य संजग्मुस्त्वरयन्तो हयद्विपान्॥ ३६९॥
एकस्तु सुखसंवृद्धो बाल्याद्दर्पाच्च निर्भयः।
इष्वस्त्रविन्महातेजा लक्ष्मणोऽर्जुनिमभ्ययात्॥ ३७०॥
लक्ष्मणेन तु संगम्य सौभद्रः परवीरहा।
पौत्रस्तव महाराज तव पौत्रमभाषत॥ ३७१॥
सुदृष्टः क्रियतां लोको ह्यमुं लोकं गमिष्यसि।
पश्यतां बान्धवानां त्वां नयामि यमसादनम्॥ ३७२॥
एवमुक्त्वा ततो भल्लं सौभद्रः परवीरहा।
उद्बबर्ह महाबाहुर्निर्मुक्तोरगसन्निभम्॥ ३७३॥

स तस्य भुजनिर्मुक्तो लक्ष्मणस्य सुदर्शनम् ।
सुनसं सुभ्रुकेशान्तं शिरोऽहार्षीत् सकुण्डलम् ॥ ३७४ ॥
लक्ष्मणं निहतं दृष्ट्वा हाहेत्युच्चुक्रुशुर्जनाः ॥ ३७५ ॥
ततो दुर्योधनः क्रुद्धः प्रिये पुत्रे निपातिते ।
हतैनमिति चुक्रोश क्षत्रियान् क्षत्रियर्षभः ॥ ३७६ ॥
ततो द्रोणः कृपः कर्णो द्रोणपुत्रो बृहद्बलः ।
कृतवर्मा च हार्दिक्यः षड्रथाः पर्यवारयन् ॥ ३७७ ॥
(अ.४७) तांस्तु सर्वान् महेष्वासान् सर्वविद्यासु निष्ठितान् ।
व्यष्टंभयद्रणे बाणैः सौभद्रः परवीरहा ॥ ३७८ ॥
ततो वृन्दारकं वीरं कुरूणां कीर्तिवर्धनम् ।
पुत्राणां तव वीराणां पश्यतामवधीद्बली ॥ ३७९ ॥
तं कोसलानामधिपः कर्णिनाऽताडयद्धृदि ।
स तस्याश्वान् ध्वजं चापं सूतं चापातयत् क्षितौ ॥ ३८० ॥
अथ कोसलराजस्तु विरथः खड्गचर्मभृत् ।
इयेष फाल्गुनेः कायाच्छिरो हर्तुं सकुण्डलम् ॥ ३८१ ॥
स कोसलानामधिपं राजपुत्रं बृहद्बलम् ।
हृदि विव्याध बाणेन स भिन्नहृदयोऽपतत् ॥ ३८२ ॥
तथा बृहद्बलं हत्वा सौभद्रो व्यचरद्रणे ।
व्यष्टंभयन्महेष्वासो योधांस्तव शरांबुभिः ॥ ३८३ ॥

## अभिमन्युवधः

(अ. ४८) अथ कर्णस्य सचिवान् षट् शूरांश्चित्रयोधिनः ।
साश्वसूतध्वजरथान् सौभद्रो निजघान ह ॥ ३८४ ॥
मागधस्य तथा पुत्रं हत्वा षड्भिरजिह्मगैः ।
साश्वं ससूतं तरुणमश्वकेतुमपातयत् ॥ ३८५ ॥
मार्तिकावतकं भोजं ततः कुञ्जरकेतनम् ।
क्षुरप्रेण समुन्मथ्य ननाद विसृजन् शरान् ॥ ३८६ ॥

शत्रुञ्जयं चन्द्रकेतुं मेघवेगं सुवर्चसम् ।
सूर्यभासं च पञ्चैतान् हत्वा विव्याध सौबलम् ॥ ३८७ ॥

तं सौबलस्त्रिभिर्विद्ध्वा दुर्योधनमथाब्रवीत् ।
सर्वं एनं विमथ्नीमः पुरैकैकं हिनस्ति नः ॥ ३८८ ॥

अथाब्रवीत् पुनर्द्रोणं कर्णो वैकर्तनो रणे ।
पुरा सर्वान् प्रमथ्नाति ब्रूह्यस्य वधमाशु नः ॥ ३८९ ॥

ततो द्रोणो महेष्वासः सर्वांस्तान् प्रत्यभाषत ।
शीघ्रतां नरसिंहस्य पाण्डवेयस्य पश्यत ॥
धनुर्मण्डलमेवास्य रथमार्गेषु दृश्यते ।
संदधानस्य विशिखान् शीघ्रं चैव विमुञ्चतः ॥ ३९० ॥

आरुजन्नपि मे प्राणान् मोहयन्नपि सायकैः ।
प्रहर्षयति मां भूयः सौभद्रः परवीरहा ॥ ३९१ ॥

अस्यतो लघुहस्तस्य दिशः सर्वा महेषुभिः ।
न विशेषं प्रपश्यामि रणे गाण्डीवधन्वनः ॥ ३९२ ॥

अथ कर्णः पुनर्द्रोणमाहार्जुनिशराहतः ।
स्थातव्यमिति तिष्ठामि पीड्यमानोऽभिमन्युना ॥ ३९३ ॥

तेजस्विनः कुमारस्य शराः परमदारुणाः ।
क्षिण्वन्ति हृदयं मेऽद्य घोराः पावकतेजसः ॥ ३९४ ॥

तमाचार्योऽब्रवीत् कर्णं शनकैः प्रहसन्निव ।
अभेद्यमस्य कवचं युवा चाशुपराक्रमः ॥ ३९५ ॥

सधनुष्को न शक्योऽयमपि जेतुं सुरासुरैः ।
विरथं विधनुष्कं च कुरुष्वैनं यदीच्छसि ॥ ३९६ ॥

तदाचार्यवचः श्रुत्वा कर्णो वैकर्तनस्त्वरन् ।
अस्यतो लघुहस्तस्य पृषत्कैर्धनुराच्छिनत् ॥ ३९७ ॥

अश्वानस्यावधीद्भोजो गौतमः पार्ष्णिसारथी ।
शेषास्तु च्छिन्नधन्वानं शरवर्षैरवाकिरन् ॥ ३९८ ॥

त्वरमाणास्त्वराकाले विरथं षण्महारथाः।
शरवर्षैरकरुणा बालमेकमवाकिरन् ॥ ३९९ ॥

स च्छिन्नधन्वा विरथः स्वधर्ममनुपालयन्।
खड्गचर्मधरः श्रीमानुत्पपात विहायसा ॥ ४०० ॥

तस्य द्रोणोऽच्छिनन्मुष्टौ खड्गं मणिमयत्सरुम्।
क्षुरप्रेण महातेजास्त्वरमाणः सपत्नजित् ॥ ४०१ ॥

राधेयो निशितैर्बाणैर्व्यधमच्चर्म चोत्तमम् ॥ ४०२ ॥

व्यसिचर्मेषुपूर्णाङ्गः सोऽन्तरिक्षात् पुनः क्षितिम्।
आस्थितश्चक्रमुद्यम्य द्रोणं क्रुद्धोऽभ्यधावत ॥ ४०३ ॥

(अ. ४९) विष्णोः स्वसुर्नन्दकरः स विष्णवायुधभूषणः।
रराजातिरथः संख्ये जनार्दन इवापर ॥ ४०४ ॥

मारुतोद्धूतकेशान्तमुद्यतारिवरायुधम्।
वपुः समीक्ष्य पृथ्वीशा दुःसमीक्ष्यं सुरैरपि।
तच्चक्रं भृशमुद्विग्नाः संचिच्छिदुरनेकधा ॥ ४०५ ॥

महारथस्ततः कार्ष्णिः संजग्राह महागदाम्।
ततः सुबलदायादं कालिकेयमपोथयत् ॥ ४०६ ॥

जघान चास्यानुचरान् गान्धारान् सप्तसप्ततिम्।
पुनश्चैव वसातीयान् जघान रथिनो दश ॥ ४०७ ॥

केकयानां रथान् सप्त हत्वा च दश कुञ्जरान्।
दौःशासनिरथं साश्वं गदया समपोथयत् ॥ ४०८ ॥

ततो दौःशासनिः क्रुद्धो गदामुद्यम्य मारिष।
अभिदुद्राव सौभद्रं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ४०९ ॥

तावुद्यतगदौ वीरावन्योन्यवधकाङ्क्षिणौ।
भ्रातृव्यौ संप्रजह्राते पुरेव त्र्यम्बकान्धकौ ॥ ४१० ॥

तावन्योन्यं गदाग्राभ्यामाहत्य पतितौ क्षितौ।
इन्द्रध्वजाविवोत्सृष्टौ रणमध्ये परन्तपौ ॥ ४११ ॥

दौःशासनिरथोत्थाय कुरूणां कीर्तिवर्धनः।
उत्तिष्ठमानं सौभद्रं गदया मूर्ध्न्यताडयत् ॥ ४१२ ॥

गदावेगेन महता व्यायामेन च मोहितः।
विचेता न्यपतद्भूमौ सौभद्रः परवीरहा ॥ ४१३ ॥

एवं विनिहतो राजन्नेको बहुभिराहवे ॥ ४१४ ॥
तं तथा पतितं शूरं तावकाः पर्यवारयन्।
दावं दग्ध्वा यथा शान्तं पावकं शिशिरात्यये ॥ ४१५ ॥

विमृद्य नगशृङ्गाणि सन्निवृत्तमिवानिलम्।
अस्तंगतमिवादित्यं तप्त्वा भारतवाहिनीम् ॥ ४१६ ॥

उपप्लुतं यथा सोमं संशुष्कमिव सागरम्।
पूर्णचन्द्राभवदनं काकपक्षवृताक्षिकम् ॥ ४१७ ॥

तं भूमौ पतितं दृष्ट्वा तावकास्ते महारथाः।
मुदा परमया युक्ताश्चुक्रुशुः सिंहवन्मुहुः ॥ ४१८ ॥

अन्तरिक्षे च भूतानि प्राक्रोशन्त विशाम्पते।
द्रोणकर्णमुखैः षड्भिर्धार्तराष्ट्रैर्महारथैः।
एकोऽयं निहतः शेते नैष धर्मो मतो हि नः ॥ ४१९ ॥

(अ. ५०) वयं तु प्रवरं हत्वा तेषां तैः शरपीडिताः।
निवेशायाभ्युपायामः सायाह्ने रुधिरोक्षिताः ॥ ४२० ॥

निरीक्षमाणास्तु वयं परे चायोधनं शनैः।
अपयाता महाराज ग्लानिं प्राप्ता विचेतसः ॥ ४२१ ॥

## युधिष्ठिरविलापः, मृत्युजन्मकथा

(अ. ५१) ततो युधिष्ठिरो राजा विललाप सुदुःखितः।
अभिमन्यौ हते वीरे भ्रातुः पुत्रे महारथे ॥ ४२२ ॥

कथं द्रक्ष्यामि कौन्तेयं सौभद्रे निहतेऽर्जुनम्।
सुभद्रां वा महाभागां प्रियं पुत्रमपश्यतीम् ॥ ४२३ ॥

किंस्विद्वयमपेतार्थमक्लिष्टमसमञ्जसम् ।
तावुभौ प्रतिवक्ष्यामो हृषीकेशधनञ्जयौ ॥ ४२४ ॥

अहमेव सुभद्रायाः केशवार्जुनयोरपि ।
प्रियकामो जयाकांक्षी कृतवानिदमप्रियम् ॥ ४२५ ॥

न लुब्धो बुध्यते दोषॉल्लोभान्मोहात् प्रवर्तते ।
मधुलिप्सुर्हि नापश्यं प्रपातमहमीदृशम् ॥ ४२६ ॥

यो हि भोज्ये पुरस्कार्यो यानेषु शयनेषु च ।
भूषणेषु च सोऽस्माभिर्बालो युधि पुरस्कृतः ॥ ४२७ ॥

न मे जयः प्रीतिकरो न राज्यं
न चामरत्वं न सुरैः सलोकता ।
इमं समीक्ष्याप्रतिवीर्यपौरुषं
निपातितं देववरात्मजात्मजम् ॥ ४२८ ॥

(अ. ५२) अथैनं विलपन्तं तं कुन्तीपुत्रं युधिष्ठिरम् ।
कृष्णद्वैपायनस्तत्र आजगाम महानृषिः ॥ ४२९ ॥

तं तथा विलपन्तं वै शोकव्याकुलमानसम् ।
उवाच भगवान् व्यासो युधिष्ठिरमिदं वचः ॥ ४३० ॥

युधिष्ठिर महाप्राज्ञ सर्वशास्त्रविशारद ।
व्यसनेषु न मुह्यन्ति त्वादृशा भरतर्षभ ॥ ४३१ ॥

स्वर्गमेष गतः शूरः शत्रून् हत्वा बहून् रणे ।
अबालसदृशं कर्म कृत्वा वै पुरुषोत्तमः ॥ ४३२ ॥

अनतिक्रमणीयो वै विधिरेष युधिष्ठिर ।
देवदानवगन्धर्वान् मृत्युर्हरति भारत ॥ ४३३ ॥

युधि०- कस्य मृत्युः कुतो मृत्युः कथं संहरते प्रजाः ।
हरत्यमरसङ्काश तन्मे ब्रूहि पितामह ॥ ४३४ ॥

तं तथा परिपृच्छन्तं कुन्तीपुत्रं युधिष्ठिरम् ।
आश्वासनमिदं वाक्यमुवाच भगवानृषिः ॥ ४३५ ॥

पुरा कृतयुगे तात आसीद्राजा ह्यकम्पनः।
स शत्रुवशमापन्नो मध्ये संग्राममूर्धनि ॥ ४३६ ॥
तस्य पुत्रो हरिर्नाम नारायणसमो बले।
शत्रुभिर्निहतः संख्ये पृतनाया युधिष्ठिर ॥ ४३७ ॥
स राजा प्रेतकृत्यानि तस्य कृत्वा शुचान्वितः।
शोचन्नहनि रात्रौ च नालभत् सुखमात्मनः ॥ ४३८ ॥
तस्य शोकं विदित्वा तु पुत्रव्यसनसम्भवम्।
आजगामाथ देवर्षिर्नारदोऽस्य समीपतः ॥ ४३९ ॥
स तु राजा महाभागो दृष्ट्वा देवर्षिसत्तमम्।
पूजयित्वा यथान्यायं कथामकथयत् तदा ॥ ४४० ॥
मम पुत्रो महावीर्य इन्द्रविष्णुसमद्युतिः।
शत्रुभिर्बहुभिः संख्ये पराक्रम्य हतो बली ॥ ४४१ ॥
क एष मृत्युर्भगवन् किंवीर्यबलपौरुषः।
एतदिच्छामि तत्त्वेन श्रोतुं मतिमतां वर ॥ ४४२ ॥
नारद०– प्रजाः सृष्ट्वा तदा ब्रह्मा आदिसर्गे पितामहः।
असंहृतं महातेजा दृष्ट्वा जगदिदं प्रभुः ॥ ४४३ ॥
तस्य चिन्ता समुत्पन्ना संहारं प्रति पार्थिव।
चिन्तयन्न ह्यसौ वेद संहारं वसुधाधिप ॥ ४४४ ॥
तस्य रोषान्महाराज खेभ्योऽग्निरुदतिष्ठत।
तेन सर्वा दिशो व्याप्ताः सान्तर्देशा दिधक्षता ॥ ४४५ ॥
ततो दिवं भुवं चैव ज्वालामालासमाकुलम्।
चराचरं जगत् सर्वं ददाह भगवान् प्रभुः ॥ ४४६ ॥
ततो रुद्रो जटी स्थाणुर्निशाचरपतिर्हरः।
जगाम शरणं देवं ब्रह्माणं परमेष्ठिनम् ॥ ४४७ ॥
(अ. ५३) प्रजासर्गनिमित्तं हि कृतो यत्नस्त्वया विभो।
स्थाणु०–त्वया सृष्टाश्च वृद्धाश्च भूतग्रामाः पृथग्विधाः ॥ ४४८ ॥

तास्तवेह पुनः क्रोधात् प्रजा दह्यन्ति सर्वश ।
ता दृष्ट्वा मम कारुण्यं प्रसीद भगवन् प्रभो ॥ ४४९ ॥

नारद०-श्रुत्वा हि वचनं देव प्रजानां हितकारणे ।
तेजः सन्धारयामास पुनरेवान्तरात्मनि ॥ ४५० ॥

उपसंहरतस्तस्य तमग्निं रोषजं तथा ।
प्रादुर्बभूव विश्वेभ्यो गोभ्यो नारी महात्मनः ॥ ४५१ ॥

तामाहूय तदा देवो लोकादिनिधनेश्वरः ।
मृत्यो इति महीपाल जहि चेमा प्रजा इति ॥ ४५२ ॥

त्वं हि संहारबुद्ध्याथ प्रादुर्भूता रुषो मम ।
तस्मात् संहर सर्वास्त्वं प्रजा सजडपंडिताः ।
मम त्वं हि नियोगेन ततः श्रेयो ह्यवाप्स्यसि ॥ ४५३ ॥

एवमुक्ता तु सा तेन मृत्युः कमललोचना ।
दध्यौ चात्यर्थमबला प्ररुरोद च सुस्वरम् ॥ ४५४ ॥

पाणिभ्या प्रतिजग्राह तान्यश्रूणि पितामहः ।
सर्वभूतहितार्थाय ता चाप्यनुनयत् तदा ॥ ४५५ ॥

(अ. ५४) विनीय दुःखमबला आत्मन्येव प्रजापतिम् ।
उवाच प्राञ्जलिर्भूत्वा लतेवावर्जिता पुनः ॥ ४५६ ॥

त्वया सृष्टा कथं नारी ईदृशी वदतां वर ।
क्रूरं कर्माहितं कुर्यां तदेव किमु जानती ॥ ४५७ ॥
बिभेम्यहमधर्माद्धि प्रसीद भगवन् प्रभो ॥ ४५८ ॥

प्रियान् पुत्रान् वयस्यांश्च भ्रातॄन् मातॄः पितॄन् पतीन् ।
अपध्यास्यन्ति मे देव मृतेष्वेभ्यो बिभेम्यहम् ॥ ४५९ ॥

कृपणानां हि रुदतां ये पतन्त्यश्रुबिन्दवः ।
तेभ्योऽहं भगवन्भीता शरणं त्वाऽहमागता ॥ ४६० ॥

इच्छेयं त्वत्प्रसादाद्धि तपस्तप्तुं प्रजेश्वर ।
प्रदिशेमं वरं देव त्वं मह्यं भगवन् प्रभो ॥ ४६१ ॥

तूष्णीमासीत्तदा देव॰ प्रजानामीश्वरेश्वर॰।
प्रसाद चागमत्क्षिप्रमात्मनैव प्रजापति॰॥ ४६२॥

निवृत्तरोषे तस्मिंस्तु भगवत्यपराजिते।
सा कन्यापि जगामाथ समीपात्तस्य धीमत॰॥ ४६३॥

पुष्करेष्वथ गोकर्णे नैमिषे मलये तथा।
अपाकर्षत् स्वक देहं नियमैर्मानसप्रियैः॥ ४६४॥

अनन्यदेवता नित्यं दृढभक्ता पितामहे।
तस्थौ पितामहं चैव तोषयामास धर्मत॰॥ ४६५॥

ततस्तामब्रवीत् प्रीतो लोकानां प्रभवोऽव्यय॰।
सौम्येन मनसा राजन् प्रीत॰ प्रीतमनास्तदा॥ ४६६॥

मृत्यो किमिदमत्यन्तं तपासि चरसीति ह॥ ४६७॥

ततोऽब्रवीत् पुनर्मृत्युर्भगवन्तं पितामहम्।
नाहं हन्यां प्रजा देव स्वस्थाश्चाक्रोशतीस्तथा।
एतदिच्छामि सर्वेश त्वत्तो वरमहं प्रभो॥ ४६८॥

तामब्रवीत् ततो देवो भूतभव्यभविष्यवित्।
अधर्मो नास्ति ते मृत्यो संहरन्त्या इमा॰ प्रजाः॥ ४६९॥

मया चोक्तं मृषा भद्रे भविता न कथञ्चन।
तस्मात् संहर कल्याणि प्रजा॰ सर्वांश्चतुर्विधाः॥ ४७०॥

धर्मः सनातनश्च त्वा सर्वथा पावयिष्यति॥ ४७१॥

सैवमुक्ता महाराज कृताञ्जलिरिदं विभुम्।
पुनरेवाब्रवीद्वाक्यं प्रसाद्य शिरसा तदा॥ ४७२॥

यद्येवमेतत् कर्तव्य मया न स्याद्विना प्रभो।
तवाज्ञा मूर्ध्नि मे न्यस्ता यत् ते वक्ष्यामि तच्छृणु॥ ४७३॥

लोभः क्रोधोऽभ्यसूयेर्ष्या द्रोहो मोहश्च देहिनाम्।
अह्रीश्चान्योन्यपरुषा देह भिन्द्युः पृथग्विधाः॥ ४७४॥

ब्रह्मा०- तथा भविष्यते मृत्यो साधु संहर भोः प्रजा. ।
अधर्मस्ते न भविता नापध्यास्याम्यहं शुभे ॥ ४७५ ॥

यान्यश्रुबिन्दूनि करे ममासं-
स्ते व्याधयः प्राणिनामात्मजाताः ।
ते मारयिष्यन्ति नरान् गतासू-
न्नाधर्मस्ते भविता मा स्म भैषी. ॥ ४७६ ॥

नारद०- सा वै भीता मृत्युसंज्ञोपदेशा-
च्छापाद्भीता बाढमित्यब्रवीत् तम् ।
सा च प्राणं प्राणिनामन्तकाले
कामक्रोधौ त्यज्य हरत्यसक्ता ॥ ४७७ ॥

मृत्युस्त्वेषां व्याधयस्तत्प्रसूता
व्याधी रोगो रुज्यते येन जन्तुः ।
सर्वेषां च प्राणिनां प्रायणान्ते
तस्माच्छोकं मा कृथा निष्फलं त्वम् ॥ ४७८ ॥

सर्वे देवा मर्त्यसंज्ञाविशिष्टा-
स्तमात् पुत्रं मा शुचो राजसिंह ।
स्वर्गं प्राप्तो मोदते ते तनूजो
नित्यं रम्यान् वीरलोकानवाप्य ॥ ४७९ ॥

आत्मानं वै प्राणिनो घ्नन्ति सर्वे
नैतान् मृत्युर्दण्डपाणिर्हिनस्ति ।
तस्मान्मृतान्नानुशोचन्ति धीरा
मृत्युं ज्ञात्वा निश्चयं ब्रह्मसृष्टम् ॥ ४८० ॥

द्वैपा०- एतच्छ्रुत्वाऽर्थवद्वाक्यं नारदेन प्रकाशितम् ।
उवाचाकम्पनो राजा सखायं नारदं तदा ॥ ४८१ ॥

व्यपेतशोकः प्रीतोऽस्मि भगवन्नृषिसत्तम ।
श्रुत्वेतिहासं त्वत्तस्तु कृतार्थोऽस्म्यभिवादये ॥ ४८२ ॥

तथोक्तो नारदस्तेन राज्ञा ऋषिवरोत्तमः।
जगाम नन्दनं शीघ्रं देवर्षिरमितात्मवान् ॥ ४८३ ॥

(अ. ७१) एव ज्ञात्वा स्थिरो भूत्वा जह्यरीन् धैर्यमाप्नुहि।
जीवन्न एव नः शोच्या न तु स्वर्गगतोऽनघ ॥ ४८४ ॥

शोचतो हि महाराज अघमेवाभिवर्धते।
तस्माच्छोकं परित्यज्य श्रेयसे प्रयतेद्बुध ॥ ४८५ ॥

एवं विद्वन्महाराज मा शुच साधयाम्यहम्।
एतावदुक्त्वा भगवास्तत्रैवान्तरधीयत ॥ ४८६ ॥

## अर्जुनकृतः शोकः, जयद्रथवधप्रतिज्ञा

(अ. ७२) तस्मिन्नहनि निर्वृत्ते घोरे प्राणभृतां क्षये।
आदित्येऽस्तं गते श्रीमान् संध्याकाल उपस्थिते ॥ ४८७ ॥

व्यपयातेषु वासाय सर्वेषु भरतर्षभ।
हत्वा संशप्तकव्रातान् दिव्यैरस्त्रैः कपिध्वजः ॥ ४८८ ॥

प्रायात्स शिविरं जिष्णुर्जैत्रमास्थाय तं रथम्।
गच्छन्नेव च गोविन्दं साश्रुकण्ठोऽभ्यभाषत ॥ ४८९ ॥

किं नु मे हृदयं त्रस्तं वाक्च सज्जति केशव।
अनिष्टं चैव मे श्लिष्टं हृदयान्नापसर्पति।
अपि स्वस्ति भवेद्राज्ञः सामात्यस्य गुरोर्मम ॥ ४९० ॥

वासु०- व्यक्तं शिव तव भ्रातुः सामात्यस्य भविष्यति।
मा शुचः किञ्चिदेवान्यत् तत्रानिष्टं भविष्यति ॥ ४९१ ॥

सञ्जय०-ततः सन्ध्यामुपास्यैव वीरौ वीरावसादने।
कथयन्तौ रणे वृत्तं प्रयातौ रथमास्थितौ ॥ ४९२ ॥

ततः स्वशिबिरं प्राप्तौ हतानन्दं हतत्विषम्।
ददृशाते भृशास्वस्थान् पाण्डवान्नष्टचेतसः ॥ ४९३ ॥

दृष्ट्वा भ्रातॄंश्च पुत्रांश्च विमना वानरध्वजः।
अपश्यंश्चैव सौभद्रमिदं वचनमब्रवीत् ॥ ४९४ ॥

मुखवर्णोऽप्रसन्नो व· सर्वेषामेव लक्ष्यते ।
न चाभिमन्युं पश्यामि न च मा प्रतिनन्दथ ॥ ४९५ ॥

मया श्रुतश्च द्रोणेन चक्रव्यूहो विनिर्मित· ।
न च वस्तस्य भेत्ताऽस्ति विना सौभद्रमर्भकम् ॥ ४९६ ॥

न चोपदिष्टस्तस्यासीन्मयानीकाद्विनिर्गमः ।
कच्चिन्न बालो युष्माभि· परानीकं प्रवेशितः ॥ ४९७ ॥

भित्त्वाऽनीकं महेष्वास· परेषा बहुशो युधि ।
कच्चिन्न निहतः संख्ये सौभद्र परवीरहा ॥ ४९८ ॥

वार्ष्णेयीदयितं शूरं मया सततलालितम् ।
यदि पुत्र न पश्यामि यास्यामि यमसादनम् ॥ ४९९ ॥

अभिवादनदक्षं तं पितॄणां वचने रतम् ।
नाद्याहं यदि पश्यामि का शान्तिर्हृदयस्य मे ॥ ५०० ॥

एवं विलप्य बहुधा भिन्नपोतो वणिग्यथा ।
दु खेन महताऽऽविष्टो युधिष्ठिरमपृच्छत ॥ ५०१ ॥

कच्चित्स कदनं कृत्वा परेषां कुरुनन्दन ।
स्वर्गतोऽभिमुख· संख्ये युध्यमानो नरर्षभै· ॥ ५०२ ॥

स नूनं बहुभिर्यत्तैर्युध्यमानो नरर्षभै· ।
असहाय· सहायार्थी मामनुध्यातवान् ध्रुवम् ।
इह मे स्यात् परित्राणं पितेति स पुन· पुनः ॥ ५०३ ॥

यो मां नित्यमदीनात्मा प्रत्युद्गम्याभिनन्दति ।
उपायान्तं रिपून् हत्वा सोऽद्य मां किं न पश्यति ॥ ५०४ ॥

नूनं स पातितः शेते धरण्यां रुधिरोक्षितः ।
शोभयन्मेदिनीं गात्रैरादित्य इव पातित· ॥ ५०५ ॥

सुभद्रामनुशोचामि या पुत्रमपलायिनम् ।
रणे विनिहतं श्रुत्वा शोकार्ता वै विनंक्ष्यति ॥ ५०६ ॥

सुभद्रा वक्ष्यते किं मामभिमन्युमपश्यती।
द्रौपदी चैव दु खार्ते ते च वक्ष्यामि किं त्वहम् ॥ ५०७ ॥
सञ्जय०-पुत्रशोकार्दितं पार्थं ध्यायन्तं साश्रुलोचनम्।
निगृह्य वासुदेवस्तं पुत्राधिभिरभिप्लुतम्।
मैवमित्यब्रवीत् कृष्णस्तीव्रशोकसमन्वितम् ॥ ५०८ ॥
सर्वेषामेष वै पन्थाः शूराणामनिवर्तिनाम्।
क्षत्रियाणा विशेषेण येषां युद्धेन जीविका ॥ ५०९ ॥
गतः पुण्यकृतां लोकानभिमन्युर्न संशयः।
विदित वेदितव्यं ते न शोकं कर्तुमर्हसि।
एवमाश्वासितः पार्थ. कृष्णेनाद्भुतकर्मणा ॥ ५१० ॥
ततोऽब्रवीत्तदा भ्रातॄन् सर्वान्पार्थः सगद्गदान् ॥ ५११ ॥
यद्येवमहमज्ञास्यमशक्तान् रक्षणे मम।
पुत्रस्य पाण्डुपश्चालान् मया गुप्तो भवेत् तत. ॥ ५१२ ॥
अहो व. पौरुषं नास्ति न च वोऽस्ति पराक्रम ।
यत्राभिमन्युः समरे पश्यतां वो निपातितः ॥ ५१३ ॥
आत्मानमेव गर्हेयं यदहं वै सुदुर्बलान्।
युष्मानाज्ञाय निर्यातो भीरूनकृतनिश्चयान् ॥ ५१४ ॥
ततस्तं पुत्रशोकेन भृशं पीडितमानसम्।
राजीवलोचनं क्रुद्धं राजा वचनमब्रवीत् ॥ ५१५ ॥
(अ. ७३) त्वयि याते महाबाहो संशप्तकबलं प्रति।
प्रयत्नमकरोत् तीव्रमाचार्यो ग्रहणे मम ॥ ५१६ ॥
व्यूढानीका वयं द्रोणं वारयामः स्म सर्वशः ॥ ५१७ ॥
स वार्यमाणो रथिभिर्मयि चापि सुरक्षिते।
अस्मानभिजगामाशु पीडयन्निशितैः शरैः ॥ ५१८ ॥
ते पीड्यमाना द्रोणेन द्रोणानीकं न शक्नुमः।
प्रतिवीक्षितुमप्याजौ भेत्तुं तत् कुत एव तु ॥ ५१९ ॥

वयं त्वप्रतिमं वीर्ये सर्वे सौभद्रमात्मजम् ।
उक्तवन्तः स्म तं तात भिन्ध्यनीकमिति प्रभो ॥ ५२० ॥
स तथा नोदितोऽस्माभिः सदश्व इव वीर्यवान् ।
असह्यमपि तं भारं वोढुमेवोपचक्रमे ॥ ५२१ ॥
स तवास्त्रोपदेशेन वीर्येण च समन्वितः ।
प्राविशत्तद्बलं बालः सुपर्ण इव सागरम् ॥ ५२२ ॥
तेऽनुयाता वयं वीरं सात्वतीपुत्रमाहवे ।
प्रवेष्टुकामास्तेनैव येन स प्राविशच्चमूम् ॥ ५२३ ॥
ततः सैन्धवको राजा क्षुद्रस्तात जयद्रथः ।
वरदानेन रुद्रस्य सर्वान्नः समवारयत् ॥ ५२४ ॥
ततो द्रोणः कृपः कर्णो द्रौणिः कौसल्य एव च ।
कृतवर्मा च सौभद्रं षड्रथाः पर्यवारयन् ॥ ५२५ ॥
परिवार्य तु तैः सर्वैर्युधि बालो महारथैः ।
यतमानः परं शक्त्या बहुभिर्विरथीकृतः ॥ ५२६ ॥
ततो दौःशासनिः क्षिप्रं तथा तैर्विरथीकृतम् ।
संशयं परमं प्राप्य दिष्टान्तेनाभ्ययोजयत् ॥ ५२७ ॥
ततोऽर्जुनो वचः श्रुत्वा धर्मराजेन भाषितम् ।
हा पुत्र इति निःश्वस्य व्यथितो न्यपतद्भुवि ॥ ५२८ ॥
प्रतिलभ्य ततः संज्ञां वासविः क्रोधमूर्च्छितः ।
कम्पमानो ज्वरेणेव निःश्वसंश्च मुहुर्मुहुः ॥ ५२९ ॥
पाणिं पाणौ विनिष्पिष्य श्वसमानोऽश्रुनेत्रवान् ।
उन्मत्त इव विप्रेक्षन्निदं वचनमब्रवीत् ॥ ५३० ॥
सत्यं वः प्रतिजानामि श्वोऽस्मि हन्ता जयद्रथम् ।
न चेद्वधभयाद्भीतो धार्तराष्ट्रान् प्रहास्यति ॥ ५३१ ॥
न चास्मान् शरणं गच्छेन् कृष्णं वा पुरुषोत्तमम् ।
भवन्तं वा महाराज श्वोऽस्मि हन्ता जयद्रथम् ॥ ५३२ ॥

धार्तराष्ट्रप्रियकरं मयि विस्मृतसौहृदम् ।
पापं बालवधे हेतुं श्वोऽस्मि हन्ता जयद्रथम् ॥ ५३३ ॥

इमां चाप्यपरां भूयः प्रतिज्ञां मे निबोधत ।
यद्यस्मिन्नहते पापे सूर्योऽस्तमुपयास्यति ।
इहैव संप्रवेष्टाऽहं ज्वलितं जातवेदसम् ॥ ५३४ ॥

अर्जुनेन प्रतिज्ञाते पाञ्चजन्यं जनार्दनः ।
प्रदध्मौ तत्र संक्रुद्धो देवदत्तं च फाल्गुनः ॥ ५३५ ॥

ततो वादित्रघोषाश्च प्रादुरासन् सहस्रशः ।
सिंहनादश्च पाण्डूनां प्रतिज्ञाते महात्मना ॥ ५३६ ॥

(अ. ७४) श्रुत्वा तु तं महाशब्दं पाण्डूनां जयगृद्धिनाम् ।
चारैः प्रवेदिते तत्र समुत्थाय जयद्रथः ।
जगाम समितिं राज्ञां सैन्धवो विमृशन् बहु ॥ ५३७ ॥

स तेषां नरदेवानां सकाशे पर्यदेवयन् ।
अभिमन्योः पितुर्भीतः सव्रीडो वाक्यमब्रवीत् ॥ ५३८ ॥

योऽसौ पाण्डोः किल क्षेत्रे जातः शक्रेण कामिना ।
स निनीषति दुर्बुद्धिर्मां किलैकं यमक्षयम् ॥ ५३९ ॥

तत् स्वस्ति वोऽस्तु यास्यामि स्वगृहं जीवितेप्सया ।
अथ वास्त्रप्रतिबलास्त्रात मां क्षत्रियर्षभाः ।
पार्थेन प्रार्थितं वीरास्ते सन्दत्त ममाभयम् ॥ ५४० ॥

प्रहर्षं पाण्डवेयानां श्रुत्वा मम महद्भयम् ।
सीदन्ति मम गात्राणि मुमूर्षोरिव पार्थिवाः ॥ ५४१ ॥

एवं विलपमानं तं भयाद्व्याकुलचेतसम् ।
आत्मकार्यगरीयस्त्वाद्राजा दुर्योधनोऽब्रवीत् ॥ ५४२ ॥

अक्षौहिण्यो दशैका च मदीयास्तव रक्षणे ।
यत्ता योत्स्यन्ति मा भैस्त्वं सैन्धव व्येतु ते भयम् ॥ ५४३ ॥

द्रोण०– न तु ते युधि संत्रासः कार्यः पार्थात् कथञ्चन।
अहं हि रक्षिता तात भयात्त्वां नात्र संशयः ॥ ५४४ ॥
न हि मद्बाहुगुप्तस्य प्रभवन्त्यमरा अपि।
व्यूहयिष्यामि तं व्यूहं यं पार्थो न तरिष्यति ॥ ५४५ ॥
तस्माद्युद्ध्यस्व मा भैस्त्वं स्वधर्ममनुपालय।
पितृपैतामहं मार्गमनुयाहि महारथ ॥ ५४६ ॥
तपस्तप्त्वा तु याँल्लोकान् प्राप्नुवन्ति तपस्विनः।
क्षत्रधर्माश्रिता वीराः क्षत्रियाः प्राप्नुवन्ति तान् ॥ ५४७ ॥
एवमाश्वासितो राजा भारद्वाजेन सैन्धवः।
अपानुदद्भयं पार्थाद्युद्धाय च मनो दधे ॥ ५४८ ॥
(अ. ७५) प्रतिज्ञाते तु पार्थेन सिन्धुराजवधे तदा।
वासुदेवो महाबाहुर्धनञ्जयमभाषत ॥ ५४९ ॥
भ्रातॄणां मतमज्ञाय त्वया वाचा प्रतिश्रुतम्।
सैन्धवं चास्मि हन्तेति तत्साहसमिदं कृतम् ॥ ५५० ॥
असंमन्त्र्य मया सार्धमतिभारोऽयमुद्यतः।
कथं तु सर्वलोकस्य नावहास्या भवेमहि ॥ ५५१ ॥
धार्तराष्ट्रस्य शिबिरे मया प्रणिहिताश्चराः।
त इमे शीघ्रमागम्य प्रवृत्तिं वेदयन्ति नः ॥ ५५२ ॥
त्वया वै संप्रतिज्ञाते सिन्धुराजवधे प्रभो।
सिंहनादः सवादित्रः सुमहानिह तैः श्रुतः ॥ ५५३ ॥
तैर्यतद्भिरियं सत्या श्रुता सत्यवतस्तव।
प्रतिज्ञा सिन्धुराजस्य वधे राजीवलोचन ॥ ५५४ ॥
ततो विमनसः सर्वे त्रस्ताः क्षुद्रमृगा इव।
आसन्सुयोधनामात्याः स च राजा जयद्रथः ॥ ५५५ ॥
स मन्त्रकाले संमन्त्र्य सर्वां नैःश्रेयसीं क्रियाम्।
सुयोधनमिदं वाक्यमब्रवीद्राजसंसदि ॥ ५५६ ॥

मामसौ पुत्रहन्तेति श्वोऽभियाता धनञ्जय.।
प्रतिज्ञातो हि सेनाया मध्ये तेन वधो मम ॥ ५५७ ॥
ते मां रक्षत संग्रामे मा वो मूर्ध्नि धनञ्जयः।
पदं कृत्वाऽऽप्नुयाल्लक्ष्यं तस्मादत्र विधीयताम् ॥ ५५८ ॥
अथ रक्षा न मे संख्ये क्रियते कुरुनन्दन।
अनुजानीहि मां राजन् गमिष्यामि गृहान् प्रति ॥ ५५९ ॥
सोऽहमिच्छाम्यनुज्ञातुं रक्षितुं वा महात्मना।
द्रोणेन सहपुत्रेण वीरेण यदि मन्यसे ॥ ५६० ॥
स राज्ञा स्वयमाचार्यो भृशमत्रार्थितोऽर्जुन।
संविधानं च विहितं रथाश्च किल सज्जिताः ॥ ५६१ ॥
कर्णो भूरिश्रवा द्रौणिर्वृषसेनश्च दुर्जयः।
कृपश्च मद्रराजश्च षडेतेऽस्य पुरोगमाः ॥ ५६२ ॥
शकटः पद्मपश्चार्धो व्यूहो द्रोणेन निर्मित.।
पद्मकर्णिकमध्यस्थसूचीपार्श्वे जयद्रथ.।
स्थास्यते रक्षितो वीरैः सिन्धुराट् स सुदुर्मदः ॥ ५६३ ॥
एतानजित्वा षड्रथान्नैव प्राप्यो जयद्रथः॥ ५६४ ॥
तेषामेकैकशो वीर्यं षण्णां त्वमनुचिन्तय।
सहिता हि नरव्याघ्र न शक्या जेतुमञ्जसा ॥ ५६५ ॥
भूयस्तु मन्त्रयिष्यामि नीतिमात्महिताय वै।
मन्त्रज्ञैः सचिवैः सार्धं सुहृद्भिः कार्यसिद्धये ॥ ५३६ ॥
(अ. ७६) षड्रथान् धार्तराष्ट्रस्य मन्यसे यान् बलाधिकान्।
अर्जुन०— तेषां वीर्यं ममार्धेन न तुल्यमिति मे मतिः ॥ ५६७ ॥
तथा प्रभाते कर्ताऽस्मि यथा कृष्ण सुयोधनः।
नान्यं धनुर्धरं लोके मंस्यते मत्समं युधि ॥ ५६८ ॥
गाण्डीवं च धनुर्दिव्यं योद्धा चाहं नरर्षभ।
त्वं च यन्ता हृषीकेश किं नु स्यादजितं मया ॥ ५६९ ॥

तव प्रसादाद्भगवन् किं नावाप्तं रणे मम।
अविषह्यं हृषीकेश किं जानन्मां विगर्हसे ॥ ५७० ॥

यथा लक्ष्म स्थिरं चन्द्रे समुद्रे च यथा जलम्।
एवमेतां प्रतिज्ञां मे सत्यां विद्धि जनार्दन ॥ ५७१ ॥

तथाभियामि संग्रामं न जीयेयं जयामि च।
तेन सत्येन संग्रामे हतं विद्धि जयद्रथम् ॥ ५७२ ॥

ध्रुवं वै ब्राह्मणे सत्यं ध्रुवा साधुषु सन्नति।
श्रीर्ध्रुवाऽपि च यज्ञेषु ध्रुवो नारायणे जय ॥ ५७३ ॥

एवमुक्त्वा हृषीकेशं स्वयमात्मानमात्मना।
संदिदेशार्जुनो नर्दन् वासवि केशवं प्रभुम् ॥ ५७४ ॥

यथा प्रभातां रजनीं कल्पित स्याद्रथो मम।
तथा कार्यं त्वया कृष्ण कार्यं हि महदुद्यतम् ॥ ५७५ ॥

(अ. ७८) ततोऽभ्यनुज्ञाय नृपान् कृष्णो बन्धूंस्तथार्जुनम्।
विवेशान्त पुरे राजंस्ते च जग्मुर्यथालयम् ॥ ५७६ ॥

(अ. ७९) ततोऽर्जुनस्य भवनं प्रविश्याप्रतिमं विभु।
स्पृष्ट्वाऽभ पुण्डरीकाक्ष स्थण्डिले शुभलक्षणे।
संतस्तार शुभां शय्यां दर्भैर्वैदूर्यसन्निभै ॥ ५७७ ॥

ततो माल्येन विधिवल्लाजैर्गन्धै सुमङ्गलै।
अलंचकार तां शय्यां परिवार्यायुधोत्तमै ॥ ५७८ ॥

तत स्पृष्टोदके पार्थे विनीता परिचारका।
दर्शयन्तोऽन्तिके चक्रुर्नैशं त्रैयम्बकं बलिम् ॥ ५७९ ॥

तत प्रीतमना पार्थो गन्धमाल्यैश्च माधवम्।
अलंकृत्योपहारं तं नैशं तस्मै न्यवेदयत् ॥ ५८० ॥

स्मयमानस्तु गोविन्द फाल्गुनं प्रत्यभाषत।
सुप्यतां पार्थ भद्रं ते कल्याणाय व्रजाम्यहम् ॥ ५८१ ॥

स्थापयित्वा ततो द्वा स्थान् गोप्तॄंश्चात्तायुधान्नरान् ।
दारुकानुगत श्रीमान् विवेश शिविरं स्वकम् ।
शिश्ये च शयने शुभ्रे वहुकृत्यं विचिन्तयन् ॥ ५८२ ॥

तस्यां रजन्यां मध्ये तु प्रतिवुद्धो जनार्दन ।
स्मृत्वा प्रतिज्ञां पार्थस्य दारुकं प्रत्यभाषत ॥ ५८३ ॥

अर्जुनेन प्रतिज्ञातमार्तेन हतबन्धुना ।
जयद्रथं वधिष्यामि श्वोभूत इति दारुक ॥ ५८४ ॥

तत्तु दुर्योधन श्रुत्वा मन्त्रिभिर्मन्त्रयिष्यति ।
यथा जयद्रथं पार्थो न हन्यादिति संयुगे ॥ ५८५ ॥

अक्षौहिण्यो हि ता सर्वा रक्षिष्यन्ति जयद्रथम् ।
सोऽपि तं नोत्सहेताजौ हन्तुं द्रोणेन रक्षितम ॥ ५८६ ॥

सोऽहं श्वस्तत् करिष्यामि यथा कुन्तीसुतोऽर्जुन ।
अप्राप्तेऽस्तं दिनकरे हनिष्यति जयद्रथम् ॥ ५८७ ॥

न हि दारा न मित्राणि ज्ञातयो न च बान्धवाः ।
कश्चिदन्य· प्रियतरः कुन्तीपुत्रान्ममार्जुनात् ॥ ५८८ ॥

अनर्जुनमिमं लोकं मुहूर्तमपि दारुक ।
उदीक्षितुं न शक्तोऽहं भविता न च तत् तथा ॥ ५८९ ॥

अहं विजित्य तान् सर्वान् सहसा सहयद्विपान् ।
अर्जुनार्थे हनिष्यामि सकर्णान् ससुयोधनान् ॥ ५९० ॥

श्वः सदेवाः सगन्धर्वा· पिशाचोरगराक्षसाः ।
ज्ञास्यन्ति लोकाः सर्वे मां सुहृदं सव्यसाचिनः ॥ ५९१ ॥

यस्तं द्वेष्टि स मां द्वेष्टि यस्तं चानु स मामनु ।
इति संकल्प्यतां बुद्ध्या शरीरार्धं ममार्जुनः ॥ ५९२ ॥

यथा त्वं मे प्रभातायामस्यां निशि रथोत्तमम् ।
कल्पयित्वा यथाशास्त्रमादाय व्रज संयतः ॥ ५९३ ॥

पाञ्चजन्यस्य निर्घोषमार्षभेणैव पूरितम् ।
श्रुत्वा च भैरवं नादमुपेयास्त्वं जवेन माम् ॥ ५९४ ॥

एकाह्नाऽहममर्षं च सर्वदुःखानि चैव ह ।
भ्रातुः पैतृष्वसेयस्य व्यपनेष्यामि दारुक ॥ ५९५ ॥ ० ० ०]

सर्वोपायैर्यतिष्यामि यथा बीभत्सुराहवे ।
पश्यतां धार्तराष्ट्राणां हनिष्यति जयद्रथम् ॥ ५९६ ॥

## चतुर्दशदिनयुद्धम् , अर्जुनस्य व्यूहप्रवेशः

(अ. ८७) तस्यां निशायां व्युष्टायां द्रोणः शस्त्रभृतां वरः ।
स्वान्यनीकानि सर्वाणि प्राक्रामद्व्यूहितुं ततः ॥ ५९७ ॥

तेष्वनीकेषु सर्वेषु स्थितेष्वाहवनन्दिषु ।
भारद्वाजो महाराज जयद्रथमथाब्रवीत् ॥ ५९८ ॥

त्वं चैव सौमदत्तिश्च कर्णश्चैव महारथः ।
अश्वत्थामा च शल्यश्च वृषसेनः कृपस्तथा ॥ ५९९ ॥

शतं चाश्वसहस्राणां रथानामयुतानि षट् ।
द्विरदानां प्रभिन्नानां सहस्राणि चतुर्दश ॥ ६०० ॥

पदातीनां सहस्राणि दंशितान्येकविंशतिः ।
गव्यूतिषु त्रिमात्रासु मामनासाद्य तिष्ठत ॥ ६०१ ॥

तत्रस्थं त्वां न संसोढुं शक्ता देवाः सवासवाः ।
किं पुनः पाण्डवाः सर्वे समाश्वसिहि सैन्धव ॥ ६०२ ॥

एवमुक्तः समाश्वस्तः सिन्धुराजो जयद्रथः ।
संप्रायात् सह गान्धारैर्वृतस्तैश्च महारथैः ॥ ६०३ ॥

ततो दुःशासनश्चैव विकर्णश्च तवात्मजौ ।
सिन्धुराजार्थसिद्ध्यर्थमग्रानीके व्यवस्थितौ ॥ ६०४ ॥

दीर्घो द्वादश गव्यूतिः पश्चार्धे पञ्च विस्तृतः ।
व्यूहस्तु चक्रशकटो भारद्वाजेन निर्मितः ॥ ६०५ ॥

पश्चार्धे तस्य पद्मस्तु गर्भव्यूहः सुदुर्भिदः।
सूची पद्मस्य गर्भस्थो गूढो व्यूहः कृतः पुनः ॥ ६०६ ॥
जयद्रथस्ततो राजा सूचीपार्श्वे व्यवस्थितः ॥ ६०७ ॥
शकटस्य तु राजेन्द्र भारद्वाजो मुखे स्थितः।
अनु तस्याभवद्भोजो जुगोपैनं ततः स्वयम् ॥ ६०८ ॥

(अ. ८८) ततो व्यूढेष्वनीकेषु समुत्क्रुष्टेषु मारिष।
ताड्यमानासु भेरीषु मृदंगेषु नदत्सु च ॥ ६०९ ॥
रथप्रवरमास्थाय नरो नारायणानुगः।
विधुन्वन् गाण्डिवं संख्ये बभौ सूर्य इवोदितः ॥ ६१० ॥

(अ. ८९) ततः सायकवर्षेण पर्जन्य इव वृष्टिमान्।
परानवाकिरत् पार्थः पर्वतानिव नीरदः ॥ ६११ ॥
अयं पार्थः कुतः पार्थ एष पार्थ इति प्रभो।
तव सैन्येषु योधानां पार्थभूतमिवाभवत् ॥ ६१२ ॥
यो यः स्म समरे पार्थं प्रतिसंचरते नरः।
तस्य तस्यान्तको बाणः शरीरमुपसर्पति ॥ ६१३ ॥
तत्तथा तव पुत्रस्य सैन्यं युधि परंतप।
प्रभग्नं द्रुतमाविग्नमतीव शरपीडितम् ॥ ६१४ ॥

(अ ९०) तथाऽर्जुनेन संभग्ने तस्मिंस्तव बलेऽनघ।
हतवीरे हतोत्साहे पलायनकृतक्षणे ॥ ६१५ ॥
नागानीकेन महता ग्रसन्निव महीमिमाम्।
दुःशासनो महाराज सव्यसाचिनमावृणोत् ॥ ६१६ ॥
सिंहनादेन महता नरसिंहो धनञ्जयः।
गजानीकममित्राणामभीतो व्यधमच्छरैः ॥ ६१७ ॥
ते गजा विशिखैस्तीक्ष्णैर्युधि गाण्डीवचोदितैः।
अनेकशतसाहस्रैः सर्वाङ्गेषु समर्पिताः।
निपेतुरनिशं भूमौ छिन्नपक्षा इवाद्रयः ॥ ६१८ ॥

ततो दुःशासनस्त्रस्तः सहानीकः शरार्दितः ।
द्रोणं त्रातारमाकांक्षन् शकटव्यूहमभ्यगात् ॥ ६१९ ॥

(अ. ९१) दुःशासनबलं हत्वा सव्यसाची महारथः ।
सिन्धुराजं परीप्सन् वै द्रोणानीकमुपाद्रवत् ॥ ६२० ॥

स तु द्रोणं समासाद्य व्यूहस्य प्रमुखे स्थितम् ।
कृताञ्जलिरिदं वाक्यं कृष्णस्यानुमतेऽब्रवीत् ॥ ६२१ ॥

शिवेन ध्याहि मां ब्रह्मन् स्वस्ति चैव वदस्व मे ।
भवत्प्रसादादिच्छामि प्रवेष्टुं दुर्भिदां चमूम् ॥ ६२२ ॥

भवान् पितृसमो मह्यं धर्मराजसमोऽपि च ।
तथा कृष्णसमश्चैव सत्यमेतद्ब्रवीमि ते ॥ ६२३ ॥

अश्वत्थामा यथा तात रक्षणीयस्त्वयाऽनघ ।
तथाहमपि ते रक्ष्यः सदैव द्विजसत्तम ॥ ६२४ ॥

तव प्रसादादिच्छेयं सिन्धुराजानमाहवे ।
निहन्तुं द्विपदां श्रेष्ठ प्रतिज्ञां रक्ष मे प्रभो ॥ ६२५ ॥

एवमुक्तस्तदाचार्यः प्रत्युवाच स्मयन्निव ।
मामजित्वा न बीभत्सो शक्यो जेतुं जयद्रथः ॥ ६२६ ॥

एतावदुक्त्वा तं द्रोणः शरव्रातैरवाकिरत् ।
सरथाश्वध्वजं तीक्ष्णैः प्रहसन्वै ससारथिम् ॥ ६२७ ॥

ततोऽब्रवीद्वासुदेवो धनञ्जयमिदं वचः ।
पार्थ पार्थ महाबाहो न नः कालात्ययो भवेत् ॥ ६२८ ॥

द्रोणमुत्सृज्य गच्छामः कृत्यमेतन्महत्तरम् ।
पार्थश्चाप्यब्रवीत् कृष्णं यथेष्टमिति केशवम् ॥ ६२९ ॥

ततः प्रदक्षिणं कृत्वा द्रोणं प्रायान्महाभुजम् ।
परिवृत्तश्च बीभत्सुरगच्छद्विसृजञ्शरान् ॥ ६३० ॥

ततोऽब्रवीत् स्वयं द्रोणः क्वेदं पाण्डव गम्यते ।
ननु नाम रणे शत्रुमजित्वा न निवर्तसे ॥ ६३१ ॥

अर्जुन०-गुरुर्भवान्न मे शत्रुः शिष्यः पुत्रसमोऽस्मि ते।
न चास्ति स पुमाँल्लोके यस्त्वां युधि पराजयेत् ॥ ६३२ ॥

एवं ब्रुवाणो बीभत्सुर्जयद्रथवधोत्सुकः।
त्वरायुक्तो महाबाहुस्त्वत्सैन्यं समुपाद्रवत् ॥ ६३३ ॥

तं चक्ररक्षौ पाञ्चाल्यौ युधामन्यूत्तमौजसौ।
अन्वयातां महात्मानौ विशन्तं तावकं बलम् ॥ ६३४ ॥

ततो जयो महाराज कृतवर्मा च सात्वतः।
काम्बोजश्च श्रुतायुश्च धनञ्जयमवारयन् ॥ ६३५ ॥

(अ. ९२) सन्निरुद्धस्तु तैः पार्थो महाबलपराक्रमः।
द्रुतं समनुयातश्च द्रोणेन रथिनां वरः ॥ ६३६ ॥

किरन्निषुगणांस्तीक्ष्णान् स रश्मीनिव भास्करः।
तापयामास तत् सैन्यं देहं व्याधिगणो यथा ॥ ६३७ ॥

द्रोणस्तु पञ्चविंशत्या श्वेतवाहनमार्दयत्।
वासुदेवं च सप्तत्या बाह्वोरुरसि चाशुगैः ॥ ६३८ ॥

अथ तौ वध्यमानौ तु द्रोणेन रथसत्तमौ।
आवर्जयेतां दुर्धर्षं युगान्ताग्निमिवोत्थितम् ॥ ६३९ ॥

ततो भोजो नरव्याघ्रो दुर्धर्षं कुरुसत्तमम्।
अविध्यत् तूर्णमव्यग्रो दशभिः कंकपत्रिभिः ॥ ६४० ॥

ततः स कृतवर्माणं मोहयित्वाऽर्जुनः शरैः।
अभ्यगाज्जवनैरश्वैः काम्बोजानामनीकिनीम् ॥ ६४१ ॥

चक्ररक्षौ तु पाञ्चाल्यावर्जुनस्य पदानुगौ।
पर्यवारयदायान्तौ कृतवर्मा रथेषुभिः ॥ ६४२ ॥

तेनान्तरेण बीभत्सुर्विवेशामित्रवाहिनीम्।
न लेभाते तु तौ द्वारं वारितौ कृतवर्मणा ॥ ६४३ ॥

तं दृष्ट्वा तु तथा यान्तं शूरो राजा श्रुतायुधः
अभ्यद्रवद्रणे पार्थं गदामुद्यम्य वीर्यवान् ॥ ६४४ ॥

वरुणस्यात्मजो वीरः स तु राजा श्रुतायुधः।
पर्णाशा जननी यस्य शीततोया महानदी ॥ ६४५ ॥

तस्य माताऽब्रवीद्राजन् वरुणं पुत्रकारणात्।
अवध्योऽयं भवेल्लोके शत्रूणां तनयो मम ॥ ६४६ ॥

वरुणस्त्वब्रवीत् प्रीतो ददाम्यस्मै वरं हितम्।
दिव्यमस्त्रं सुतस्तेऽयं येनावध्यो भविष्यति ॥ ६४७ ॥

नास्ति चाप्यमरत्वं वै मनुष्यस्य कथञ्चन।
सर्वेणावश्यमर्तव्यं जातेन सरिता वरे ॥ ६४८ ॥

दुर्धर्षस्त्वेष शत्रूणां रणेषु भविता सदा।
अस्त्रस्यास्य प्रभावाद्वै व्येतु ते मानसो ज्वरः ॥ ६४९ ॥

इत्युक्त्वा वरुणः प्रादाद्गदां मन्त्रपुरस्कृताम्।
यामासाद्य दुराधर्षः सर्वलोके श्रुतायुधः ॥ ६५० ॥

उवाच चैन भगवान् पुनरेव जलेश्वरः।
अयुध्यति न मोक्तव्या सा त्वय्येव पतेदिति ॥ ६५१ ॥

हन्यादेषा प्रतीपं हि प्रयोक्तारमपि प्रभो।
न चाकरोत् स तद्वाक्यं प्राप्ते काले श्रुतायुध ॥ ६५२ ॥

स तया वीरघातिन्या जनार्दनमताडयत् ॥ ६५३ ॥

प्रत्युद्यान्ती तमेवैषा कृत्येव दुरधिष्ठिता।
जघान चास्थितं वीरं श्रुतायुधममर्षणम् ॥ ६५४ ॥

ततः काम्बोजराजस्य पुत्रः शूरः सुदक्षिण।
अभ्ययाज्जवनैरश्वैः फाल्गुनं शत्रुसूदनम् ॥ ६५५ ॥

तस्य पार्थः शरान् सप्त प्रेषयामास भारत।
ते तं शूरं विनिर्भिद्य प्राविशन् धरणीतलम् ॥ ६५६ ॥

स भिन्नवर्मा स्रस्ताङ्गः प्रभ्रष्टमुकुटाङ्गदः।
पपाताभिमुखः शूरो यंत्रमुक्त इव ध्वजः ॥ ६५७ ॥

(अ. ९३) हते सुदक्षिणे राजन् वीरे चैव श्रुतायुधे।
जवेनाभ्यद्रवन् पार्थं कुपिताः सैनिकास्तव॥ ६५८॥

तेषामापततां तूर्णं गाण्डीवप्रेषितैः शरैः।
शिरांसि पातयामास बाहूंश्चापि धनञ्जय॥ ६५९॥

तेषु तूत्साद्यमानेषु क्रोधामर्षसमन्वितौ।
श्रुतायुश्चाच्युतायुश्च धनञ्जयमयुध्यताम्॥ ६६०॥

तौ च फाल्गुनबाणौघैर्विबाहुशिरसौ कृतौ।
वसुधामन्वपद्येतां वातनुन्नाविव द्रुमौ॥ ६६१॥

श्रुतायुषं च निहतं प्रेक्ष्य चैवाच्युतायुषम्।
नियतायुश्च संक्रुद्धो दीर्घायुश्चैव भारत॥ ६६२॥

पुत्रौ तयोर्नरश्रेष्ठौ कौन्तेयं प्रतिजग्मतुः।
किरन्तौ विविधान्बाणान्पितृव्यसनकर्शितौ॥ ६६३॥

तावर्जुनो मुहूर्तेन शरैः सन्नतपर्वभिः।
प्रैषयत् परमक्रुद्धो यमस्य सदनं प्रति॥ ६६४॥

लोडयन्तमनीकानि द्विपं पद्मसरो यथा।
नाशक्नुवन्वारयितुं पार्थं क्षत्रियपुङ्गवाः॥ ६६५॥

अम्बष्ठस्तु गदां गृह्य कोपपर्याकुलेक्षणः।
आससाद रणे पार्थं केशवं च महारथम्॥ ६६६॥

तस्यार्जुनः क्षुरप्राभ्यां सगदावुद्यतौ भुजौ।
चिच्छेदेन्द्रध्वजाकारौ शिरश्चान्येन पत्रिणा॥ ६६७॥

## द्रोणकृतं दुर्योधनकवचबन्धनम्

(अ. ९४) ततः प्रविष्टे कौन्तेये सिन्धुराजजिघांसया।
प्रभग्नं स्वबलं दृष्ट्वा पुत्रस्ते द्रोणमभ्यगात्॥ ६६८॥

त्वरन्नेकरथेनैव समेत्य द्रोणमब्रवीत्।
गतः स पुरुषव्याघ्रः प्रमथ्यैतां महाचमूम्॥ ६६९॥

अथ बुद्ध्या समीक्षस्व किन्नु कार्यमनन्तरम् ।
अर्जुनस्य विघाताय दारुणेऽस्मिन् जनक्षये ॥ ६७० ॥

यथा स पुरुषव्याघ्रो न हन्येत जयद्रथ॰ ।
तथा विधत्स्व भद्रं ते त्वं हि न॰ परमा गति॰ ॥ ६७१ ॥

अतिक्रान्ते हि कौन्तेये भित्वा सैन्य परंतप ।
जयद्रथस्य गोप्तारः संशयं परमं गताः ॥ ६७२ ॥

स्थिरा बुद्धिर्नरेन्द्राणामासीद्ब्रह्मविदां वर ।
नातिक्रमिष्यति द्रोणं जातु जीवन्धनञ्जय॰ ॥ ६७३ ॥

जानामि त्वा महाभाग पाण्डवानां हिते रतम् ।
तथा मुह्यामि च ब्रह्मन् कार्यवत्तां विचिन्तयन् ॥ ६७४ ॥

अस्मान्न त्वं सदा भक्तानिच्छस्यमितविक्रम ।
पाण्डवान् सततं प्रीणास्यस्माकं विप्रिये रतान् ॥ ६७५ ॥

अस्मानेवोपजीवंस्त्वमस्माकं विप्रिये रत॰ ।
न ह्यहं त्वां विजानामि मधुदिग्धमिव क्षुरम् ॥ ६७६ ॥

नादास्यच्चेद्वरं मह्यं भवान् पाण्डवनिग्रहे ।
नावारयिष्यं गच्छन्तमहं सिन्धुपतिं गृहान् ॥ ६७७ ॥

मया त्वाशंसमानेन त्वत्तस्त्राणमबुद्धिना ।
आश्वासितः सिन्धुपतिर्मोहाद्दत्तश्च मृत्यवे ॥ ६७८ ॥

यमदंष्ट्रान्तरं प्राप्तो मुच्येतापि हि मानवः ।
नार्जुनस्य वशं प्राप्तो मुच्येताजौ जयद्रथः ॥ ६७९ ॥

स तथा कुरु शोणाश्व यथा मुच्येत सैन्धव॰ ।
मम चार्तप्रलापानां मा क्रुधः पाहि सैन्धवम् ॥ ६८० ॥

नाभ्यसूयामि ते वाक्यमश्वत्थाम्नाऽसि मे समः ।
सत्यं तु ते प्रवक्ष्यामि तज्जुषस्व विशांपते ॥ ६८१ ॥

सारथिः प्रवरः कृष्ण॰ शीघ्राश्चास्य हयोत्तमाः ।
अल्पं च विवरं कृत्वा तूर्णं याति धनञ्जय॰ ॥ ६८२ ॥

किं न पश्यसि बाणौघान् क्रोशमात्रे किरीटिनः।
पश्चाद्रथस्य पतितान् क्षिप्ताञ्शीघ्रं हि गच्छतः॥ ६८३॥

न चाहं शीघ्रयानेऽद्य समर्थो वयसाऽन्वितः।
सेनामुखे च पार्थानामेतद्बलमुपस्थितम्॥ ६८४॥

युधिष्ठिरश्च मे ग्राह्यो मिषतां सर्वधन्विनाम्।
एवं मया प्रतिज्ञातं क्षत्रमध्ये महाभुज॥ ६८५॥

धनञ्जयेन चोत्सृष्टो वर्तते प्रमुखे नृप।
तस्माद्व्यूहमुखं हित्वा नाहं योत्स्यामि फाल्गुनम्॥ ६८६॥

तुल्याभिजनकर्माणं शत्रुमेकं सहायवान्।
गत्वा योधय मा भैस्त्वं त्वं ह्यस्य जगतः पतिः॥ ६८७॥

दुर्यो०- कथं त्वामप्यतिक्रान्तः सर्वशस्त्रभृतां वरम्।
धनञ्जयो मया शक्य आचार्य प्रतिबाधितुम्॥ ६८८॥

येन भोजश्च हार्दिक्यो भवांश्च त्रिदशोपमः।
अस्त्रप्रतापेन जितौ श्रुतायुश्च निबर्हितः॥ ६८९॥

सुदक्षिणश्च निहतः स च राजा श्रुतायुधः।
तं कथं पाण्डवं युद्धे दहन्तमिव पावकम्।
प्रतियोत्स्यामि दुर्धर्षं तमहं शस्त्रकोविदम्॥ ६९०॥

क्षमं च मन्यसे युद्धं मम तेनाद्य संयुगे।
परवानस्मि भवति प्रेष्यवद्रक्ष मद्यशः॥ ६९१॥

द्रोण०- सत्यं वदसि कौरव्य दुराधर्षो धनञ्जयः।
अहं तु तत्करिष्यामि यथैनं प्रसहिष्यसि॥ ६९२॥

एवमुक्त्वा त्वरन्द्रोणः स्पृष्ट्वांभो वर्म भास्वरम्।
आबबन्धाद्भुततमं जपन्मन्त्रं यथाविधि॥ ६९३॥

बद्ध्वा तु कवचं तस्य मन्त्रेण विधिपूर्वकम्।
प्रेषयामास राजानं युद्धाय महते द्विजः॥ ६९४॥

स सन्नद्धो महाबाहुराचार्येण महात्मना।
रथानां च सहस्रेण त्रिगर्तानां प्रहारिणाम् ॥ ६९५ ॥

तथा दन्तिसहस्रेण मत्तानां वीर्यशालिनाम्।
अश्वानां नियुतेनैव तथाऽन्यैश्च महारथैः।
वृतः प्रायान्महाबाहुरर्जुनस्य रथं प्रति ॥ ६९६ ॥

(अ. ९५) प्रविष्टयोर्महाराज पार्थवार्ष्णेययो रणे।
दुर्योधने प्रयाते च पृष्ठतः पुरुषर्षभे ॥ ६९७ ॥

(अ. ९६) भारद्वाजं समासाद्य व्यूहस्य प्रमुखे स्थितम्।
अयोधयन् रणे पार्था द्रोणानीकं बिभित्सवः ॥ ६९८ ॥

रक्षमाणः स्वकं व्यूहं द्रोणोऽपि सह सैनिकैः।
(अ. ९८) रुक्मपुंखाञ्छरानस्यन्युयुधानमुपाद्रवत् ॥ ६९९ ॥

ततस्तौ द्रोणशैनेयौ युयुधाते परंतपौ।
शरैरनेकसाहस्रैस्ताडयन्तौ परस्परम् ॥ ७०० ॥

उभयोः पतिते छत्रे तथैव पतितौ ध्वजौ।
उभौ रुधिरसिक्ताङ्गावुभौ च विजयैषिणौ ॥ ७०१ ॥

स्रवद्भिः शोणितं गात्रैः प्रस्रुताविव वारणौ।
अन्योन्यमभ्यविध्येतां जीवितान्तकरैः शरैः ॥ ७०२ ॥

अपश्यन्नस्मदीयाश्च ते च यौधिष्ठिराः स्थिताः।
तद्युद्धं युयुधानस्य द्रोणस्य च महात्मनः ॥ ७०३ ॥

ततो द्रोणस्य दाशार्हः शरांश्चिच्छेद संयुगे।
पत्रिभिः सुदृढैराशु धनुश्चैव महाद्युतेः ॥ ७०४ ॥

निमेषान्तरमात्रेण भारद्वाजोऽपरं धनुः।
सज्यं चकार तदपि चिच्छेदास्य च सात्यकिः ॥ ७०५ ॥

सज्यं सज्यं धनुश्चास्य चिच्छेद निशितैः शरैः।
एवमेकशतं छिन्नं धनुषां दृढधन्विना ॥ ७०६ ॥

ततः क्रुद्धो महाराज धनुर्वेदस्य पारग ।
वधाय युयुधानस्य दिव्यमस्त्रमुदैरयत् ॥ ७०७ ॥
तदाग्नेयं महाघोरं रिपुघ्नमुपलक्ष्य स· ।
दिव्यमस्त्रं महेष्वासो वारुणं समुदैरयत् ॥ ७०८ ॥
अस्त्रे ते वारुणाग्नेये ताभ्यां बाणसमाहिते ।
न यावदभ्यपद्येता व्यावर्तदथ भास्कर ॥ ७०९ ॥
ततो युधिष्ठिरो राजा भीमसेनश्च पाण्डवः ।
मत्स्या· शाल्वेयसेनाश्च द्रोणमाजग्मुरञ्जसा ॥ ७१० ॥
दु शासनं पुरस्कृत्य राजपुत्रा सहस्रशः ।
द्रोणमभ्युपपद्यन्त सपत्नै परिवारितम् ॥ ७११ ॥
ततो युद्धमभूद्राजंस्तेषां तव च धन्विनाम् ।
रजसा संवृते लोके शरजालसमावृते ॥ ७१२ ॥
सर्वमाविग्नमभवन्न प्राज्ञायत किञ्चन ।
सैन्येन रजसा ध्वस्ते निर्मर्यादमवर्तत ॥ ७१३ ॥

## युद्धभूमौ सरोनिर्माणम्

(अ. ९९) विवर्तमाने त्वादित्ये तत्रास्तशिखरं प्रति ।
अर्जुनो वासुदेवश्च सैन्धवायैव जग्मतुः ॥ ७१४ ॥
प्रविश्य तु रणे राजन् केशव परवीरहा ।
सेनामध्ये हयांस्तूर्णं चोदयामास भारत ॥ ७१५ ॥
ततस्तस्य रथौघस्य मध्यं प्राप्य हयोत्तमा ।
कृच्छ्रेण रथमूहुस्तं क्षुत्पिपासासमन्विता ॥ ७१६ ॥
एतस्मिन्नन्तरे वीरावावन्त्यौ भ्रातरौ नृप ।
सहसेनौ समाच्छैतां पाण्डवं क्लान्तवाहनम् ॥ ७१७ ॥
तयोस्तु धनुषी चित्रे भल्लाभ्यां श्वेतवाहन ।
चिच्छेद समरे तूर्णं ध्वजौ च कनकोज्वलौ ॥ ७१८ ॥
ज्येष्ठस्य च शिर कायात् क्षुरप्रेण न्यकृन्तत ॥ ७१९ ॥

विन्दं तु निहतं दृष्ट्वा ह्यनुविन्द प्रतापवान् ।
अभ्यवर्तत संग्रामे भ्रातुर्वधमनुस्मरन् ॥ ७२० ॥

अनुविन्दस्तु गदया ललाटे मधुसूदनम् ।
स्पृष्ट्वा नाकम्पयत् क्रुद्धो मैनाकमिव पर्वतम् ॥ ७२१ ॥

तस्यार्जुन. शरै. षड्भिर्ग्रीवां पादौ भुजौ शिर ।
निचकर्त स संछिन्न. पपाताद्रिचयो यथा ॥ ७२२ ॥

ततस्तौ निहतौ दृष्ट्वा तयो राजन् पदानुगाः ।
अभ्यद्रवन्त सक्रुद्धा. किरन्त. शतश. शरान् ॥ ७२३ ॥

तानर्जुनः शरैस्तूर्ण निहत्य भरतर्षभ ।
व्यरोचत यथा वह्निर्दावं दग्ध्वा हिमात्यये ॥ ७२४ ॥

तं दृष्ट्वा कुरवस्त्रस्ताः प्रहृष्टाश्चाभवन् पुनः ॥ ७२५ ॥

श्रान्तं चैनं समालक्ष्य ज्ञात्वा दूरे च सैन्धवम् ।
सिंहनादेन महता सर्वतः पर्यवारयन् ॥ ७२६ ॥

तांस्तु दृष्ट्वा सुसंरब्धानुत्स्मयन् पुरुषर्षभ. ।
शनकैरिव दाशार्हमर्जुनो वाक्यमब्रवीत् ॥ ७२७ ॥

हयान्विमुच्य हि सुखं विशल्यान्कुरु माधव ।
अहमावारयिष्यामि सर्वसैन्यानि केशव ॥ ७२८ ॥

सोऽवतीर्य रथोपस्थादसंभ्रान्तो धनञ्जय. ।
गाण्डीवं धनुरादाय तस्थौ गिरिरिवाचल. ॥ ७२९ ॥

तमभ्यधावन्क्रोशन्तः क्षत्रिया जयकांक्षिण. ।
इदं छिद्रमिति ज्ञात्वा धरणीस्थं धनञ्जयम् ॥ ७३० ॥

स पार्थः पार्थिवान् सर्वान् भूमिस्थोऽपि रथस्थितान् ।
एको निवारयामास लोभः सर्वगुणानिव ॥ ७३१ ॥

ततो जनार्दन संख्ये प्रियं पुरुषसत्तमम् ।
असंभ्रान्तो महाबाहुरर्जुनं वाक्यमब्रवीत् ॥ ७३२ ॥

उदपानमिहाश्वाना नालमस्ति रणेऽर्जुन।
परीप्सन्ते जल चेमे पेयं न त्ववगाहनम्॥ ७३३॥

इदमस्तीत्यसंभ्रान्तो ब्रुवन्नस्त्रेण मेदिनीम्।
अभिहत्यार्जुनश्चक्रे वाजिपानं सर॰ शुभम्॥ ७३४॥

हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम्।
सुविस्तीर्णं प्रसन्नांभ॰ प्रफुल्लवरपङ्कजम्॥ ७३५॥

कूर्ममत्स्यगणाकीर्णमगाधमृषिसेवितम्।
आगच्छन्नारदमुनिर्दर्शनार्थं कृत क्षणात्॥ ७३६॥

शरवंशं शरस्थूणं शराच्छादनमद्भुतम्।
शरवेश्माकरोत् पार्थस्त्वष्टेवाद्भुतकर्मकृत्॥ ७३७॥

तत॰ प्रहस्य गोविन्द॰ साधु साध्वित्यथाब्रवीत्।
शरवेश्मनि पार्थेन कृते तस्मिन् महात्मना॥ ७३८॥

(अ.१००) सलिले जनिते तस्मिन् कौन्तेयेन महात्मना।
निस्तारिते द्विषत्सैन्ये कृते च शरवेश्मनि॥ ७३९॥

वासुदेवो रथात् तूर्णमवतीर्य महाद्युतिः।
मोचयामास तुरगान् विनुन्नान् कङ्कपत्रिभि ॥ ७४०॥

शल्यानुद्धृत्य पाणिभ्या परिमृज्य च तान् हयान्।
उपावर्त्य यथान्यायं पाययामास वारि स ॥ ७४१॥

स ताँल्लब्धोदकान् स्नातान् जग्धान्नान् विगतक्लमान्।
योजयामास संहृष्ट॰ पुनरेव रथोत्तमे॥ ७४२॥

स तं रथवरं शौरिः सर्वशस्त्रभृतां वर ।
समास्थाय महातेजाः सार्जुन प्रययौ द्रुतम्॥ ७४३॥

रथं रथवरस्याजौ युक्तं लब्धोदकैर्हयैः।
दृष्ट्वा कुरुबलश्रेष्ठाः पुनर्विमनसोऽभवन्॥ ७४४॥

विनि श्वसन्तस्ते राजन् भग्नदंष्ट्रा इवोरगा ।
धिगहो धिग्गतः पार्थ कृष्णश्चेत्यब्रुवन् पृथक्॥ ७४५॥

ततः शीघ्रतरं प्रायात् पाण्डवः सैन्धवं प्रति।
विवर्तमाने तिग्मांशौ हृष्टैः पीतोदकैर्हयैः ॥ ७४६ ॥

तं प्रयान्तं महाबाहुं सर्वशस्त्रभृतां वरम्।
नाशक्नुवन् वारयितुं योधाः क्रुद्धमिवान्तकम् ॥ ७४७ ॥

अ १०१) तौ तु सैन्धवमालोक्य वर्तमानमिवान्तिके।
सहसा पेततुः क्रुद्धौ क्षिप्रं श्येनाविवामिषम् ॥ ७४८ ॥

द्रोणेनाबद्धकवचो राजा दुर्योधनस्ततः।
ययावेकरथेनाजौ हयसंस्कारवित् प्रभो ॥ ७४९ ॥

कृष्णपार्थौ महेष्वासौ व्यतिक्रम्याथ ते सुतः।
अग्रतः पुण्डरीकाक्षं प्रतीयाय नराधिप ॥ ७५० ॥

ततः सर्वेषु सैन्येषु वादित्राणि प्रहृष्टवन्।
प्रावाद्यन्त व्यतिक्रान्ते तव पुत्रे धनञ्जयम् ॥ ७५१ ॥

दृष्ट्वा दुर्योधनं कृष्णो व्यतिक्रान्तं सहानुगम्।
अब्रवीदर्जुनं राजन् प्रातकालमिदं वचः ॥ ७५२ ॥

अ १०२) दुर्योधनमतिक्रान्तमेतं पश्य धनञ्जय।
अत्यद्भुतमिमं मन्ये नास्त्यस्य सदृशो रथः ॥ ७५३ ॥

अत्र क्रोधविषं पार्थ विमुञ्च चिरसंभृतम्।
एष मूलमनर्थानां पाण्डवानां महारथः ॥ ७५४ ॥

दिष्ट्या त्विदानीं संप्राप्त एष ते बाणगोचरम्।
यथाऽयं जीवितं जह्यात् तथा कुरु धनञ्जय ॥ ७५५ ॥

अस्मिन् हते त्वया सैन्यमनाथं भिद्यतामिदम्।
वैरस्यास्यास्त्ववभृथो मूलं छिन्धि दुरात्मनाम् ॥ ७५६ ॥

तं तथेत्यब्रवीत् पार्थः कृत्यरूपमिदं मम ॥ ७५७ ॥

येनैतद्दीर्घकालं नो भुक्तं राज्यमकण्टकम्।
अप्यस्य युधि विक्रम्य छिन्द्यां मूर्धानमाहवे ॥ ७५८ ॥

अपि तस्य ह्यनर्हाया· परिक्लेशस्य माधव।
कृष्णाया· शक्नुयां गन्तुं पदं केशप्रधर्षणे ॥ ७५९ ॥

इत्येवंवादिनौ कृष्णौ हृष्टौ श्वेतान्हयोत्तमान्।
प्रेषयामासतु संख्ये प्रेप्सन्तौ तं नराधिपम् ॥ ७६० ॥

दृष्ट्वा तु पार्थं संरब्धं वासुदेवं च मारिष।
प्रहसन्नेव पुत्रस्ते योद्धुकामः समाह्वयत् ॥ ७६१ ॥

ततः प्रहृष्टो दाशार्हः पाण्डवश्च धनञ्जयः।
व्यक्रोशेतां महानादं दध्मतुश्चांवुजोत्तमौ ॥ ७६२ ॥

तथा तु दृष्ट्वा योधास्ते प्रहृष्टौ कृष्णपाण्डवौ।
हतो राजा हतो राजेत्यूचिरे च भयार्दिताः ॥ ७६३ ॥

जनस्य सन्निनादं तु श्रुत्वा दुर्योधनोऽब्रवीत्।
व्येतु वो भीरहं कृष्णौ प्रेषयिष्यामि मृत्यवे ॥ ७६४ ॥

इत्युक्त्वा सैनिकान्सर्वान् जयापेक्षी नराधिपः।
पार्थमाभाष्य संरम्भादिदं वचनमब्रवीत् ॥ ७६५ ॥

पार्थ यच्छिक्षितं तेऽस्त्रं दिव्यं पार्थिवमेव च।
तद्दर्शय मयि क्षिप्रं यदि जातोऽसि पाण्डुना ॥ ७६६ ॥

अस्मत्परोक्षं कर्माणि कृतानि प्रवदन्ति ते।
स्वामिसत्कारयुक्तानि यानि तानीह दर्शय ॥ ७६७ ॥

(अ.१०३)एवमुक्त्वाऽर्जुन राजा त्रिभिर्मर्मातिगैः शरैः।
अभ्यविध्यन्महावेगैश्चतुर्भिश्चतुरो हयान् ॥ ७६८ ॥

वासुदेवं च दशभिः प्रत्यविध्यत् स्तनान्तरे।
प्रतोदं चास्य भल्लेन छित्त्वा भूमावपातयत् ॥ ७६९ ॥

तं चतुर्दशभिः पार्थश्चित्रपुङ्खैः शिलाशितै·।
अविध्यत्तूर्णमव्यग्रस्ते चाभ्रश्यन्त वर्मणि ॥ ७७० ॥

तेषां नैष्फल्यमालोक्य पुनर्नव च पञ्च च।
प्राहिणोन्निशितान्बाणांस्ते चाभ्रश्यन्त वर्मणः ॥ ७७१ ॥

अष्टाविंशांस्तु तान् बाणानस्तान् विप्रेक्ष्य निष्फलान्।
अब्रवीत् परवीरघ्नः कृष्णोऽर्जुनमिदं वचः॥ ७७२॥

कच्चिद्गाण्डीवजः प्राणस्तथैव भरतर्षभ।
मुष्टिश्च ते यथापूर्वं भुजयोश्च बलं तव॥ ७७३॥

विस्मयो मे महान्पार्थ तव दृष्ट्वा शरानिमान्।
व्यर्थान्निपतितान्संख्ये दुर्योधनरथं प्रति॥ ७७४॥

वज्राशनिसमा घोराः परकायावभेदिनः।
शराः कुर्वन्ति ते नार्थं पार्थ काऽद्य विडम्बना॥ ७७५॥

अर्जुन०—एष दुर्योधनः कृष्ण द्रोणेन विहितामिमाम्।
तिष्ठत्यभीतवत्संख्ये बिभ्रत्कवचधारणाम्॥ ७७६॥

यस्त्वत्र विहितं कार्यं नैष तद्वेत्ति माधव।
स्त्रीवदेष बिभर्त्येतां युक्तां कवचधारणाम्॥ ७७७॥

पश्य बाह्वोश्च मे वीर्यं धनुषश्च जनार्दन।
पराजयिष्ये कौरव्यं कवचेनापि रक्षितम्॥ ७७८॥

एवमुक्त्वाऽर्जुनो बाणानभिमन्त्र्य व्यकर्षयत्।
मानवास्त्रेण मानार्हस्तीक्ष्णावरणभेदिना॥ ७७९॥

विकृष्यमाणांस्तेनैव धनुर्मध्यगताञ्छरान्।
तानस्यास्त्रेण चिच्छेद द्रौणिः सर्वास्त्रघातिना॥ ७८०॥

तान्निकृत्तानिषून् दृष्ट्वा दूरतो ब्रह्मवादिना।
न्यवेदयत् केशवाय विस्मितः श्वेतवाहनः॥ ७८१॥

नैतदस्त्रं मया शक्यं द्विः प्रयोक्तुं जनार्दन।
अस्त्रं मामेव हन्याद्धि हन्याच्चापि बलं मम॥ ७८२॥

ततो दुर्योधनः कृष्णौ नवभिर्नवभिः शरैः।
अविध्यत रणे राजञ्छरैराशीविषोपमैः॥ ७८३॥

भूय एवाभ्यवर्षच्च समरे कृष्णपाण्डवौ।
शरवर्षेण महता ततोऽहृष्यन्त तावकाः॥ ७८४॥

चक्रुर्वादित्रनिनदान् सिंहनादरवांस्तथा ॥ ७८५ ॥

ततः क्रुद्धो रणे पार्थः सृक्किणी परिसंलिहन् ।
नापश्यच्च ततोऽस्याङ्गं यन्न स्याद्वर्मरक्षितम् ॥ ७८६ ॥

ततोऽस्य निशितैर्बाणैः सुमुक्तैरन्तकोपमैः ।
हयांश्चकार निर्देहानुभौ च पार्ष्णिसारथी ॥ ७८७ ॥

धनुरस्याच्छिनत्तूर्णं हस्तावापं च वीर्यवान् ।
रथं च शकलीकर्तुं सव्यसाची प्रचक्रमे ॥ ७८८ ॥

दुर्योधनं च बाणाभ्यां तीक्ष्णाभ्यां विरथीकृतम् ।
आविध्यद्धस्ततलयोरुभयोरर्जुनस्तदा ।
प्रयत्नज्ञो हि कौन्तेयो नखमांसान्तरेषुभिः ॥ ७८९ ॥

स वेदनाभिराविग्नः पलायनपरायणः ॥ ७९० ॥

तं कृच्छ्रामापदं प्राप्तं दृष्ट्वा परमधन्विनः ।
समापेतुः परीप्सन्तो धनञ्जयशरार्दितम् ॥ ७९१ ॥
ततोऽर्जुनोऽस्त्रवीर्येण निजघ्ने तां वरूथिनीम् ॥ ७९२ ॥

पाञ्चजन्यं च बलवान् दध्मौ तारेण केशवः ।
रजसा ध्वस्तपक्ष्मान्तः प्रस्विन्नवदनो भृशम् ॥ ७९३ ॥

तस्य शंखस्य नादेन धनुषो निःस्वनेन च ।
निःसत्त्वाश्च ससत्त्वाश्च क्षितौ पेतुस्तदा जनाः ॥ ७९४ ॥

(अ १०४)तावका हि समीक्ष्यैव वृष्ण्यन्धककुरूत्तमौ ।
प्रागत्वरन् जिघांसन्तस्तथैव विजयः परान् ॥ ७९५ ॥

भूरिश्रवाः शलः कर्णो वृषसेनो जयद्रथः ।
कृपश्च मद्रराजश्च द्रौणिश्च रथिनां वरः ॥ ७९६ ॥

ते पिबन्त इवाकाशमश्वैरष्टौ महारथाः ।
व्यराजयन् दश दिशो वैयाघ्रैर्हैमचन्द्रकैः ॥ ७९७ ॥

ततो दुर्योधनोऽष्टौ च राजानस्ते महारथाः ।
जयद्रथस्य रक्षार्थं पाण्डवं पर्यवारयन् ॥ ७९८ ॥

ततः शरशतैस्तीक्ष्णैस्तानरीन् श्वेतवाहनः।
प्रत्यषेधद्द्रुतं क्रुद्धो महावातो घनानिव ॥ ७९९ ॥

## युधिष्ठिरपलायनम् , अलम्बुषवधः

(अ.१०६)अर्जुने सैन्धवं प्राप्ते भारद्वाजेन संवृताः।
धृत०- पञ्चालाः कुरुभिः सार्धं किमकुर्वत सञ्जय ॥ ८०० ॥
सञ्जय०-अपराह्णे महाराज संग्रामे लोमहर्षणे।
पाञ्चालानां कुरूणां च द्रोणद्यूतमवर्तत ॥ ८०१ ॥
ततो युधिष्ठिरो द्रोणं नवत्या नतपर्वणाम्।
आजघ्ने भरतश्रेष्ठः सर्वमर्मसु भारत ॥ ८०२ ॥
ततो द्रोणो भृशं क्रुद्धो धर्मराजस्य मारिष।
चतुर्भिर्निशितैस्तीक्ष्णैर्हयान् जघ्ने शरोत्तमैः ॥ ८०३ ॥
चिच्छेदैकेन भल्लेन धनुश्चेन्द्रध्वजोपमम्।
केतुमेकेन चिच्छेद पाण्डवं चार्दयत् त्रिभिः ॥ ८०४ ॥
हताश्वात्तु रथात्तूर्णमवप्लुत्य युधिष्ठिरः।
तस्थावूर्ध्वभुजो राजा व्यायुधो भरतर्षभ ॥ ८०५ ॥
विरथं तं समालोक्य व्यायुधं च विशेषतः।
द्रोणो व्यमोहयच्छत्रून्सर्वसैन्यानि वा विभो ॥ ८०६ ॥
मुञ्चंश्चेषुगणांस्तीक्ष्णान् लघुहस्तो दृढव्रतः।
अभिदुद्राव राजानं सिंहो मृगमिवोल्बणः ॥ ८०७ ॥
तमभिद्रुतमालोक्य द्रोणेनामित्रघातिना।
हतो राजा हतो राजा भारद्वाजेन मारिष।
इत्यासीत्सुमहाञ्छब्दः पाण्डुसैन्यस्य भारत ॥ ८०८ ॥
ततस्त्वरितमारुह्य सहदेवरथं नृपः।
अपायाज्जवनैरश्वैः कुन्तीपुत्रो युधिष्ठिरः ॥ ८०९ ॥
(अ.१०७)बृहत्क्षत्रमथायान्तं कैकेयं दृढविक्रमम्।
क्षेमधूर्तिर्महाराज विव्याधोरसि मार्गणैः ॥ ८१० ॥

बृहत्क्षत्रस्तु तं राजा नवत्या नतपर्वणाम् ।
आजघ्ने त्वरितो राजन् द्रोणानीकविभित्सया ॥ ८११ ॥

क्षेमधूर्तिस्तु संक्रुद्धः कैकेयस्य महात्मनः ।
धनुश्चिच्छेद भल्लेन पीतेन निशितेन ह ॥ ८१२ ॥

अथान्यद्धनुरादाय बृहत्क्षत्रो हसन्निव ।
जहार नृपतेः कायाच्छिरो ज्वलितकुण्डलम् ॥ ८१३ ॥

धृष्टकेतुं तथाऽऽयान्तं द्रोणहेतोः पराक्रमी ।
वीरधन्वा महेष्वासो वारयामास भारत ॥ ८१४ ॥

तावुभौ नरशार्दूलौ युयुधाते परस्परम् ।
महावने तीव्रमदौ वारणाविव यूथपौ ॥ ८१५ ॥

वीरधन्वा ततः क्रुद्धो धृष्टकेतोः शरासनम् ।
द्विधा चिच्छेद भल्लेन प्रहसन्निव भारत ॥ ८१६ ॥

तदुत्सृज्य धनुश्छिन्नं चेदिराजो महारथः ।
शक्तिं जग्राह विपुलां हेमदण्डामयस्मयीम् ॥ ८१७ ॥

तया तु वीरघातिन्या शक्त्या त्वभिहतो भृशम् ।
निर्भिन्नहृदयस्तूर्णं निपपात रथान्महीम् ॥ ८१८ ॥

सात्यकिं व्याघ्रदत्तस्तु शरैः सन्नतपर्वभिः ।
चक्रेऽदृश्यं साश्वसूतं सध्वजं पृतनान्तरे ॥ ८१९ ॥

तान्निवार्य शरान् शूरः शैनेयः कृतहस्तवत् ।
साश्वसूतध्वजं बाणैर्व्याघ्रदत्तमपातयत् ॥ ८२० ॥

कुमारे निहते तस्मिन् मागधस्य सुते प्रभो ।
मागधाः सर्वतो यत्ता युयुधानमुपाद्रवन् ॥ ८२१ ॥

तांस्तु सर्वान् स बलवान् सात्यकिर्युद्धदुर्मदः ।
नातिकृच्छ्राद्धसन्नेव विजिग्ये पुरुषर्षभः ॥ ८२२ ॥

ततो द्रोणो भृशं क्रुद्ध सहसोद्वृत्य चक्षुषी ।
सात्यकिं सत्यकर्माणं स्वयमेवाभिदुद्रुवे ॥ ८२३ ॥

(अ.१०८)अलंवुषस्तु समरे भीमसेनं महाबलम्।
योधयामास संक्रुद्धो लक्ष्मणं रावणिर्यथा ॥ ८२४ ॥

आर्ष्यश्रृङ्गिं ततो भीमो नवभिर्निशितैः शरैः।
विव्याध प्रहसन् राजन् राक्षसेन्द्रममर्षणम् ॥ ८२५ ॥

स वध्यमानः समरे भीमचापच्युतैः शरैः।
घोर रूपमथो कृत्वा भीमसेनमभाषत ॥ ८२६ ॥

तिष्ठेदानीं रणे पार्थ पश्य मेऽद्य पराक्रमम् ॥ ८२७ ॥

बको नाम सुदुर्बुद्धे राक्षसप्रवरो बली।
परोक्षं मम तद्वृत्तं यद्भ्राता मे हतस्त्वया ॥ ८२८ ॥

एवमुक्त्वा ततो भीममन्तर्धानं गतस्तदा।
महता शरवर्षेण भृशं तं समवाकिरत् ॥ ८२९ ॥

(अ.१०९)अलंवुषं तथा युद्धे विचरन्तमभीतवत्।
हैडिम्बिः प्रययौ तूर्णं विव्याध निशितैः शरैः ॥ ८३० ॥

तयोः प्रतिभयं युद्धमासीद्राक्षससिंहयोः।
कुर्वतोर्विविधा मायाः शक्रशम्बरयोरिव ॥ ८३१ ॥

यां यां घटोत्कचो युद्धे मायां दर्शयते नृप।
तां तामलम्बुषो राजन्माययैव निजघ्निवान् ॥ ८३२ ॥

तं तथा युध्यमानं तु मायायुद्धविशारदम्।
अलंवुषं राक्षसेन्द्रं दृष्ट्वाऽक्रुध्यन्त पाण्डवाः ॥ ८३३ ॥

ततस्ते पाण्डवा राजन् समंतान्निशिताञ्शरान्।
प्रेषयामासुरुद्विग्ना हैडिम्बश्च घटोत्कच ॥ ८३४ ॥

स विध्यमानः समरे पाण्डवैर्जितकाशिभिः।
मर्त्यधर्ममनुप्राप्तः कर्तव्यं नान्वपद्यत ॥ ८३५ ॥

ततः समरशौण्डो वै भैमसेनिर्महाबलः।
समीक्ष्य तदवस्थं तं वधायाऽस्य मनो दधे ॥ ८३६ ॥

वेगं चक्रे महान्तं च राक्षसेन्द्ररथं प्रति।
दग्धाद्रिकूटशृङ्गाभं भिन्नाञ्जनचयोपमम्।
रथाद्रथमभिद्रुत्य क्रुद्धो हैडिम्बिराक्षिपत्॥ ८३७॥
उद्ववर्ह रथाच्चापि पन्नगं गरुडो यथा॥ ८३८॥
समुत्क्षिप्य च बाहुभ्यामाविद्ध्य च पुनः पुनः।
निष्पिपेष क्षितौ क्षिप्रं पूर्णकुम्भमिवाश्मनि॥ ८३९॥
स विस्फारितसर्वाङ्गश्चूर्णितास्थिर्विभीषणः।
घटोत्कचेन वीरेण हत शालकटङ्कटः॥ ८४०॥
तत सुमनस पार्था हते तस्मिन्निशाचरे।
चुक्रुशुः सिंहनादांश्च वासांस्यादुधुवुश्च ह॥ ८४१॥
(अ.११०)भारद्वाजं कथं युद्धे युयुधानो न्यवारयत्।
धृत०- सञ्जयाचक्ष्व तत्त्वेन परं कौतूहलं हि मे॥ ८४२॥
सञ्जय०-वध्यमानं बलं दृष्ट्वा युयुधानेन मारिष।
अभ्यद्रवत्स्वयं द्रोण सात्यकिं सत्यविक्रमम्॥ ८४३॥
तमापतन्तं सहसा भारद्वाजं महारथम्।
सात्यकिः पञ्चविंशत्या क्षुद्रकाणां समार्पयत्॥ ८४४॥
भारद्वाजो रणे विद्धो युयुधानेन सत्वरम्।
सात्यकिं बहुभिर्बाणैर्यतमानमविध्यत॥ ८४५॥
स वध्यमानः समरे भारद्वाजेन सात्यकि।
नान्वपद्यत कर्तव्यं किञ्चिदेव विशांपते॥ ८४६॥
तं तु संप्रेक्ष्य ते पुत्रा सैनिकाश्च विशांपते।
प्रहृष्टमनसो भूत्वा सिंहवद्व्यनदन् मुहु॥ ८४७॥
तं श्रुत्वा निनदं घोरं पीड्यमानं च माधवम्।
युधिष्ठिरोऽब्रवीद्राजा सर्वसैन्यानि भारत॥ ८४८॥
एष वृष्णिवरो वीर सात्यकिः सत्यविक्रमः।
ग्रस्यते युधि वीरेण भानुमानिव राहुणा।
अभिद्रवत गच्छध्वं सात्यकिर्यत्र युध्यते॥ ८४९॥

असौ द्रोणो महेष्वासो युयुधानेन संयुगे।
क्रीडते सूत्रबद्धेन पक्षिणा बालको यथा।
तत्रैव सर्वे गच्छन्तु भीमसेनपुरोगमा ॥ ८५० ॥

एवमुक्त्वा ततो राजा सर्वसैन्येन भारत।
अभ्यद्रवद्रणे द्रोणं युयुधानस्य कारणात् ॥ ८५१ ॥

तांस्तु सर्वान्महेष्वासान् द्रोणः शस्त्रभृतां वरः।
अतापयच्छरव्रातैर्गभस्तिभिरिवांशुमान् ॥ ८५२ ॥

तस्मिन्द्रोणेन निहताः पञ्चाला· पञ्चविंशतिः।
केकयानां शतं हत्वा विद्राव्य च समंततः।
द्रोणोऽजयन्महाबाहु· शतशोऽथ सहस्रश ॥ ८५३ ॥

तं तथा समरे द्रोणं निघ्नन्त सोमकान् रणे।
न चाप्यभिययु· केचिदपरे नैव विव्यधु ॥ ८५४ ॥

वर्तमाने तथा रौद्रे तस्मिन् वीरवरक्षये।
अशृणोत् सहसा पार्थ· पाञ्चजन्यस्य नि स्वनम् ॥ ८५५ ॥

नदत्सु धार्तराष्ट्रेषु विजयस्य रथं प्रति।
गाण्डीवस्य च निर्घोषे विप्रनष्टे समंतत ।
अजातशत्रुः कौन्तेय सात्वतं प्रत्यभाषत ॥ ८५६ ॥

यः स धर्म· पुरा दृष्ट सद्भि शैनेय शाश्वत ।
सांपराये सुहृत्कृत्ये तस्य कालोऽयमागतः ॥ ८५७ ॥

सर्वेष्वपि च योधेषु चिन्तयन् शिनिपुङ्गव।
त्वत्तः सुहृत्तमं कञ्चिन्नाभिजानामि सात्यके ॥ ८५८ ॥

यथा च केशवो नित्यं पाण्डवानां परायणम्।
तथा त्वमपि वार्ष्णेय कृष्णतुल्यपराक्रम· ॥ ८५९ ॥

स त्वं भ्रातुर्वयस्यस्य गुरोरपि च संयुगे।
कुरु कृच्छ्रे सहायार्थमर्जुनस्य नरर्षभ ॥ ८६० ॥

सुयोधनो हि सहसा गतो द्रोणेन दंशित ।
पूर्वमेवानुयातास्ते कौरवाणां महारथा ॥ ८६१ ॥

सुमहाश्चिनदश्चैव श्रूयते विजयं प्रति ।
स शैनेय जवेनाशु गन्तुमर्हसि मानद ॥ ८६२ ॥

भीमसेनो वयं चैव संयत्ता सहसैनिका ।
द्रोणमावारयिष्यामो यदि त्वां प्रति यास्यति ॥ ८६३ ॥

संवृत सिन्धुसौवीरैर्नखरप्रासयोधिभि ।
अत्यन्तोपचितै शूरै· फाल्गुन परवीरहा ।
अपर्यन्ते बले मग्नो जह्यादपि च जीवितम् ॥ ८६४ ॥

तस्मिंश्च निहते युद्धे कथं जीवेत मादृश ।
सर्वथाऽहमनुप्राप्त सुकृच्छ्रं त्वयि जीवति ॥ ८६५ ॥

श्यामो युवा गुडाकेशो दर्शनीयश्च पाण्डव ।
लघ्वस्त्रश्चित्रयोधी च प्रविष्टस्तात भारतीम् ॥ ८६६ ॥

सूर्योदये महाबाहुर्दिवसश्चातिवर्तते ।
तन्न जानामि वार्ष्णेय यदि जीवति वा न वा ॥ ८६७ ॥

तस्य मे सर्वकार्येषु कार्यमेतन्मतं महत् ।
अर्जुनस्य परित्राणं कर्तव्यमिति संयुगे ॥ ८६८ ॥

तवार्जुनो गुरुस्तात धर्मात्मा शिनिपुङ्गव ।
वासुदेवो गुरुश्चापि तव पार्थस्य धीमतः ॥ ८६९ ॥

कारणद्वयमेतद्धि जानंस्त्वामहमब्रुवम् ।
मावमंस्था वचो मह्यं गुरुस्तव गुरोर्ह्यहम् ॥ ८७० ॥

वासुदेवमतं चैव मम चैवार्जुनस्य च ।
सत्यमेतन्मयोक्तं ते याहि यत्र धनञ्जयः ॥ ८७१ ॥

एतद्वचनमाज्ञाय मम सत्यपराक्रम ।
प्रविशैतद्बलं तात धार्तराष्ट्रस्य दुर्मतेः ॥ ८७२ ॥

प्रविश्य च यथान्यायं संगम्य च महारथैः ।
यथार्हमात्मनः कर्म रणे सात्वत दर्शय ॥ ८७३ ॥

(अ १११)धर्मराजस्य तद्वाक्यं निशम्य शिनिपुङ्गवः ।
सात्यकिर्भरतश्रेष्ठ प्रत्युवाच युधिष्ठिरम् ॥ ८७४ ॥

दृढं त्वभिपरीतोऽहमर्जुनेन पुनः पुनः ।
अद्य माधव राजानमप्रमत्तोऽनुपालय ॥ ८७५ ॥

ग्रहणे धर्मराजस्य भारद्वाजोऽपि गृध्यति ।
शक्तश्चापि रणे द्रोणो निग्रहीतुं युधिष्ठिरम् ॥ ८७६ ॥

एवं त्वयि समाधाय धर्मराजं नरोत्तमम् ।
अहमद्य गमिष्यामि सैन्धवस्य वधाय हि ॥ ८७७ ॥

जयद्रथं च हत्वाऽहं द्रुतमेष्यामि माधव ॥ ८७८ ॥

निगृहीते नरश्रेष्ठे भारद्वाजेन माधव ।
सैन्धवस्य वधो न स्यान्ममाप्रीतिस्तथा भवेत् ॥ ८७९ ॥

स त्वमद्य महाबाहो प्रियार्थं मम माधव ।
जयार्थं च यशोऽर्थं च रक्ष राजानमाहवे ॥ ८८० ॥

स भवान्मयि निक्षेपो निक्षिप्तः सव्यसाचिना ।
भारद्वाजाद्भयं नित्यं मन्यमानेन वै प्रभो ॥ ८८१ ॥

सोऽहं संभावना चैतामाचार्यवचनं च तत् ।
पृष्ठतो नोत्सहे कर्तुं त्वां वा त्यक्तुं महीपते ॥ ८८२ ॥

कुरु त्वमात्मनो गुप्तिं कस्ते गोप्ता गते मयि ।
यः प्रतीयाद्रणे द्रोणं यावद्गच्छामि पाण्डवम् ॥ ८८३ ॥

मा च ते भयमद्यास्तु राजन्नर्जुनसंभवम् ।
न स जातु महाबाहुर्भारमुद्यम्य सीदति ॥ ८८४ ॥

ये च कर्णमुखा राजन् रथोदाराः प्रकीर्तिताः ।
एतेऽर्जुनस्य क्रुद्धस्य कलां नार्हन्ति षोडशीम् ॥ ८८५ ॥

यत्र वीरौ महेष्वासौ कृष्णौ सत्यपराक्रमौ ।
न तत्र कर्मणो व्यापत् कथञ्चिदपि विद्यते ॥ ८८६ ॥

न ह्यहं त्वा महाराज अनिक्षिप्य महाहवे ।
क्वचिद्यास्यामि कौरव्य सत्यमेतद् ब्रवीमि ते ॥ ८८७ ॥

एतद्विचार्य बहुशो बुद्ध्या बुद्धिमता वर ।
दृष्ट्वा श्रेयः परं बुद्ध्या ततो राजन् प्रशाधि माम् ॥ ८८८ ॥

युधि०– एवमेतन्महाबाहो यथा वदसि माधव ।
न तु मे शुद्ध्यते भावः श्वेताश्वं प्रति मारिष ॥ ८८९ ॥

आत्मसंरक्षणं संख्ये गमनं चार्जुनं प्रति ।
विचार्यैतत्स्वयं बुद्ध्या गमन तत्र रोचये ॥ ८९० ॥

ममापि रक्षणं भीमः करिष्यति महाबलः ॥ ८९१ ॥

धृष्टद्युम्नश्च समरे द्रोण क्रुद्धं परंतपः ।
वारयिष्यति विक्रम्य वेलेव मकरालयम् ॥ ८९२ ॥

विश्रब्धं गच्छ शैनेय मा कार्षीर्मयि संभ्रमम् ॥ ८९३ ॥

(अ.११२)धर्मराजस्य तद्वाक्यं निशम्य शिनिपुङ्गव ।
धर्मराजमिदं वाक्यमब्रवीत् पुरुषर्षभः ॥ ८९४ ॥

कृतां चेन्मन्यसे रक्षां स्वस्ति तेऽस्तु विशांपते ।
अनुयास्यामि बीभत्सुं करिष्ये वचनं तव ॥ ८९५ ॥

यथा हि मे गुरोर्वाक्यं विशिष्टं द्विपदां वर ।
तथा तवापि वचन विशिष्टतरमेव मे ॥ ८९६ ॥

प्रिये हि तव वर्तेते भ्रातरौ कृष्णपाण्डवौ ।
तयोः प्रिये स्थितं चैव विद्धि मां राजपुङ्गव ॥ ८९७ ॥

तवाज्ञां शिरसा गृह्य पाण्डवार्थमहं प्रभो ।
भित्त्वेदं दुर्भिदं सैन्यं प्रयास्ये नरपुङ्गव ॥ ८९८ ॥

ततः प्रयातः सहसा तव सैन्यं स सात्यकिः ।
दिदृक्षुरर्जुनं राजन् धर्मराजस्य शासनात् ॥ ८९९ ॥

(अ.११३)ततस्तेनैव मार्गेण येन यातो धनञ्जयः।
इयेष सात्यकिर्गन्तुं ततो द्रोणेन वारित. ॥ ९०० ॥

तं द्रोण. साश्वयन्तारं सरथध्वजमाशुगै.।
त्वरन् प्राच्छादयद्बाणै. शलभानामिव व्रजै. ॥ ९०१ ॥

तथैव युयुधानोऽपि द्रोणं बहुभिराशुगै.।
आच्छादयदसंभ्रान्तस्ततो द्रोण उवाच ह ॥ ९०२ ॥

तवाचार्यो रणं हित्वा गतः कापुरुषो यथा।
युध्यमानं च मां हित्वा प्रदक्षिणमवर्तत ॥ ९०३ ॥

त्वं हि मे युध्यतो नाद्य जीवन् यास्यसि माधव।
यदि मां त्व रणे हित्वा न यास्याचार्यवद्द्रुतम् ॥ ९०४ ॥

सात्य०–धनञ्जयस्य पदवीं धर्मराजस्य शासनात्।
गच्छामि स्वस्ति ते ब्रह्मन्न मे कालात्ययो भवेत् ॥ ९०५ ॥

आचार्यानुगतो मार्ग. शिष्यैरन्वास्यते सदा।
तस्मादेव व्रजाम्याशु यथा मे स गुरुर्गतः ॥ ९०६ ॥

एतावदुक्त्वा शैनेय आचार्यं परिवर्जयन्।
प्राविशद्भारतीं सेनामपर्यन्तां च सात्यकि. ॥ ९०७ ॥

संधाय च चमूं द्रोणो भोजे भार निवेश्य च।
अभ्यधावद्रणे यत्तो युयुधानं युयुत्सया ॥ ९०८ ॥

(अ.११४) प्रविष्टे तव सैन्यं तु शैनेये सत्यविक्रमे।
(अ.११५) अक्रुद्ध्यत रणे राजन् जलसंधो महाबलः ॥ ९०९ ॥

ततः क्रुद्धो महाराज मार्गणैर्भारसाधनै ।
अविध्यत शिनेः पौत्रं जलसंधो महोरसि ॥ ९१० ॥

तत. साभरणौ बाहू क्षुराभ्यां माधवोत्तमः।
सात्यकिर्जलसंधस्य चिच्छेद प्रहसन्निव ॥ ९११ ॥

ततः सुदंष्ट्रं सुमहच्चारुकुण्डलमण्डितम्।
क्षुरेणास्य तृतीयेन शिरश्चिच्छेद सात्यकिः ॥ ९१२ ॥

जलसंधं हतं दृष्ट्वा वृष्णीनामृषभेण तु।
विमुखाश्चाभ्यधावन्त तव योधाः समन्ततः ॥ ९१३ ॥

एतस्मिन्नन्तरे राजन् द्रोण. शस्त्रभृतां वरः।
अभ्ययाज्जवनैरश्वैर्युयुधानं महारथम् ॥ ९१४ ॥

(अ.११७) ततो द्रोणः शिनेः पौत्रं चित्रै. सर्वायसैः शरैः।
त्रिभिराशीविषाकारैर्ललाटे समविध्यत ॥ ९१५ ॥

ततः शरशतेनैव युयुधानो महारथः।
अविध्यद्ब्राह्मणं संख्ये हृष्टरूपो विशांपते ॥ ९१६ ॥

ततो द्रोणस्य यन्तारं निपात्यैकेषुणा भुवि।
अश्वान् व्यद्रावयद्बाणैर्हतसूतांस्ततस्ततः ॥ ९१७ ॥

स रथः प्रद्रुत. संख्ये मण्डलानि सहस्रश.।
चकार राजतो राजन् भ्राजमान इवांशुमान् ॥ ९१८ ॥

अभिद्रवत गृह्णीत हयान् द्रोणस्य धावत।
इति स्म चुक्रुशुः सर्वे राजपुत्रा. सराजकाः ॥ ९१९ ॥

ते सात्यकिमपास्याशु राजन् युधि महारथाः।
यतो द्रोणस्तत. सर्वे सहसा समुपाद्रवन् ॥ ९२० ॥

व्यूहस्यैव पुनर्द्वारं गत्वा द्रोणो व्यवस्थितः।
वातायमानैस्तैरश्वैर्नीतो वृष्णिशरार्दितै. ॥ ९२१ ॥

पाण्डुपाञ्चालसंभिन्नं व्यूहमालोक्य वीर्यवान्।
शैनेये नाकरोद्यत्नं व्यूहमेवाभ्यरक्षत ॥ ९२२ ॥

(अ.११८)तं यान्तमश्वैः शशिशङ्खवर्णै-
र्विगाह्य सैन्यं पुरुषप्रवीरम्
शरैः सुतीक्ष्णै. शतशोऽभ्यविध्यत्
सुदर्शनः सात्वतमुख्यमाजौ ॥ ९२३ ॥

तथा तु तेनाभिहतस्तरस्वी
नप्ता शिनेरिन्द्रसमानवीर्यः

सुदर्शनस्येषुगणैः सुतीक्ष्णै-
हैयान्निहत्याशु ननाद नादम् ॥ १२४ ॥

अथास्य सूतस्य शिरो निकृत्य
भल्लेन शक्राशनिसन्निभेन
सुदर्शनस्यापि शिनिप्रवीरः
क्षुरेण कालानलसन्निभेन
सकुण्डलं पूर्णशशिप्रकाशं
भ्राजिष्णु वक्त्रं विचकर्त देहात् ॥ १२५ ॥

यथा पुरा वज्रधरः प्रसह्य
बलस्य संख्येऽतिबलस्य राजन् ॥ १२६ ॥

(अ.११९)ततः स पुरुषव्याघ्रः सात्यकिः सत्यविक्रमः ।
प्रविष्टस्तावकान् जित्वा सूतं याहीत्यचोदयत् ॥ १२७ ॥

( अ.१२०) परिवव्रुः सुसंक्रुद्धास्त्वदीयाः सात्यकिं रथाः ॥ १२८ ॥

दुर्योधनश्चित्रसेनो दुःशासनविविंशती ।
शकुनिर्दुःसहश्चैव युवा दुर्धर्षणः क्रथः ॥ १२९ ॥

अन्ये च बहवः शूराः शस्त्रवन्तो दुरासदाः ।
पृष्ठतः सात्यकिं यान्तमन्वधावन्नमर्षिणः ॥ १३० ॥

मेघजालनिभं सैन्यं तव पुत्रस्य मारिष ।
प्रत्यगृह्णाच्छिनेः पौत्रः शरैराशीविषोपमैः ॥ १३१ ॥

आश्चर्यं तत्र राजेन्द्र सुमहद्दृष्टवानहम् ।
न मोघः सायकः कश्चित्सात्यकेरभवत्प्रभो ॥ १३२ ॥

ततो दुर्योधनो राजा सात्वतस्य त्रिभिः शरैः ।
विव्याध सूतं निशितैश्चतुर्भिश्चतुरो हयान् ॥ १३३ ॥

ततः स रथिनां श्रेष्ठस्तव पुत्रस्य सारथिम् ।
आजघानाशु भल्लेन स हतो न्यपतद् भुवि ॥ १३४ ॥

पतिते सारथौ तस्मिंस्तव पुत्ररथः प्रभो।
वातायमानैस्तैरश्वैरपानीयत संगरात् ॥ ९३५ ॥

(अ.१२१) ते वध्यमानाः समरे युयुधानेन तावकाः।
युयुधानरथं त्यक्त्वा द्रोणानीकाय दुद्रुवुः ॥ ९३६ ॥

(अ.१२२) दुःशासनरथं दृष्ट्वा समीपे पर्यवस्थितम्।
भारद्वाजस्ततो वाक्यं दुःशासनमथाब्रवीत् ॥ ९३७ ॥

दुःशासन रथाः सर्वे कस्माच्चैते प्रविद्रुताः।
कच्चित्क्षेमं तु नृपतेः कच्चिज्जीवति सैन्धवः ॥ ९३८ ॥

राजपुत्रो भवानत्र राजभ्राता महारथः।
किमर्थं द्रवते युद्धे यौवराज्यमवाप्य हि ॥ ९३९ ॥

दासी जितासि द्यूते त्वं यथाकामचरी भव।
वाससां वाहिका राज्ञो भ्रातुर्ज्येष्ठस्य मे भव ॥ ९४० ॥

न सन्ति पतयः सर्वे तेऽद्य षण्ढतिलैः समा।
दुःशासनैवं कस्मात्त्वं पूर्वमुक्त्वा पलायसे ॥ ९४१ ॥

स्वयं वैरं महत्कृत्वा पञ्चालैः पाण्डवैः सह।
एकं सात्यकिमासाद्य कथं भीतोऽसि संयुगे ॥ ९४२ ॥

क्व ते मानश्च दर्पश्च क्व ते वीर्यं क्व गर्जितम्।
आशीविषसमान् पार्थान् कोपयित्वा क्व यास्यसि ॥ ९४३ ॥

युधि फाल्गुनबाणानां सूर्याग्निसमवर्चसाम्।
न तुल्याः सात्यकिशरा येषां भीतः पलायसे ॥ ९४४ ॥

स युद्धे धृतिमास्थाय यत्तो युध्यस्व पाण्डवैः।
गच्छ तूर्णं रथेनैव यत्र तिष्ठति सात्यकिः ॥ ९४५ ॥

एवमुक्तस्तव सुतो नाब्रवीत्किञ्चिदप्यसौ।
श्रुतं चाश्रुतवत्कृत्वा प्रायाद्येन स सात्यकिः ॥ ९४६ ॥

(अ.१२३) ततो दुःशासनो राजन् शैनेयं समुपाद्रवत्।
किरञ्शतसहस्राणि पर्जन्य इव वृष्टिमान् ॥ ९४७ ॥

सात्वतोऽपि महाराज त विव्याध स्तनान्तरे ।
त्रिभिरेव महाभाग· शरैः सन्नतपर्वभिः ॥ ९४८ ॥

ततोऽस्य वाहान्निशितै· शरैर्जघ्ने महारथ· ।
सारथिं च सुसंक्रुद्ध· शरैः सन्नतपर्वभिः ॥ ९४९ ॥

धनुरेकेन भल्लेन हस्तावापं च पञ्चभिः ।
चिच्छेद विशिखैस्तीक्ष्णैस्तथोभौ पार्ष्णिसारथी ॥ ९५० ॥

स चिछन्नधन्वा विरथो हताश्वो हतसारथिः ।
त्रिगर्तसेनापतिना स्वरथेनापवाहित· ॥ ९५१ ॥

तमभिद्रुत्य शैनेयो मुहूर्तमिव भारत ।
न जघान महाबाहुर्भीमसेनवच· स्मरन् ॥ ९५२ ॥

ततो दुःशासनं जित्वा सात्यकि· सयुगे प्रभो ।
जगाम त्वरितो राजन् येन यातो धनञ्जय· ॥ ९५३ ॥

भीमस्य व्यूहे प्रवेशः, भीम-कर्ण-युद्धम्

(अ.१२५)अपराह्णे महाराज संग्राम· सुमहानभूत् ।
पर्जन्यसमनिर्घोषः पुनर्द्रोणस्य सोमकैः ॥ ९५४ ॥
शोणाश्वं रथमास्थाय नरवीर समाहितः ।
समरेऽभ्यद्रवत्पाण्डूञ्जवमास्थाय मध्यमम् ॥ ९५५ ॥
तमभ्ययाद्बृहत्क्षत्र केकयानां महारथः ।
विमुञ्चन्विशिखांस्तीक्ष्णानाचार्यं भृशमार्दयत् ॥ ९५६ ॥
ततः साधुविसृष्टेन नाराचेन द्विजर्षभ· ।
हृद्यविध्यद्बृहत्क्षत्रं स चिछन्नहृदयोऽपतत् ॥ ९५७ ॥
धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः ।
वधायाभ्यद्रवद्द्रोणं पतङ्ग इव पावकम् ॥ ९५८ ॥
ततोऽस्य विशिखं तीक्ष्णं वधाय वधकांक्षिणः ।
प्रेषयामास समरे भारद्वाजः प्रतापवान् ॥ ९५९ ॥

पतङ्गं हि ग्रसेच्चाषो यथा क्षुद्र बुभुक्षितः।
तथा द्रोणोऽग्रसच्छूरो धृष्टकेतुं महाहवे ॥ ९६० ॥

निहते चेदिराजे तु तत् खण्डं पित्र्यमाविशत्।
अमर्षवशमापन्नः पुत्रोऽस्य परमास्त्रवित् ॥ ९६१ ॥

तमपि प्रहसन् द्रोणः शरैर्निन्ये यमक्षयम्।
महाव्याघ्रो महारण्ये मृगशावं यथा बली ॥ ९६२ ॥

तेषु प्रक्षीयमाणेषु पाण्डवेयेषु भारत।
जरासन्धसुतो वीरः स्वयं द्रोणमुपाद्रवत् ॥ ९६३ ॥

छादयित्वा रणे द्रोणो रथस्थं रथिनां वरम्।
जारासन्धिं जघानाशु मिषतां सर्वधन्विनाम् ॥ ९६४ ॥

ततो द्रोणो महाराज नाम विश्राव्य संयुगे।
शरैरनेकसाहस्रैः पाण्डवेयान् समावृणोत् ॥ ९६५ ॥

आकर्णपलितः श्यामो वयसाऽशीतिपञ्चकः।
रणे पर्यचरद्द्रोणो वृद्धः षोडशवर्षवत् ॥ ९६६ ॥

अथ द्रोणं महाराज विचरन्तमभीतवत्।
वज्रहस्तममन्यन्त शत्रवः शत्रुसूदनम् ॥ ९६७ ॥

(अ.१२९) द्रोणे युधि पराक्रान्ते नर्दमाने मुहुर्मुहुः।
पञ्चालेषु च क्षीणेषु वध्यमानेषु पाण्डुषु ॥ ९६८ ॥

नापश्यच्छरणं किञ्चिद्धर्मराजो युधिष्ठिरः।
चिन्तयामास राजेन्द्र कथमेतद्भविष्यति ॥ ९६९ ॥

ततो वीक्ष्य दिशः सर्वाः सव्यसाचिदिदृक्षया।
युधिष्ठिरो ददर्शाथ नैव पार्थं न माधवम् ॥ ९७० ॥

अपश्यन् सात्यकिं चापि वृष्णीनां प्रवरं रथम्।
चिन्तयाऽभिपरीताङ्गो धर्मराजो युधिष्ठिरः।
नाध्यगच्छत्तदा शान्तिं तावपश्यन्नरोत्तमौ ॥ ९७१ ॥

लोकोपक्रोशभीरुत्वाद्धर्मराजो महामनाः।
अचिन्तयन्महाबाहुः शैनेयस्य रथं प्रति ॥ ९७२ ॥

पदवीं प्रेषितश्चैव फाल्गुनस्य मया रणे।
शैनेयः सात्यकिः सत्यो मित्राणामभयंकरः ॥ ९७३ ॥

तदिदं ह्येकमेवासीद्द्विधा जातं ममाद्य वै।
सात्यकिश्च हि विज्ञेयः पाण्डवश्च धनञ्जयः ॥ ९७४ ॥

सात्यकिं प्रेषयित्वा तु पाण्डवस्य पदानुगम्।
सात्वतस्यापि कं युद्धे प्रेषयिष्ये पदानुगम् ॥ ९७५ ॥

करिष्यामि प्रयत्नेन भ्रातुरन्वेषणं यदि।
युयुधानमनन्विष्य लोको मां गर्हयिष्यति ॥ ९७६ ॥

लोकापवादभीरुत्वात्सोऽहं पार्थं वृकोदरम्।
पदवीं प्रेषयिष्यामि माधवस्य महात्मनः ॥ ९७७ ॥

एवं निश्चित्य मनसा भीममाहूय पार्थिवः।
अब्रवीद्वचनं राजन् कुन्तीपुत्रो युधिष्ठिरः ॥ ९७८ ॥

यथा शंखस्य निर्घोषः पाञ्चजन्यस्य श्रूयते।
पूरितो वासुदेवेन संरब्धेन यशस्विना ॥ ९७९ ॥

नूनमद्य हतः शेते तव भ्राता धनञ्जयः।
तस्मिन् विनिहते नूनं युध्यतेऽसौ जनार्दनः ॥ ९८० ॥

न हि मे शुध्यते भावस्तयोरेव परंतप।
स तत्र गच्छ कौन्तेय यत्र यातो धनञ्जय ॥ ९८१ ॥

सात्यकिश्च महावीर्य कर्तव्यं यदि मन्यसे।
वचनं मम धर्मज्ञ भ्राता ज्येष्ठो भवामि ते ॥ ९८२ ॥

न तेऽर्जुनस्तथा ज्ञेयो ज्ञातव्य सात्यकिर्यथा ॥ ९८३ ॥

चिकीर्षुर्मत्प्रियं पार्थ स यातः सव्यसाचिन।
पदवीं दुर्गमां घोरामगम्यामकृतात्मभिः ॥ ९८४ ॥

दृष्ट्वा कुशलिनौ कृष्णौ सात्वतं चैव सात्यकिम् ।
संविदं चैव कुर्यास्त्वं सिंहनादेन पाण्डव ॥ ९८५ ॥

(अ.१२७)ब्रह्मेशानेन्द्रवरुणानवहद्य पुरा रथ ।
भीम०- तमास्थाय गतौ कृष्णौ न तयोर्विद्यते भयम् ॥ ९८६ ॥

आज्ञा तु शिरसा बिभ्रदेष गच्छामि मा शुच ।
समेत्य तान्नरव्याघ्रांस्तव दास्यामि संविदम् ॥ ९८७ ॥

धृष्टद्युम्नं चेदमाह भीमसेनो महाबल ।
न च मे गमने कृत्यं तादृक् पार्षत विद्यते ॥ ९८८ ॥

धर्मराजस्य वचने स्थातव्यमविशङ्कया ।
यास्यामि पदवी भ्रातु सात्वतस्य च धीमत ॥ ९८९ ॥

सोऽद्य यत्तो रणे पार्थ परिरक्ष युधिष्ठिरम् ।
एतद्धि सर्वकार्याणां परमं कृत्यमाहवे ॥ ९९० ॥

तमब्रवीन्महाराज धृष्टद्युम्नो वृकोदरम् ।
ईप्सितं ते करिष्यामि गच्छ पार्थाविचारयन् ॥ ९९१ ॥

ततो निक्षिप्य राजानं धृष्टद्युम्ने च पाण्डवम् ।
अभिवाद्य गुरुं ज्येष्ठं प्रययौ येन फाल्गुनः ॥ ९९२ ॥

तं समेत्य महाराज तावका पर्यवारयन् ।
शोभन्तो रथिनां श्रेष्ठा सहसैन्यपदानुगाः ॥ ९९३ ॥

स तानतीत्य वेगेन द्रोणानीकमुपाद्रवत् ।
तमवारयदाचार्यो वेलोद्वृत्तमिवार्णवम् ॥ ९९४ ॥

स मन्यमानस्त्वाचार्यो ममायं फाल्गुनो यथा ।
भीमः करिष्यते पूजामित्युवाच वृकोदरम् ॥ ९९५ ॥

भीमसेन न ते शक्या प्रवेष्टुमरिवाहिनी ।
मामनिर्जित्य समरे शत्रुमद्य महाबल ॥ ९९६ ॥

यदि ते सोऽनुज कृष्णः प्रविष्टोऽनुमते मम ।
अनीकं न तु शक्यं मे प्रवेष्टुमिह वै त्वया ॥ ९९७ ॥

अथ भीमस्तु तच्छ्रुत्वा गुरोर्वाक्यमपेतभी ।
क्रुद्ध प्रोवाच वै द्रोणं रक्तताम्रेक्षणस्त्वरन् ॥ ९९८ ॥

पिता नस्त्वं गुरुर्बन्धुस्तथा पुत्रास्तु ते वयम् ।
इति मन्यामहे सर्वे भवन्तं प्रणताः स्थिताः ॥ ९९९ ॥

यदि त्वं शत्रुमात्मानं मन्यसे तत्तथास्त्विह ।
एष ते सदृशं शत्रो· कर्म भीमः करोम्यहम् ॥ १००० ॥

अथोद्भ्राम्य गदा भीम कालदण्डमिवान्तक ।
द्रोणाय व्यसृजद्राजन् स रथादवपुप्लुवे ॥ १ ॥

साश्वसूतध्वजं यानं द्रोणस्यापोथयत्तदा ।
प्रामृद्नाच्च बहून्योधान् वायुर्वृक्षानिवौजसा ॥ २ ॥

तं पुन परिवव्रुस्ते तव पुत्रा रथोत्तमम् ॥ ३ ॥

अन्यं तु रथमास्थाय द्रोण प्रहरतां वर ।
व्यूहद्वारं समासाद्य युद्धाय समुपस्थित ॥ ४ ॥

तत क्रुद्धो महाराज भीमसेनः पराक्रमी ।
अग्रत· स्यन्दनानीकं शरवर्षैरवाकिरत् ॥ ५ ॥

अथान्यैर्विशिखैस्तीक्ष्णै संक्रुद्ध कुण्डभेदिनम् ।
सुषेणं दीर्घनेत्रं च त्रिभिस्त्रीनवधीद्बली ॥ ६ ॥

ततो वृन्दारकं वीरं कुरूणां कीर्तिवर्धनम् ।
अभयं रौद्रकर्माणं दुर्विमोचनमेव च ॥ ७ ॥

विन्दानुविन्दौ सहितौ सुवर्माणं च ते सुतम् ।
प्रहसन्नेव कौन्तेय शरैर्निन्ये यमक्षयम् ॥ ८ ॥

तत सुदर्शनं वीरं पुत्रं ते भरतर्षभ ।
विव्याध समरे तूर्णं स पपात ममार च ॥ ९ ॥

सोऽचिरेणैव कालेन तद्रथानीकमाशुगैः ।
दिशः सर्वाः समालोक्य व्यधमत् पाण्डुनन्दनः ॥ १०१० ॥

भीषयित्वा रथानीकं हत्वा योधान् वरान् वरान्।
व्यतीत्य रथिनश्चापि द्रोणानीकमुपाद्रवत् ॥ ११ ॥

(अ.१२८)समुत्तीर्णं रथानीकं पाण्डवं विहसन् रणे।
विवारयिषुराचार्यः शरवर्षैरवाकिरत् ॥ १२ ॥

ततो रथादवप्लुत्य वेगमास्थाय पाण्डव ।
निमील्य नयने राजन् पदातिर्द्रोणमभ्ययात् ॥ १३ ॥

अंसे शिरो भीमसेनः करौ कृत्वोरसि स्थिरौ।
वेगमास्थाय बलवान् मनोनिलगरुत्मताम् ॥ १४ ॥

यथा हि गोवृषो वर्षं प्रतिगृह्णाति लीलया।
तथा भीमो नरव्याघ्रः शरवर्षं समग्रहीत् ॥ १५ ॥

स वध्यमानः समरे रथं द्रोणस्य मारिष।
ईषायां पाणिना गृह्य प्रचिक्षेप महाबलः ॥ १६ ॥

द्रोणस्तु सत्वरो राजन् क्षिप्तो भीमेन संयुगे।
रथमन्यं समारुह्य व्यूहद्वारं ययौ पुनः ॥ १७ ॥

तमायान्तं तथा दृष्ट्वा भग्नोत्साहं गुरुं तदा।
गत्वा वेगात् पुनर्भीमो धुरं गृह्य रथस्य तु।
तमप्यतिरथं भीमश्चिक्षेप भृशरोषित. ॥ १८ ॥

एवमष्टौ रथाः क्षिप्ता भीमसेनेन लीलया ॥ १९ ॥

ततः स्वरथमास्थाय भीमसेनो महाबलः।
अभ्यद्रवत वेगेन तव पुत्रस्य वाहिनीम् ॥ १०२० ॥

भोजानीकं समासाद्य हार्दिक्येनाभिरक्षितम्।
प्रमथ्य तरसा वीरस्तदप्यतिबलोऽभ्ययात् ॥ २१ ॥

भोजानीकमतिक्रम्य दरदानां च वाहिनीम्।
तथा म्लेच्छगणानन्यान्बहून्युद्धविशारदान् ॥ २२ ॥

सात्यकिं चैव संप्रेक्ष्य युध्यमानं महारथम्।
रथेन यत्तः कौन्तेयो वेगेन प्रययौ तदा ॥ २३ ॥

सोऽपश्यदर्जुनं तत्र युध्यमानं महारथम्।
सैन्धवस्य वधार्थं हि पराक्रान्तं पराक्रमी ॥ २४ ॥

तं दृष्ट्वा पुरुषव्याघ्रश्चुक्रोश महतो रवान्।
प्रावृट्काले महाराज नर्दन्निव बलाहकः ॥ २५ ॥

तं तस्य निनदं घोरं पार्थः शुश्राव नर्दतः।
वासुदेवश्च कौरव्य भीमसेनस्य संयुगे ॥ २६ ॥

तौ श्रुत्वा युगपद्वीरौ निनदं तस्य शुष्मिणः।
पुनः पुनः प्राणदतां दिदृक्षन्तौ वृकोदरम् ॥ २७ ॥

भीमसेनरवं श्रुत्वा फाल्गुनस्य च धन्विनः।
अप्रीयत महाराज धर्मपुत्रो युधिष्ठिरः ॥ २८ ॥

तथा तु नर्दमाने वै भीमसेने मदोत्कटे।
हृद्गतं मनसा प्राह ध्यात्वा धर्मभृतां वरः ॥ २९ ॥

दत्ता भीम त्वया संवित्कृतं गुरुवचस्तथा।
न हि तेषां जयो युद्धे येषां द्वेष्टासि पाण्डव ॥ १०३० ॥

दिष्ट्या जीवति संग्रामे सव्यसाची धनञ्जयः ॥ ३१ ॥

कच्चित्तीर्णप्रतिज्ञं हि वासुदेवेन रक्षितम्।
अनस्तमित आदित्ये समेष्याम्यहमर्जुनम् ॥ ३२ ॥

कच्चिद्दुर्योधनो राजा फाल्गुनेन निपातितम्।
दृष्ट्वा सैन्धवकं संख्ये शममस्मासु धास्यति ॥ ३३ ॥

दृष्ट्वा विनिहतान् भ्रातॄन् भीमसेनेन संयुगे।
कच्चिद्दुर्योधनो मन्दः शममस्मासु धास्यति ॥ ३४ ॥

एवं बहुविधं तस्य राज्ञश्चिन्तयतस्तदा।
कृपयाऽभिपरीतस्य घोरं युद्धमवर्तत ॥ ३५ ॥

(अ. १२९) तथा तु नर्दमानं तं भीमसेनं महाबलम्।
तुमुलेनैव शब्देन कर्णोऽप्यभ्यद्रवद्बली ॥ ३६ ॥

ततः कर्णस्तु विंशत्या शराणां भीममार्दयत्।
विव्याध चास्य त्वरितः सूतं पञ्चभिराशुगैः॥ ३७॥

स शरैरर्दितस्तेन कर्णेन दृढधन्विना।
धनुर्ज्यामच्छिनत्तूर्णं भीमस्तस्य क्षुरेण ह॥ ३८॥

सारथिं चास्य भल्लेन रथनीडादपातयत्।
वाहांश्च चतुरस्तस्य व्यसूंश्चक्रे महारथः॥ ३९॥

हताश्वात्तु रथात्कर्णः समाप्लुत्य विशांपते।
स्यन्दनं वृषसेनस्य तूर्णमापुप्लुवे भयात्॥ १०४०॥

निर्जित्य तु रणे कर्णं भीमसेनः प्रतापवान्।
ननाद बलवान्नादं पर्जन्यनिनदोपमम्॥ ४१॥

तस्य तं निनदं श्रुत्वा प्रहृष्टोऽभूद्युधिष्ठिरः।
कर्णं पराजितं मत्वा भीमसेनेन संयुगे॥ ४२॥

(अ.१३०) तस्मिन्विलुलिते सैन्ये सैन्धवायार्जुने गते।
सात्वते भीमसेने च पुत्रस्ते द्रोणमभ्ययात्॥ ४३॥

तूर्णमभ्यद्रवद्द्रोणं मनो मारुतवेगवान्।
उवाच चैनं पुत्रस्ते संरम्भाद्रक्तलोचनः॥ ४४॥

अर्जुनो भीमसेनश्च सात्यकिश्चापराजितः।
संप्राप्ताः सिन्धुराजस्य समीपमनिवारिताः॥ ४५॥

आश्चर्यभूतं लोकेऽस्मिन् समुद्रस्येव शोषणम्।
निर्जयस्तव विप्राग्र्य सात्वतेनार्जुनेन च॥ ४६॥

तथैव भीमसेनेन लोकः संवदते भृशम्।
कथं द्रोणो जितः सङ्ख्ये धनुर्वेदस्य पारगः।
इत्येवं ब्रुवते योधा अश्रद्धेयमिदं तव॥ ४७॥

नाश एव तु मे नूनं मन्दभाग्यस्य संयुगे।
यत्र त्वां पुरुषव्याघ्रं व्यतिक्रान्तास्त्रयो रथाः॥ ४८॥

एवंगते तु कृत्येऽस्मिन् ब्रूहि यत्ते विवक्षितम् ।
यद्गत गतमेवेदं शेषं चिन्तय मानद ॥ ४९ ॥

यत्कृत्यं सिन्धुराजस्य प्राप्तकालमनन्तरम् ।
तत्संविधीयता क्षिप्रं साधु सञ्चिन्त्य नो द्विज ॥ १०५० ॥

द्रोण०— चिन्त्यं वहुविधं तात यत्कृत्यं तच्छृणुष्व मे ।
त्रयो हि समतिक्रान्ता॰ पाण्डवानां महारथा॰ ॥ ५१ ॥

यावत्तेषां भयं पश्चात्तावदेषा पुरःसरम् ।
तद्गरीयस्तरं मन्ये यत्र कृष्णधनञ्जयौ ॥ ५२ ॥

सा पुरस्ताच्च पश्चाच्च गृहीता भारती चमूः ।
तत्र कृत्यमह मन्ये सैन्धवस्याभिरक्षणम् ॥ ५३ ॥

संप्राप्तं तदिदं द्यूतं यत्तच्छकुनिवुद्धिजम् ॥ ५४ ॥

न सभायां जयो वृत्तो नापि तत्र पराजयः ।
इह नो ग्लहमानानामद्य तावज्जयाजयौ ॥ ५५ ॥

यान्स्म तान्ग्लहते घोराञ्छकुनिः कुरुसंसदि ।
अक्षान् स मन्यमान॰ प्राक् शरास्ते हि दुरासदाः ॥ ५६ ॥

सैन्धवस्य रणे रक्षां विधिवत्कर्तुमर्हथ ।
तत्र नो ग्लहमानानां ध्रुवौ जयपराजयौ ॥ ५७ ॥

यत्र ते परमेष्वासा यत्ता रक्षन्ति सैन्धवम् ।
तत्र गच्छ स्वयं शीघ्रं तांश्च रक्षस्व रक्षिणः ॥ ५८ ॥

इहैव त्वहमासिष्ये प्रेषयिष्यामि चापरान् ।
निरोत्स्यामि च पञ्चालान् सहितान् पाण्डुसृञ्जयैः ॥ ५९ ॥

ततो दुर्योधनोऽगच्छत्तूर्णमाचार्यशासनात् ।
उद्यम्यात्मानमुग्राय कर्मणे सपदानुगः ॥ १०६० ॥

चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
बाह्येन सेनामभ्येत्य जग्मतुः सव्यसाचिनम् ॥ ६१ ॥

यौ तु पूर्वं महाराज वारितौ कृतवर्मणा।
प्रविष्टे त्वर्जुने राजंस्तव सैन्यं युयुत्सया।
पार्श्वे भित्त्वा चमूं वीरौ प्रविष्टौ तव वाहिनीम् ॥ ६२ ॥

(अ.१३१)वर्तमाने महाराज सङ्ग्रामे लोमहर्षणे।
व्याकुलेषु च सर्वेषु पीड्यमानेषु सर्वशः ॥ ६३ ॥

राधेयो भीममानर्च्छद्युद्धाय भरतर्षभ।
यथा नागो वने नागं मत्तो मत्तमभिद्रवन् ॥ ६४ ॥

भीमसेनस्तु राधेयमुत्सृज्य रथिनां वरम्।
इयेष गन्तु यत्रास्तां वीरौ कृष्णधनञ्जयौ ॥ ६५ ॥

तं प्रयान्तमभिद्रुत्य राधेयः कङ्कपत्रिभिः।
अभ्यवर्षन्महाराज मेघो वृष्ट्येव पर्वतम् ॥ ६६ ॥

फुल्लता पङ्कजेनेव वक्त्रेण विहसन् बली।
आजुहाव रणे यान्तं भीममाधिरथिस्तदा ॥ ६७ ॥

कर्ण०– भीमाहितैस्तव रणः स्वप्नेऽपि न विभावितः।
तद्दर्शयसि कस्मान्मे पृष्ठं पार्थदिदृक्षया ॥ ६८ ॥

कुन्त्याः पुत्रस्य सदृशं नेदं पाण्डवनन्दन।
तेन मामभितः स्थित्वा शरवर्षैरवाकिर ॥ ६९ ॥

भीमसेनस्तदाह्वानं कर्णान्नामर्षयद्युधि।
अर्धमण्डलमावृत्य सूतपुत्रमयोधयत् ॥ १०७० ॥

ततो बाणमयं जालं भीमसेनरथं प्रति।
कर्णेन विहितं राजन्निमेषार्धाददृश्यत ॥ ७१ ॥

तत्तु भीमो महाबाहो कर्णस्य चरितं रणे।
नामृष्यत महाबाहुः क्रोधादुद्वृत्तलोचनः ॥ ७२ ॥

स कर्णं पञ्चविंशत्या नाराचानां समार्पयत् ॥ ७३ ॥

पुनरन्येन बाणेन भीमसेनः प्रतापवान्।
चिच्छेद कार्मुकं तूर्णं कर्णस्य प्रहसन्निव ॥ ७४ ॥

जघान चतुरश्चाश्वान् सूतं च त्वरितः शरैः।
नाराचैरर्करश्म्याभैः कर्णं विव्याध चोरसि ॥ ७५ ॥
स वैक्लव्यं महत्प्राप्य च्छिन्नधन्वा शराहतः।
तथा पुरुषमानी स प्रत्यपायाद्रथान्तरम् ॥ ७६ ॥
(अ.१३३)अत्यद्भुतमहं मन्ये भीमसेनस्य विक्रमम्।
धृत०- यत्कर्णं योधयामास समरे लघुविक्रमम् ॥ ७७ ॥
कृतवान्यानि युद्धानि कर्णः पाण्डुसुतैः सह।
सर्वत्र पाण्डवाः कर्णमजयन्त रणाजिरे ॥ ७८ ॥
अजेयाः पाण्डवास्तात देवैरपि सवासवैः।
न स तद्बुध्यते मन्दः पुत्रो दुर्योधनो मम ॥ ७९ ॥
पुत्रस्नेहाभिभूतेन मया चाप्यकृतात्मना।
धर्मे स्थिता महात्मानो निकृताः पाण्डुनन्दनाः ॥ १०८० ॥
शमकामः ससोदर्यो दीर्घप्रेक्षी युधिष्ठिरः।
अशक्त इति मत्वा तु मम पुत्रैर्निराकृतः ॥ ८१ ॥
तानि दुःखान्यनेकानि विप्रकाराश्च सर्वशः।
हृदि कृत्वा महाबाहुर्भीमोऽयुध्यत सूतजम् ॥ ८२ ॥
तस्मान्मे सञ्जय ब्रूहि कर्णभीमौ यथा रणे।
अयुध्येतां युधि श्रेष्ठौ परस्परवधैषिणौ ॥ ८३ ॥
सञ्जय०-राजन्वैकर्तनो भीमं क्रुद्धः क्रुद्धमरिंदमम्।
पराक्रान्तं पराक्रम्य विव्याध त्रिंशता शरैः ॥ ८४ ॥
तस्यास्यतो धनुर्भीमश्चकर्त निशितैस्त्रिभिः।
रथनीडाच्च यन्तारं भल्लेनापातयत्क्षितौ ॥ ८५ ॥
तथा कृच्छ्रगतं दृष्ट्वा कर्णं दुर्योधनो नृपः।
वेपमान इव क्रोधाद्व्यादिदेशाथ दुर्जयम् ॥ ८६ ॥
गच्छ दुर्जय राधेयं पुरो ग्रसति पाण्डवः।
जहि तूबरकं क्षिप्रं कर्णस्य बलमादधत् ॥ ८७ ॥

(अ.१३५)दैवमेव परं मन्ये धिक्पौरुषमनर्थकम् ।
धृत०- यत्राधिरथिरायत्तो नातरत्पाण्डवं रणे ॥ १ ॥

कर्णो हि बलवाञ्छूरो दृढधन्वा जितक्लमः ।
इति मामब्रवीत्सूत मन्दो दुर्योधनः पुरा ॥ २ ॥

तत्र तं निर्जितं दृष्ट्वा भुजङ्गमिव निर्विषम् ।
युद्धात्कर्णमपक्रान्तं किंस्विद्दुर्योधनोऽब्रवीत् ॥ ३ ॥

दृष्ट्वा भ्रातॄन्हतान्संख्ये भीमसेनेन दंशितान् ।
आत्मापराधं सुमहन्नूनं तप्यति पुत्रकः ॥ ४ ॥

अहो मम सुतानां हि विपन्नं सूत जीवितम् ॥ ५ ॥

सञ्जय०-यस्त्वं शोचसि कौरव्य वर्तमाने महाभये ।
त्वमस्य जगतो मूलं विनाशस्य न संशय ॥ ६ ॥

स्वयं पीत्वा महाराज कालकूटं सुदुर्जरम् ।
तस्येदानीं फलं कृत्स्नमवाप्नुहि नरोत्तम ॥ ७ ॥

तत्र ते वर्तयिष्यामि यथा युद्धमवर्तत ॥ ८ ॥

दृष्ट्वा कर्णं तु पुत्रास्ते भीमसेनपराजितम् ।
नामृष्यन्त महेष्वासाः सोदर्याः पञ्च भारत ॥ ९ ॥

दुर्मर्षणो दुःसहश्च दुर्मदो दुर्धरो जयः ।
पाण्डवं चित्रसन्नाहास्तं प्रतीपमुपाद्रवन् ॥ १११० ॥

तान् बाणैः पञ्चविंशत्या साश्वान् राजन्नरर्षभान् ।
ससूतान् भीमधनुषो भीमो निन्ये यमक्षयम् ॥ ११ ॥

(अ.१३६)तवात्मजांस्तु पतितान् दृष्ट्वा कर्णः प्रतापवान् ।
क्रोधेन महताऽऽविष्टो निर्विण्णोऽभूत्स जीवितात् ॥ १२ ॥

आगस्कृतमिवात्मानं मेने चाधिरथिस्तदा ।
यत्प्रत्यक्षं तव सुता भीमेन निहता रणे ॥ १३ ॥

भीमसेनस्ततः क्रुद्धः कर्णस्य निशिताञ्शरान् ।
निचखान स संभ्रान्तः पूर्ववैरमनुस्मरन् ॥ १४ ॥

स भीमं पञ्चभिर्विद्ध्वा राधेयः प्रहसन्निव ।
पुनर्विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ॥ १५ ॥
तस्य भीमो हयान् हत्वा विनिहत्य च सारथिम् ।
प्रजहास महाहासं कृते प्रतिकृते पुनः ॥ १६ ॥
स च्छाद्यमानो बाणौघैर्भीमसेनधनुश्च्युतैः ।
पुनरेवाभवत्कर्णो भीमसेनात्पराङ्मुखः ॥ १७ ॥
तं पराङ्मुखमालोक्य पदातिं सूतनन्दनम् ।
कौन्तेयशरसंछन्नं राजा दुर्योधनोऽब्रवीत् ॥ १८ ॥
त्वरध्वं सर्वतो यत्ता राधेयस्य रथं प्रति ॥ १९ ॥
ततस्तव सुता राजञ्छ्रुत्वा भ्रातुर्वचो द्रुतम् ।
अभ्ययुः पाण्डवं युद्धे विसृजन्तः शिलीमुखान् ॥ ११२० ॥
चित्रोपचित्रश्चित्राक्षश्चारुचित्रः शरासनः ।
चित्रायुधश्चित्रवर्मा समरे चित्रयोधिनः ॥ २१ ॥
तानापतत एवाशु भीमसेनो महारथः ।
एकैकेन शरेणाजौ पातयामास ते सुतान् ॥ २२ ॥
ते हता न्यपतन्भूमौ वातरुग्णा इव द्रुमाः ॥ २३ ॥
दृष्ट्वा विनिहतान्पुत्रांस्तव राजन्महारथान् ।
अश्रुपूर्णमुखः कर्णः क्षत्तुः सस्मार तद्वचः ॥ २४ ॥
(अ.१३७)दृष्ट्वा तु भीमसेनस्य विक्रमं युधि भारत ।
अभ्यनन्दंस्त्वदीयाश्च संप्रहृष्टाश्च चारणाः ।
साधु साध्विति वेगेन सिंहनादमथानदन् ॥ २५ ॥
तस्मिन्समुत्थिते शब्दे तुमुले लोमहर्षणे ।
अभ्यभाषत पुत्रस्ते राजन् दुर्योधनस्त्वरन् ॥ २६ ॥
कर्ण गच्छत भद्रं वः परीप्सन्तो वृकोदरात् ॥ २७ ॥
दुर्योधनसमादिष्टाः सोदर्याः सप्त भारत ।
भीमसेनमभिद्रुत्य संरब्धा पर्यवारयन् ॥ २८ ॥

ततो वेगेन कौन्तेय· पीडयित्वा शरासनम् ।
मनुष्यसमतां ज्ञात्वा सप्त सन्धाय सायकान् ।
तेभ्यो व्यसृजदायस्तः सूर्यरश्मिनिभान्प्रभुः ॥ २९ ॥

ते शरैर्भिन्नमर्माणो रथेभ्य· प्रापतन् क्षितौ ।
गिरिसानुरुहा भग्ना द्विपेनेव महाद्रुमाः ॥ ११३० ॥

शत्रुञ्जयः शत्रुसहश्चित्रश्चित्रायुधो दृढः ।
चित्रसेनो विकर्णश्च सप्तैते विनिपातिताः ॥ ३१ ॥

पुत्राणां तव सर्वेषां निहतानां वृकोदर· ।
शोचत्यतिभृशं दुःखाद्विकर्णं पाण्डवः प्रियम् ॥ ३२ ॥

प्रतिज्ञेयं मया वृत्ता निहन्तव्यास्तु संयुगे ।
विकर्ण तेनासि हतः प्रतिज्ञा रक्षिता मया ॥ ३३ ॥

त्वमागा· समरं वीर क्षात्रधर्ममनुस्मरन् ।
ततो विनिहत· सङ्ख्ये युद्धधर्मो हि निष्ठुरः ॥ ३४ ॥

तान्निहत्य महाबाहू राधेयस्यैव पश्यत· ।
सिंहनादरवं घोरमसृजत्पाण्डुनन्दन· ॥ ३५ ॥

एकत्रिंशन्महाराज पुत्रास्तव निपातितान् ।
हतान् दुर्योधनो दृष्ट्वा क्षत्तुः सस्मार तद्वचः ॥ ३६ ॥

यद्द्यूतकाले दुर्बुद्धिरब्रवीत्तनयस्तव ।
सभामानाय्य पाञ्चालीं कर्णेन सहितोऽल्पधीः ॥ ३७ ॥

विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः ।
पतिमन्यं वृणीष्वेति तस्येदं फलमागतम् ॥ ३८ ॥

विलपंश्च बहु क्षत्ता शमं नालभत त्वयि ।
सपुत्रो भरतश्रेष्ठ तस्य भुङ्क्ष्व फलोदयम् ॥ ३९ ॥

(अ.१३८)यथा ह्येष क्षयो वृत्तो ममापनयसम्भव· ।
धृत०- वीराणां तन्ममाचक्ष्व स्थिरीभूतोऽस्मि सञ्जय ॥ ११४० ॥

सञ्जय०-कर्णभीमौ महाराज पराक्रान्तौ महाबलौ।
बाणवर्षाण्यसृजतां वृष्टिमन्ताविवाम्बुदौ ॥ ४१ ॥

ततो व्युदस्तं तत्सैन्यं सिन्धुसौवीरकौरवम्।
प्रोत्सारितं महावेगैः कर्णपाण्डवयोः शरैः ॥ ४२ ॥

ते शूरा हतभूयिष्ठा हताश्व-रथ-वारणाः।
शरपातं समुत्सृज्य स्थिता युद्धदिदृक्षवः ॥ ४३ ॥

(अ.१३९)ततो भीमो महाबाहुः सूतपुत्रस्य भारत।
क्षुरप्रेण धनुश्छित्त्वा ननाद परवीरहा ॥ ४४ ॥

तदपास्य धनुश्छिन्नं सूतपुत्रो महारथः।
अन्यत्कार्मुकमादत्त भारघ्नं वेगवत्तरम् ॥ ४५ ॥

तदप्यथ निमेषार्धाच्चिच्छेदास्य वृकोदरः।
तृतीयं च चतुर्थं च पञ्चमं षष्ठमेव हि ॥ ४६ ॥

सप्तमं चाष्टमं चैव नवमं दशमं तथा।
एकादशं द्वादशं च त्रयोदशमथापि च ॥ ४७ ॥

चतुर्दशं पञ्चदशं षोडशं च वृकोदरः।
तथा सप्तदशं वेगादष्टादशमथापि वा ॥ ४८ ॥

बहूनि भीमश्चिच्छेद कर्णस्यैवं धनूंषि हि ॥ ४९ ॥

निमेषार्धात्ततः कर्णो धनुर्हस्तो व्यतिष्ठत।
दृष्ट्वा स कुरु-सौवीर-सिन्धुवीरबलक्षयम् ॥ ११५० ॥

सवर्मध्वजशस्त्रैश्च पतितैः संवृतां महीम्।
हस्त्यश्वरथदेहांश्च गतासून् प्रेक्ष्य सर्वशः।
सूतपुत्रस्य संरम्भाद्दीप्तं वपुरजायत ॥ ५१ ॥

पुनश्चासृजदुग्राणि शरवर्षाणि पाण्डवः ॥ ५२ ॥

तस्य तान्याददे कर्णः सर्वाण्यस्त्राण्यभीतवत्।
युध्यमानस्य भीमस्य सूतपुत्रोऽस्त्रमायया ॥ ५३ ॥

तस्येषुधी धनुर्ज्यां च बाणैः सन्नतपर्वभिः।
रश्मीन्योक्त्राणि चाश्वानां क्रुद्धः कर्णोऽच्छिनन्मृधे ॥ ५४ ॥

तस्याश्वांश्च पुनर्हत्वा सूतं विव्याध पञ्चभिः।
सोऽपसृत्य द्रुतं सूतो युधामन्यो रथं ययौ ॥ ५५ ॥

क्षीणशस्त्रस्तु कौन्तेयः कर्णेन समभिद्रुतः।
दृष्ट्वाऽर्जुनहतान्नागान् पतितान् पर्वतोपमान्।
रथमार्गविघातार्थं व्यायुधः प्रविवेश ह ॥ ५६ ॥

हस्तिनां व्रजमासाद्य रथदुर्गं प्रविश्य च।
पाण्डवो जीविताकाङ्क्षी राधेयं नाभ्यहारयत् ॥ ५७ ॥

व्यवस्थानमथाकाङ्क्षन्धनञ्जयशरैर्हतम्।
उद्यम्य कुञ्जरं पार्थस्तस्थौ परपुरञ्जयः।
महौषधिसमायुक्तं हनूमानिव पर्वतम् ॥ ५८ ॥

तमस्य विशिखैः कर्णो व्यधमत्कुञ्जरं पुनः ॥ ५९ ॥

हस्त्यङ्गान्यथ कर्णाय प्राहिणोत्पाण्डुनन्दनः ॥ ११६० ॥

चक्राण्यश्वांस्तथा चान्यद्यद्यत्पश्यति भूतले।
तत्तदादाय चिक्षेप क्रुद्धः कर्णाय पाण्डवः ॥ ६१ ॥

तदस्य सर्वं चिच्छेद क्षिप्तं क्षिप्तं शितैः शरैः ॥ ६२ ॥

भीमोऽपि मुष्टिमुद्यम्य वज्रगर्भां सुदारुणाम्।
हन्तुमैच्छत्सूतपुत्रं संस्मरन्नर्जुनं क्षणात् ॥ ६३ ॥

शक्तोऽपि नावधीत्कर्णं समर्थः पाण्डुनन्दनः।
रक्षमाणः प्रतिज्ञां तां या कृता सव्यसाचिना ॥ ६४ ॥

तमेवं व्याकुलं भीमं भूयो भूयः शितैः शरैः।
मूर्च्छयाऽभिपरीताङ्गमकरोत् सूतनन्दनः ॥ ६५ ॥

व्यायुधं नावधीच्चैनं कर्णः कुन्त्या वचः स्मरन्।
धनुषोऽग्रेण तं कर्ण सोऽभिद्रुत्य परामृशत् ॥ ६६ ॥

धनुषा स्पृष्टमात्रेण क्रुद्धः सर्प इव श्वसन् ।
आच्छिद्य स धनुस्तस्य कर्णं मूर्धन्यताडयत् ॥ ६७ ॥

ताडितो भीमसेनेन क्रोधादारक्तलोचन ।
विहसन्निव राधेयो वाक्यमेतदुवाच ह ॥ ६८ ॥

पुनः पुनस्तूबरक मूढ औदरिकेति च ।
अकृतास्त्रक मा योत्सीर्बाल सङ्ग्रामकातर ॥ ६९ ॥

यत्र भोज्यं बहुविधं भक्ष्यं पेयं च पाण्डव ।
तत्र त्वं दुर्मते योग्यो न युद्धेषु कदाचन ॥ ११७० ॥

मूल-पुष्प-फलाहारो व्रतेषु नियमेषु च ।
उचितस्त्वं वने भीम न त्वं युद्धविशारदः ॥ ७१ ॥

सूदान् भृत्यजनान् दासांस्त्वं गृहे त्वरयन्भृशम् ।
योग्यस्ताडयितुं क्रोधाद्भोजनार्थं वृकोदर ॥ ७२ ॥

योद्धव्यं मारिषान्यत्र न योद्धव्यं च मादृशै ।
मादृशैर्युध्यमानानामेतच्चान्यच्च विद्यते ॥ ७३ ॥

गच्छ वा यत्र तौ कृष्णौ तौ त्वां रक्षिष्यतो रणे ।
गृहं वा गच्छ कौन्तेय किं ते युद्धेन बालक ॥ ७४ ॥

कर्णस्य वचन श्रुत्वा भीमसेनोऽतिदारुणम् ।
उवाच कर्णं प्रहसन् सर्वेषां शृण्वतां वच ॥ ७५ ॥

जितस्त्वमसकृद्दुष्ट कत्थसे किं वृथाऽऽत्मना ।
जयाजयौ महेन्द्रस्य लोके दृष्टौ पुरातनैः ॥ ७६ ॥

एवं तं विरथं कृत्वा कर्णो राजन् व्यकत्थयत् ।
प्रमुखे वृष्णिसिंहस्य पार्थस्य च महात्मनः ॥ ७७ ॥

ततो राजञ्शिलाधौताञ्शरान् शाखामृगध्वजः ।
प्राहिणोत्सूतपुत्राय केशवेन प्रचोदितः ॥ ७८ ॥

स भुजङ्गैरिवाविष्टैर्गाण्डीवप्रेषितैः शरै ।
भीमसेनादपासेधत्सूतपुत्रं धनञ्जयः ॥ ७९ ॥

स च्छिन्नधन्वा भीमेन धनञ्जयशराहतः।
कर्णो भीमादपायासीद्रथेन महता द्रुतम्॥ ११८०॥
भीमोऽपि सात्यकेर्वाहं समारुह्य नरर्षभः।
अन्वयाद्भ्रातरं संख्ये पाण्डवं सव्यसाचिनम्॥ ८१॥

## अलम्बुषस्य राज्ञो वधः, भूरिश्रवोवधः

(अ.१४०) धनञ्जयः सुसंक्रुद्धः प्रविष्टो मामकं बलम्।
धृत०- तदाप्रभृति मा शोको दहत्यग्निरिवाशयम्॥ ८२॥
अनुमानाच्च पश्यामि नास्ति सञ्जय सैन्धवः।
युद्धं तु तद्यथावृत्तं तन्ममाचक्ष्व तत्त्वतः॥ ८३॥
यच्च विक्षोभ्य महतीं सेनामालोड्य चासकृत्।
एकः प्रविष्टः सङ्क्रुद्धो नलिनीमिव कुञ्जरः।
तस्य मे वृष्णिवीरस्य ब्रूहि युद्धं यथातथम्॥ ८४॥
सञ्जय०- तं यान्तमश्वै रजतप्रकाशै-
रायोधने वीरतरं नदन्तम्।
अलम्बुषः सात्यकिं माधवाग्र्य-
मवारयद्राजवरोऽभिपत्य॥ ८५॥
आविध्यदेनं दशभिः पृषत्कै-
रलम्बुषो राजवरः प्रसह्य॥ ८६॥
तथा तु तेनाभिहतस्तरस्वी
नप्ता शिनेश्चक्रधरप्रभावः।
अलम्बुषस्योत्तमवेगवद्भि-
रश्वांश्चतुर्भिर्निजघान बाणैः।
सकुण्डलं पूर्णशशिप्रकाशं
भ्राजिष्णु वक्त्रं निचकर्त देहात्॥ ८७॥
अथात्मजास्ते सहिताभिपेतु-
रन्ये च योधास्त्वरितास्त्वदीयाः।

कृत्वा मुखं भारत योधमुख्य
दुःशासनं त्वत्सुतमाजमीढ ॥ ८८ ॥
निवार्य तांस्तूर्णममित्रघाती
नप्ता शिनेः पत्रिभिरग्निकल्पैः ।
दुःशासनस्याभिजघान वाहा-
नुद्यम्य बाणासनमाजमीढ ॥ ८९ ॥

(अ.१४१) तमुद्यतं महाबाहुं दुःशासनरथं प्रति
त्वरितं त्वरणीयेषु धनञ्जयजयैषिणम् ॥ ११९० ॥
त्रिगर्तानां महेष्वासाः सुवर्णविकृतध्वजाः ।
सेनासमुद्रमाविष्टमनन्तं पर्यवारयन् ॥ ९१ ॥
अजयद्राजपुत्रांस्तान् भ्राजमानान्महारणे ।
एकः पञ्चाशत शत्रून् सात्यकिः सत्यविक्रमः ॥ ९२ ॥
तमन्ये शूरसेनाना शूराः संख्ये न्यवारयन् ।
तैर्व्यवाहरदार्यात्मा मुहूर्तादेव सात्यकिः ॥ ९३ ॥
ततः कलिङ्गैर्युयुधे सोऽचिन्त्यबलविक्रमः ॥ ९४ ॥
तां च सेनामतिक्रम्य कलिङ्गानां दुरत्ययाम् ।
अथ पार्थं महाबाहुर्धनञ्जयमुपासदत् ।
तरन्निव जले श्रान्तो यथा स्थलमुपेयिवान् ॥ ९५ ॥
तं दृष्ट्वा पुरुषव्याघ्रं युयुधानः समाश्वसत् ॥ ९६ ॥
तमायान्तमभिप्रेक्ष्य केशवः पार्थमब्रवीत् ।
असावायाति शैनेयस्तव पार्थ पदानुगः ॥ ९७ ॥
एष शिष्यः सखा चैव तव सत्यपराक्रमः ।
सर्वान् योधांस्तृणीकृत्य विजिग्ये पुरुषर्षभः ॥ ९८ ॥
स्वबाहुबलमाश्रित्य विदार्य च वरूथिनीम् ।
प्रेषितो धर्मराजेन पार्थैषोऽभ्येति सात्यकिः ॥ ९९ ॥
ततः प्रहृष्टः कौन्तेयः केशवं वाक्यमब्रवीत् ।
न मे प्रियं महाबाहो यन्मामभ्येति सात्यकिः ॥ १२०० ॥

एतेन हि महाबाहो रक्षितव्य॰ स पार्थिवः।
तमेष कथमुत्सृज्य मम कृष्ण पदानुगः॥ १॥
राजा द्रोणाय चोत्सृष्ट॰ सैन्धवश्चानिपातित।
प्रत्युद्याति च शैनेयमेष भूरिश्रवा रणे॥ २॥
सोऽयं गुरुतरो भार॰ सैन्धवार्थे समाहितः।
ज्ञातव्यश्च हि मे राजा रक्षितव्यश्च सात्यकिः॥ ३॥
जयद्रथश्च हन्तव्यो लम्बते च दिवाकर।
श्रान्तश्चैष महाबाहुरल्पप्राणश्च सांप्रतम्॥ ४॥
न च भूरिश्रवा॰ श्रान्तः ससहायश्च केशव॥ ५॥
कच्चिन्न सागरं तीर्त्वा सात्यकिः सत्यविक्रम॰।
गोष्पदं प्राप्य सीदेत महौजाः शिनिपुङ्गवः॥ ६॥
व्यतिक्रममिमं मन्ये धर्मराजस्य केशव।
आचार्याद्भयमुत्सृज्य यः प्रैषयत सात्यकिम्॥ ७॥
ग्रहणं धर्मराजस्य खग॰ श्येन इवामिषम्।
नित्यमाशंसते द्रोणः कच्चित्स्यात् कुशली नृप॰॥ ८॥
(अ.१४२) तमापतन्तं संप्रेक्ष्य सात्वतं युद्धदुर्मदम्।
सञ्जय०–क्रोधाद्भूरिश्रवा राजन् सहसा समुपाद्रवत्॥ ९॥
तमब्रवीन्महाराज कौरव्यः शिनिपुङ्गवम्।
अद्य त्वां समरे हत्वा नित्यं शूराभिमानिनम्।
नन्दयिष्यामि दाशार्ह कुरुराजं सुयोधनम्॥ १२१०॥
अद्य संयमनीं याता मया त्वं निहतो रणे।
यथा रामानुजेनाजौ रावणिर्लक्ष्मणेन ह॥ ११॥
युयुधानस्तु तं राजन् प्रत्युवाच हसन्निव।
नाहं भीषयितुं शक्यो वाङ्मात्रेण तु केवलम्॥ १२॥
किं वृथोक्तेन बहुना कर्मणा तन् समाचर।
शारदस्येव मेघस्य गर्जितं निष्फलं हि ते॥ १३॥

नाहत्वाऽहं निवर्तिष्ये त्वामद्य पुरुषाधम ॥ १४ ॥
अन्योन्यं तौ तथा वाग्भिस्तक्षन्तौ नरपुङ्गवौ।
जिघांसू परमक्रुद्धावभिजघ्नतुराहवे ॥ १५ ॥
तौ नखैरिव शार्दूलौ दन्तैरिव महाद्विपौ।
रथशक्तिभिरन्योन्यं विशिखैश्चाप्यकृन्तताम् ॥ १६ ॥
अन्योन्यस्य हयान्हत्वा धनुषी विनिकृत्य च।
विरथावसियुद्धाय समेयातां महारणे ॥ १७ ॥
आर्षभे चर्मणी चित्रे प्रगृह्य विपुले शुभे।
विकोशौ चाप्यसी कृत्वा समरे तौ विचेरतुः ॥ १८ ॥
असिभ्यां चर्मणी चित्रे शतचन्द्रे नराधिप।
निकृत्य पुरुषव्याघ्रौ बाहुयुद्धं प्रचक्रतुः ॥ १९ ॥
ततो भूरिश्रवाः क्रुद्धः सात्यकिं युद्धदुर्मदः।
उद्यम्याभ्याहनद्राजन् मत्तो मत्तमिव द्विपम् ॥ १२२० ॥
अथ कृष्णो महाबाहुरर्जुनं प्रत्यभाषत।
पश्य वृष्ण्यन्धकव्याघ्रं सौमदत्तिवशं गतम् ॥ २१ ॥
परिश्रान्तं गतं भूमौ कृत्वा कर्म सुदुष्करम्।
तवान्तेवासिनं वीरं पालयार्जुन सात्यकिम् ॥ २२ ॥
अथ कोशाद्विनिष्कृष्य खड्गं भूरिश्रवा रणे।
मूर्धजेषु निजग्राह पदा चोरस्यताडयत् ॥ २३ ॥
ततोऽस्य च्छेत्तुमारब्धः शिरः कायात्सकुण्डलम्।
तावत्क्षणात्सात्वतोऽपि शिरः संभ्रमयंस्त्वरन् ॥ २४ ॥
यथा चक्रं तु कौलालो दण्डविद्धं तु भारत।
सहैव भूरिश्रवसो बाहुना केशधारिणा ॥ २५ ॥
तं तथा परिकृष्यन्तं दृष्ट्वा सात्वतमाहवे।
वासुदेवस्ततो राजन् भूयोऽर्जुनमभाषत ॥ २६ ॥

पश्य वृष्ण्यन्धकव्याघ्रं सौमदत्तिवशं गतम्।
तव शिष्यं महाबाहो धनुष्यनवरं त्वया ॥ २७ ॥

वासुदेवं महाबाहुरर्जुनः प्रत्यभाषत।
सैन्धवे सक्तदृष्टित्वान्नैनं पश्यामि माधवम् ॥ २८ ॥

एतत्त्वसुकरं कर्म यादवार्थे करोम्यहम् ॥ २९ ॥

इत्युक्त्वा वचनं कुर्वन्वासुदेवस्य पाण्डवः।
ततः क्षुरप्रं निशितं गाण्डीवे समयोजयत् ॥ १२३० ॥

पार्थबाहुविसृष्टः स महोल्केव नभश्च्युता।
सखड्गं यज्ञशीलस्य साङ्गदं बाहुमच्छिनत् ॥ ३१ ॥

(१४३)स मोघं कृतमात्मानं दृष्ट्वा पार्थेन कौरवः।
उत्सृज्य सात्यकिं क्रोधाद्गर्हयामास पाण्डवम् ॥ ३२ ॥

-नृशंसं बत कौन्तेय कर्मेदं कृतवानसि।
अपश्यतो विषक्तस्य यन्मे बाहुमचिच्छिदः ॥ ३३ ॥

किं नु वक्ष्यसि राजानं धर्मपुत्रं युधिष्ठिरम्।
किं कुर्वाणो मया संख्ये हतो भूरिश्रवा रणे ॥ ३४ ॥

इदमिन्द्रेण ते साक्षादुपदिष्टं महात्मना।
अस्त्रं रुद्रेण वा पार्थ द्रोणेनाथ कृपेण वा ॥ ३५ ॥

इदं तु नीचाचरितमसत्पुरुषसेवितम्।
कथमाचरितं पार्थ पापकर्म सुदुष्करम् ॥ ३६ ॥

येषु येषु नरव्याघ्र यत्र यत्र च वर्तते।
आशु तच्छीलतामेति तदिदं त्वयि दृश्यते ॥ ३७ ॥

इदं तु यदतिक्षुद्रं वार्ष्णेयार्थे कृतं त्वया।
वासुदेवमतं नूनं नैतत्त्वय्युपपद्यते ॥ ३८ ॥

व्रात्याः संक्लिष्टकर्माणः प्रकृत्यैव च गर्हिताः।
वृष्ण्यन्धकाः कथं पार्थ प्रमाणं भवता कृताः ॥ ३९ ॥

एवमुक्तो रणे पार्थो भूरिश्रवसमब्रवीत्।
व्यक्तं हि जीर्यमाणोऽपि बुद्धिं जरयते नरः॥ १२४०॥
अनर्थकमिदं सर्वं यत्त्वया व्याहृतं प्रभो
जानन्नेव हृषीकेश गर्हसे मां च पाण्डवम्॥ ४१॥
युद्धयन्ति क्षत्रिया· शत्रून् स्वैः स्वै' परिवृता नराः।
वयस्यैरथ मित्रैश्च ते च बाहुं समाश्रिता·॥ ४२॥
न चात्मा रक्षितव्यो वै राजन् रणगतेन हि।
यो यस्य युज्यतेऽर्थेषु स वै रक्ष्यो नराधिप॥ ४३॥
तै रक्ष्यमाणै· स नृपो रक्षितव्यो महामृधे॥ ४४॥
यद्यहं सात्यकिं पश्ये वध्यमानं महारणे।
ततस्तस्य वियोगेन पापं मेऽनर्थतो भवेत्।
रक्षितश्च मया यस्मात्तस्मात्क्रुध्यसि किं मयि॥ ४५॥
एवं रथगजाकीर्णे हयपत्तिसमाकुले।
एकस्यैकेन हि कथं संग्रामः संभविष्यति॥ ४६॥
यदिच्छसि शिरश्चास्य असिना हन्तुमाहवे।
तथा कृच्छ्रगतं चैव सात्यकिं क· क्षमिष्यति॥ ४७॥
त्वं वै विगर्हयात्मानमात्मानं यो न रक्षसि।
कथं करिष्यसे वीर यो वा त्वां संश्रयेज्जनः॥ ४८॥
एवमुक्तो महाबाहुर्यूपकेतुर्महायशाः।
युयुधानं समुत्सृज्य रणे प्रायमुपाविशत्॥ ४९॥
शरानास्तीर्य सव्येन पाणिना पुण्यलक्षणः।
यियासुर्ब्रह्मलोकाय प्राणान्प्राणेष्वथाजुहोत्॥ १२५०॥
ततः स सर्वसेनायां जनः कृष्णधनञ्जयौ।
गर्हयामास तं चापि शशंस पुरुषर्षभम्॥ ५१॥
तांस्तथा वादिनो राजन् पुत्रांस्तव धनञ्जयः।
उवाच पाण्डुतनय· साक्षेपमिव फाल्गुनः॥ ५२॥

मम सर्वेऽपि राजानो जानन्त्येव महाव्रतम्।
न शक्यो मामको हन्तुं यो मे स्याद्बाणगोचरे ॥ ५३ ॥

आत्तशस्त्रस्य हि रणे वृष्णिवीरं जिघांसतः।
यदहं बाहुमच्छैत्सं न स धर्मो विगर्हित॰ ॥ ५४ ॥

न्यस्तशस्त्रस्य बालस्य विरथस्य विवर्मणः।
अभिमन्योर्वधं तात धार्मिक॰ को नु पूजयेत् ॥ ५५ ॥

एवमुक्त॰ स पार्थेन शिरसा भूमिमस्पृशत्।
पाणिना चैव सव्येन प्राहिणोदस्य दक्षिणम्।
यूपकेतुर्महाराज तूष्णीमासीदवाङ्मुख॰ ॥ ५६ ॥

उत्थित॰ स तु शैनेयो विमुक्त॰ सौमदत्तिना।
खड्गमादाय चिच्छित्सु शिरस्तस्य महात्मनः ॥ ५७ ॥

निकृत्तभुजमासीनं छिन्नहस्तमिव द्विपम्।
क्रोशतां सर्वसैन्यानां निन्द्यमान॰ सुदुर्मनाः ॥ ५८ ॥

वार्यमाण॰ स कृष्णेन पार्थेन च महात्मना।
विक्रोशतां च सैन्यानामवधीत्तं धृतव्रतम् ॥ ५९ ॥

प्रायोपविष्टाय रणे पार्थेन च्छिन्नबाहवे।
सात्यकिः कौरवेयाय खड्गेनापाहरच्छिर॰ ॥ १२६० ॥

नाभ्यनन्दन्त सैन्यानि सात्यकिं तेन कर्मणा।
अर्जुनेन हतं पूर्वं यज्जघान कुरूद्वहम् ॥ ६१ ॥

पक्षवादांश्च सुबहून्प्रावदंस्तव सैनिकाः।
न वार्ष्णेयस्यापराधो भवितव्यं हि तत्तथा।
विहितो ह्यस्य धात्रैव मृत्यु सात्यकिराहवे ॥ ६२ ॥

सात्य०– न हन्तव्यो न हन्तव्य इति यन्मां प्रभाषत।
धर्मवादैरधर्मिष्ठा धर्मकञ्चुकमास्थिता॰ ॥ ६३ ॥

यदा बालः सुभद्रायाः सुतः शस्त्रविनाकृत॰।
युष्माभिर्निहतो युद्धे तदा धर्मः क वो गतः ॥ ६४ ॥

मया त्वेतत्प्रतिज्ञातं क्षेपे कस्मिंश्चिदेव हि।
यो मां निष्पिष्य संग्रामे जीवन्हन्यात्पदा रुषा।
स मे वध्यो भवेच्छत्रुर्यद्यपि स्यान्मुनिव्रतः॥ ६५॥

यत्तु पार्थेन मां दृष्ट्वा प्रतिज्ञामभिरक्षता।
सखड्गोऽस्य हृतो बाहुरेतेनैवास्मि वञ्चित॥ ६६॥

अपि चायं पुरा गीतः श्लोको वाल्मीकिना भुवि॥ ६७॥

न हन्तव्याः स्त्रिय इति यद्ब्रवीषि प्लवङ्गम।
सर्वकालं मनुष्येण व्यवसायवता सदा।
पीडाकरममित्राणा यत्स्यात्कर्तव्यमेव तत्॥ ६८॥

एवमुक्ते महाराज सर्वे कौरवपुङ्गवाः।
न स्म किञ्चिदभाषन्त मनसा समपूजयन्॥ ६९॥

(अ.१४४) अजितो द्रोणराधेयविकर्णकृतवर्मभिः।
धृत०- तीर्णः सैन्यार्णवं वीरः प्रतिश्रुत्य युधिष्ठिरे॥ १२७०॥

स कथं कौरवेयेण समरेष्वनिवारितः।
निगृह्य भूरिश्रवसा बलाद्भुवि निपातितः॥ ७१॥

सञ्जय०-यदोरभूदन्ववाये वसुदेवो महायशाः।
धनुष्यनवरः शूरः कार्तवीर्यसमो युधि॥ ७२॥

तद्वीर्यश्चापि तत्रैव कुले शिनिरभून्नृप॥ ७३॥

एतस्मिन्नेव काले तु देवकस्य महात्मनः।
दुहितुः स्वयंवरे राजन् सर्वक्षत्रसमागमे॥ ७४॥

तत्र वै देवकीं देवीं वसुदेवार्थमाशु वै।
निर्जित्य पार्थिवान्सर्वान् रथमारोपयच्छिनिः॥ ७५॥

तां दृष्ट्वा देवकीं शूरो रथस्थां पुरुषर्षभ।
नामृष्यत महातेजाः सोमदत्तः शिनेर्नृप॥ ७६॥

तयोर्युद्धमभूद्राजन्दिनार्धं चित्रमद्भुतम्।
बाहुयुद्धं सुबलिनोः प्रसक्तं पुरुषर्षभ॥ ७७॥

शिनिना सोमदत्तस्तु प्रसह्य भुवि पातित ।
असिमुद्यम्य केशेषु प्रगृह्य च पदा हत. ॥ ७८ ॥

मध्ये राजसहस्राणा प्रेक्षकाणा समन्ततः ।
कृपया च पुनस्तेन स जीवेति विसर्जित. ॥ ७९ ॥

तदवस्थ. कृतस्तेन सोमदत्तोऽथ मारिष ।
आसादयन्महादेवममर्षवशमास्थितः ॥ १२८० ॥

तस्य तुष्टो महादेवो वराणां वरद. प्रभु. ।
वरेण च्छन्दयामास स तु वव्रे वरं नृप. ॥ ८१ ॥

पुत्रमिच्छामि भगवन् यो निपात्य शिनेः सुतम् ।
मध्ये राजसहस्राणां पदा हन्याच्च संयुगे ॥ ८२ ॥

तस्य तद्वचनं श्रुत्वा सोमदत्तस्य पार्थिव ।
एवमस्त्विति तत्रोक्त्वा स देवोऽन्तरधीयत ॥ ८३ ॥

स तेन वरदानेन लब्धवान्भूरिदक्षिणम् ।
अपातयच्च समरे सौमदत्ति. शिने. सुतम् ॥ ८४ ॥
पश्यतां सर्वसैन्यानां पदा चैनमताडयत् ॥ ८५ ॥
एतत्ते कथितं राजन् यन्मां त्वं परिपृच्छसि ॥ ८६ ॥

## जयद्रथवधः

(अ.१४५) तदवस्थे हते तस्मिन् भूरिश्रवसि कौरवे ।
धृत०- यथा भूयोऽभवद्युद्धं तन्ममाचक्ष्व सञ्जय ॥ ८७ ॥

सञ्जय०-ततः कृष्णो महाबाहू रजतप्रतिमान् हयान् ।
हयज्ञश्चोदयामास जयद्रथवधं प्रति ॥ ८८ ॥
ततो दुर्योधनो राजा राधेय त्वरितोऽब्रवीत् ॥ ८९ ॥
सैन्धवे रक्ष्यमाणे तु सूर्यस्यास्तमनं प्रति ।
मिथ्याप्रतिज्ञ. कौन्तेयः प्रवेक्ष्यति हुताशनम् ॥ १२९० ॥
अनर्जुनायां त्र भुवि मुहूर्तमपि मानद ।
जीवितुं नोत्सहेरन् वै भ्रातरोऽस्य सहानुगा ॥ ९१ ॥

विनष्टे पाण्डवेयैश्च सशैलवनकाननाम्।
वसुन्धरामिमां कर्ण भोक्ष्यामो हतकण्टकाम् ॥ ९२ ॥

नूनमात्मविनाशाय पाण्डवेन किरीटिना।
प्रतिज्ञेय कृता कर्ण जयद्रथवधं प्रति ॥ ९३ ॥

कथं जीवति दुर्धर्षे त्वयि राधेय फाल्गुनः।
अनस्तंगत आदित्ये हन्यात् सैन्धवकं नृपम् ॥ ९४ ॥

स त्वं कर्ण मया सार्धं शूरैश्चान्यैर्महारथैः।
युध्यस्व यत्नमास्थाय परं पार्थेन संयुगे ॥ ९५ ॥

एवमुक्तस्तु राधेयस्तव पुत्रेण मारिष।
दुर्योधनमिदं वाक्यं प्रत्युवाच कुरूत्तमम् ॥ ९६ ॥

दृढलक्ष्येण वीरेण भीमसेनेन धन्विना।
भृशं भिन्नतनुः सङ्ख्ये शरजालैरनेकशः।
स्थातव्यमिति तिष्ठामि रणे संप्रति मानद ॥ ९७ ॥

नाङ्गमिङ्गति किञ्चिन्मे सन्तप्तस्य महेषुभिः।
योत्स्यामि तु यथाशक्त्या त्वदर्थं जीवितं मम ॥ ९८ ॥

यत्तु भक्तिमता कार्यं सततं हितकाङ्क्षिणा।
तत् करिष्यामि कौरव्य जयो दैवे प्रतिष्ठितः ॥ ९९ ॥

कर्णकौरवयोरेवं रणे सम्भाषमाणयोः।
अर्जुनो निशितैर्बाणैर्जघान तव वाहिनीम् ॥ १३०० ॥

हतभूयिष्ठयोधं तत्कृत्वा तव बलं बली।
आससाद दुराधर्षः सैन्धवं सत्यविक्रमः ॥ १ ॥

तं कर्णः संयुगे राजन् प्रत्यवारयदाशुगैः ॥ २ ॥

ततो दुर्योधनो राजंस्तावकानभ्यभाषत।
यत्नाद्रक्षत राधेयं नाहत्वा समरेऽर्जुनम्।
निवर्तिष्यति राधेय इति मामुक्तवान् वृषः ॥ ३ ॥

एतस्मिन्नन्तरे राजन्दृष्ट्वा कर्णस्य विक्रमम्।
आकर्णमुक्तैरिषुभिः कर्णस्य चतुरो हयान्।
अनयत्प्रेतलोकाय चतुर्भिः श्वेतवाहनः॥ ४॥

सारथिं चास्य भल्लेन रथनीडादपातयत्।
छादयामास स शरैस्तव पुत्रस्य पश्यतः॥ ५॥

संछाद्यमानः समरे हताश्वो हतसारथिः।
मोहितः शरजालेन कर्तव्यं नाभ्यपद्यत॥ ६॥

(अ.१४६) एवं तत्तव राजेन्द्र चतुरङ्गबलं तदा।
व्याकुलीकृत्य कौन्तेयो जयद्रथमुपाद्रवत्॥ ७॥

एतस्मिन्नेव काले तु द्रुतं गच्छति भास्करे।
अब्रवीत्पाण्डवं राजंस्त्वरमाणो जनार्दनः॥ ८॥

एष मध्ये कृतः षड्भिः पार्थ वीरैर्महारथैः।
जीवितेप्सुर्महाबाहो भीतस्तिष्ठति सैन्धवः॥ ९॥

एतानिर्जित्य रणे षड्रथान् पुरुषर्षभ।
न शक्यः सैन्धवो हन्तुं यतो निर्व्याजमर्जुन।
योगमत्र विधास्यामि सूर्यस्यावरणं प्रति॥ १३१०॥

एवमस्त्विति बीभत्सुः केशवं प्रत्यभाषत॥ ११॥

ततोऽसृजत्तमः कृष्णः सूर्यस्यावरणं प्रति।
योगी योगेन संयुक्तो योगिनामीश्वरो हरिः॥ १२॥

सृष्टे तमसि कृष्णेन गतोऽस्तमिति भास्करः।
त्वदीया जहृषुर्योधाः पार्थनाशान्नराधिप॥ १३॥

ते प्रहृष्टा रणे राजन्नापश्यन्सैनिका रविम्।
उन्नाम्य वक्त्राणि तदा स च राजा जयद्रथः॥ १४॥

वीक्षमाणे ततस्तस्मिन् सिन्धुराजे दिवाकरम्।
पुनरेवाब्रवीत्कृष्णो धनञ्जयमिदं वचः॥ १५॥

पश्य सिन्धुपतिं वीरं प्रेक्षमाणं दिवाकरम् ।
छिन्धि मूर्धानमस्याशु कुरु साफल्यमात्मनः ॥ १६ ॥
शृणुष्वैतच्च वाक्यं मे जयद्रथवधं प्रति ।
वृद्धक्षत्रः सैन्धवस्य पिता जगति विश्रुतः ॥ १७ ॥
स कालेनेह महता सैन्धवं प्राप्तवान् सुतम् ।
जयद्रथममित्रघ्नं वागुवाचाशरीरिणी ।
नृपमन्तर्हिता वाणी मेघदुन्दुभिनिःस्वना ॥ १८ ॥
तवात्मजो मनुष्येन्द्र कुलशीलदमादिभिः ।
गुणैर्भविष्यति विभो सदृशो वंशयोर्द्वयोः ॥ १९ ॥
किं त्वस्य युध्यमानस्य सङ्ग्रामे क्षत्रियर्षभः ।
शिरश्छेत्स्यति संक्रुद्धः शत्रुश्चालक्षितो भुवि ॥ १३२० ॥
एतच्छ्रुत्वा सिन्धुराजो ध्यात्वा चिरमरिंदमः ।
ज्ञातीन्सर्वानुवाचेदं पुत्रस्नेहाभिचोदितः ॥ २१ ॥
संग्रामे युध्यमानस्य वहतो महतीं धुरम् ।
धरण्यां मम पुत्रस्य पातयिष्यति यः शिरः ॥ २२ ॥
तस्यापि शतधा मूर्धा फलिष्यति न संशयः ॥ २३ ॥
एवमुक्त्वा ततो राज्ये स्थापयित्वा जयद्रथम् ।
वृद्धक्षत्रो वनं यातस्तपश्चोग्रं समास्थितः ॥ २४ ॥
सोऽयं तप्यति तेजस्वी तपो घोरं दुरासदम् ।
समन्तपञ्चकादस्माद्बहिर्वानरकेतन ॥ २५ ॥
तस्माज्जयद्रथस्य त्वं शिरश्छित्त्वा महामृधे ।
उत्सङ्गे पातयस्वास्य वृद्धक्षत्रस्य भारत ॥ २६ ॥
अथ त्वमस्य मूर्धानं पातयिष्यसि भूतले ।
तवापि शतधा मूर्धा फलिष्यति न संशयः ॥ २७ ॥
एतच्छ्रुत्वा तु वचनं सृक्किणी परिसंलिहन् ।
इन्द्राशनिसमस्पर्शं दिव्यमन्त्राभिमन्त्रितम् ॥ २८ ॥

सर्वभारसहं शश्वद्गन्धमाल्यार्चितं शरम् ।
विससर्जार्जुनस्तूर्णं सैन्धवस्य वधे धृतम् ॥ २९ ॥

स तु गाण्डीवनिर्मुक्तः शरः श्येन इवाशुगः ।
छित्त्वा शिरः सिन्धुपतेरुत्पपात विहायसम् ॥ १३३० ॥

ततः सुमहदाश्चर्यं तत्रापश्याम भारत ।
समन्तपञ्चकाद्बाह्यं शिरो यद्व्यहरत्ततः ॥ ३१ ॥

एतस्मिन्नेव काले तु वृद्धक्षत्रो महीपतिः ।
सन्ध्यामुपास्ते तेजस्वी सम्बन्धी तव मारिष ॥ ३२ ॥

उपासीनस्य तस्याथ कृष्णकेशं सकुण्डलम् ।
सिन्धुराजस्य मूर्धानमुत्सङ्गे समपातयत् ॥ ३३ ॥

कृतजप्यस्य तस्याथ वृद्धक्षत्रस्य भारत ।
प्रोत्तिष्ठतस्तत्सहसा शिरोऽगच्छद्धरातलम् ॥ ३४ ॥

ततस्तस्य नरेन्द्रस्य पुत्रमूर्धनि भूतले ।
गते तस्यापि शतधा मूर्धाऽगच्छदरिन्दम ॥ ३५ ॥

ततो विनिहते राजन् सिन्धुराजे किरीटिना ।
तमस्तद्वासुदेवेन संहृतं भरतर्षभ ॥ ३६ ॥

पश्चाज्ज्ञातं महीपाल तव पुत्रैः सहानुगैः ।
वासुदेवप्रयुक्तेयं मायेति नृपसत्तम ॥ ३७ ॥

एवं स निहतो राजन् पार्थेनामिततेजसा ।
अक्षौहिणीरष्ट हत्वा जामाता तव सैन्धवः ॥ ३८ ॥

ततो जयद्रथे राजन् हते पार्थेन केशवः ।
दध्मौ शङ्खं महाबाहुरर्जुनश्च परंतपः ॥ ३९ ॥

भीमश्च वृष्णिसिंहश्च युधामन्युश्च भारत ।
उत्तमौजाश्च विक्रांतः शंखान्दध्मुः पृथक्पृथक् ॥ १३४० ॥

श्रुत्वा महान्तं तं शब्दं धर्मराजो युधिष्ठिरः ।
सैन्धवं निहतं मेने फाल्गुनेन महात्मना ॥ ४१ ॥

ततो वादित्रघोषेण स्वान्योधान्पर्यहर्षयत् ॥ ४२ ॥

(अ.१४७) सैन्धवं निहतं दृष्ट्वा रणे पार्थेन भारत ।
अमर्षवशमापन्नः कृपः शारद्वतस्ततः ।
महता शरवर्षेण पाण्डवं समवाकिरत् ॥ ४३ ॥

द्रौणिश्चाभ्यद्रवद्राजन् रथमास्थाय फाल्गुनम् ॥ ४४ ॥
तावेतौ रथिनां श्रेष्ठौ रथाभ्यां रथसत्तमौ ।
उभावुभयतस्तीक्ष्णैर्विशिखैरभ्यवर्षताम् ॥ ४५ ॥
सोऽजिघांसुर्गुरुं संख्ये गुरोस्तनयमेव च ।
चकाराचार्यक तत्र कुन्तीपुत्रो धनञ्जयः ॥ ४६ ॥

अस्त्रैरस्त्राणि संवार्य द्रौणेः शारद्वतस्य च ।
मन्दवेगानिषूंस्ताभ्यामाजिघांसुरवासृजत् ॥ ४७ ॥

ते चापि भृशमभ्यघ्नन्विशिखाः पार्थचोदिता ।
बहुत्वात्तु परामार्तिं शराणां तावगच्छताम् ॥ ४८ ॥

अथ शारद्वतो राजन् कौन्तेयशरपीडितः ।
अवासीदद्रथोपस्थे मूर्च्छामभिजगाम ह ॥ ४९ ॥
विह्वलं तमभिज्ञाय भर्तारं शरपीडितम् ।
हतोऽयमिति च ज्ञात्वा सारथिस्तमपावहत् ॥ १३५० ॥
तस्मिन् भग्ने महाराज कृपे शारद्वते युधि ।
अश्वत्थामाप्यपायासीत्पाण्डवेयाद्रथान्तरम् ॥ ५१ ॥

दृष्ट्वा शारद्वतं पार्थो मूर्च्छितं शरपीडितम् ।
रथ एव महेष्वासः सकृपं पर्यदेवयत् ॥ ५२ ॥
ऋषिपुत्रो ममाचार्यो द्रोणस्य परमः सखा ।
एष शेते रथोपस्थे कृपो मद्बाणपीडितः ॥ ५३ ॥
उपाकृत्य तु वै विद्यामाचार्येभ्यो नरर्षभाः ।
प्रयच्छन्तीह ये कामान् देवत्वमुपयान्ति ते ॥ ५४ ॥

ये च विद्यामुपादाय गुरुभ्यः पुरुषाधमाः
घ्नन्ति तानेव दुर्वृत्तास्ते वै निरयगामिनः ॥ ५५ ॥

तदिदं नरकायाद्य कृतं कर्म मया ध्रुवम् ॥ ५६ ॥

नमस्तस्मै सुपूज्याय गौतमायापलायिने।
धिगस्तु मम वार्ष्णेय यदस्मै प्रहराम्यहम् ॥ ५७ ॥

तथा विलपमाने तु सव्यसाचिनि तं प्रति।
सैन्धवं निहतं दृष्ट्वा राधेयः समुपाद्रवत् ॥ ५८ ॥

तमापतन्तं राधेयमर्जुनस्य रथं प्रति।
पाञ्चाल्यौ सात्यकिश्चैव सहसा समुपाद्रवन् ॥ ५९ ॥

उपायान्तं तु राधेयं दृष्ट्वा पार्थो महारथः।
प्रहसन्देवकीपुत्रमिदं वचनमब्रवीत् ॥ १३६० ॥

एष प्रयात्याधिरथिः सात्यकेः स्यन्दनं प्रति।
न मृष्यति हतं नूनं भूरिश्रवसमाहवे ॥ ६१ ॥

यत्र यात्येष तत्र त्वं चोदयाश्वान् जनार्दन।
न सौमदत्तिपदवीं गमयेत्सात्यकिं वृषः ॥ ६२ ॥

एवमुक्तो महाबाहुः केशवः सव्यसाचिना।
प्रत्युवाच महातेजाः कालयुक्तमिदं वचः ॥ ६३ ॥

अलमेष महाबाहुः कर्णायैकोऽपि पाण्डव।
किं पुनर्द्रौपदेयाभ्यां सहितः सात्वतर्षभः ॥ ६४ ॥

न च तावत्क्षमः पार्थ तव कर्णेन सङ्गरः।
प्रज्वलन्ती महोल्केव तिष्ठत्यस्य हि वासवी ॥ ६५ ॥

त्वदर्थं पूज्यमानैषा रक्ष्यते परवीरहन्।
अतः कर्णः प्रयात्वत्र सात्वतस्य यथातथा ॥ ६६ ॥

अहं ज्ञास्यामि कौन्तेय कालमस्य दुरात्मनः।
यत्रैनं विशिखैस्तीक्ष्णैः पातयिष्यसि भूतले ॥ ६७ ॥

सञ्जय०-सात्यकिं विरथं दृष्ट्वा कर्णं चाभ्युद्यतं रणे।
दध्मौ शङ्खं महानादमार्षभेणाथ माधवः ॥ ६८ ॥

दारुकोऽवेत्य संदेशं श्रुत्वा शङ्खस्य च स्वनम्।
रथमन्वानयत्तस्मै सुपर्णोच्छ्रितकेतनम् ॥ ६९ ॥

स केशवस्यानुमते रथं दारुकसंयुतम्।
आरुरोह शिनेः पौत्रो ज्वलनादित्यसन्निभम् ॥ १३७० ॥

कामगैः शैब्यसुग्रीवमेघपुष्पबलाहकैः।
युक्तं समारुह्य च तं विमानप्रतिमं रथम्।
अभ्यद्रवत राधेयं प्रवपन्सायकान्बहून् ॥ ७१ ॥

चक्ररक्षावपि तदा युधामन्यूत्तमौजसौ।
धनञ्जयरथं हित्वा राधेयं प्रत्युदीयतुः ॥ ७२ ॥

राधेयोऽपि महाराज शरवर्षं समुत्सृजन्।
अभ्यद्रवत्सुसंक्रुद्धो रणे शैनेयमच्युतम् ॥ ७३ ॥

तत कर्णं शिनेः पौत्रः सर्वपारसवैः शरैः।
बिभेद सर्वगात्रेषु पुन पुनररिन्दम ॥ ७४ ॥

सारथिं चास्य भल्लेन रथनीडादपातयत्।
अश्वांश्च चतुर श्वेतान्निजघान शितैः शरैः ॥ ७५ ॥

छित्त्वा ध्वजं रथं चैव शतधा पुरुषर्षभ।
चकार विरथं कर्णं तव पुत्रस्य पश्यत ॥ ७६ ॥

कर्णोऽपि विरथो राजन् सात्वतेन कृत शरैः।
दुर्योधनरथं तूर्णमारुरोह विनिःश्वसन् ॥ ७७ ॥

तथा तु विरथं कर्णं पुत्राश्च तव पार्थिव।
दुःशासनमुखान् वीरान्नावधीत् सात्यकिर्वशी ॥ ७८ ॥

रक्षन् प्रतिज्ञां भीमेन पार्थेन च पुरा कृताम्।
विरथान्विह्वलांश्चक्रे न तु प्राणैर्व्ययोजयत् ॥ ७९ ॥

(अ.१४८) तथागतेषु शूरेषु तेषां मम च सञ्जय।
धृतराष्ट्र०-किं वै भीमस्तदाऽकार्षीत्तन्ममाचक्ष्व सञ्जय ॥ १३८० ॥
सञ्जय०-विरथो भीमसेनो वै कर्णवाक्शल्यपीडितः।
अमर्षवशमापन्नः फाल्गुनं वाक्यमब्रवीत् ॥ ८१ ॥
पुनः पुनस्तूबरक मूढ औदरिकेति च।
अकृतास्त्रक मा योत्सीर्बाल संग्रामकातर ॥ ८२ ॥
इति मामब्रवीत्कर्णः पश्यतस्ते धनञ्जय।
एवं वक्ता च मे वध्यस्तेन चोक्तोऽस्मि भारत ॥ ८३ ॥
एतद्व्रतं महाबाहो त्वया सह कृतं मया।
तथैतन्मम कौन्तेय यथा तव न संशयः ॥ ८४ ॥
तद्वधाय नरश्रेष्ठ स्मरैतद्वचनं मम।
यथा भवति तत्सत्यं तथा कुरु धनञ्जय ॥ ८५ ॥
तच्छ्रुत्वा वचनं तस्य भीमस्यामितविक्रमः।
ततोऽर्जुनोऽब्रवीत्कर्णं किंचिदभ्येत्य संयुगे ॥ ८६ ॥
कर्ण कर्ण वृथादृष्टे सूतपुत्रात्मसंस्तुत।
अधर्मबुद्धे शृणु मे यत्त्वां वक्ष्यामि साम्प्रतम् ॥ ८७ ॥
द्विविधं कर्म शूराणां युद्धे जयपराजयौ।
तौ चाप्यनित्यौ राधेय वासवस्यापि युध्यत ॥ ८८ ॥
मुमूर्षुर्युयुधानेन विरथो विकलेन्द्रियः।
मद्वध्यस्त्वमिति ज्ञात्वा जित्वा जीवन्विसर्जितः ॥ ८९ ॥
यदृच्छया रणे भीमं युध्यमानं महाबलम्।
कथञ्चिद्विरथं कृत्वा यत्त्वं रूक्षमभाषथाः।
अधर्मस्त्वेष सुमहाननार्यचरितं च तत् ॥ १३९० ॥
नारिं जित्वाऽतिकत्थन्ते न च जल्पन्ति दुर्वचः।
न च कञ्चन निन्दन्ति सन्तः शूरा नरर्षभाः ॥ ९१ ॥
त्वं तु प्राकृतविज्ञानस्तत्तद्वदसि सूतज।
बह्वबद्धमकर्ण्यं च चापलादपरीक्षितम् ॥ ९२ ॥

युध्यमानं पराक्रान्तं शूरमार्यव्रते रतम्।
यदवोचोऽप्रियं भीमं नैतत्सत्यं वचस्तव ॥ ९३ ॥

पश्यतां सर्वसैन्यानां केशवस्य ममैव च।
विरथो भीमसेनेन कृतोऽसि बहुशो रणे ॥ ९४ ॥

न च त्वां परुषं किञ्चिदुक्तवान्पाण्डुनन्दनः ॥ ९५ ॥
यस्मात्तु बहुरूक्षं च श्रावितस्ते वृकोदरः।
परोक्षं यच्च सौभद्रो युष्माभिर्निहतो मम।
तस्मादस्यावलेपस्य सद्य फलमवाप्नुहि ॥ ९६ ॥

त्वया तस्य धनुश्छिन्नमात्मनाशाय दुर्मते।
तस्माद्वध्योऽसि मे मूढ सभृत्य-सुत-बान्धव ॥ ९७ ॥
कुरु त्वं सर्वकृत्यानि महत्ते भयमागतम्।
हन्तास्मि वृषसेनं ते प्रेक्षमाणस्य संयुगे ॥ ९८ ॥

त्वां च मूढाकृतप्रज्ञमतिमानिनमाहवे।
दृष्ट्वा दुर्योधनो मन्दो भृशं तप्स्यति पातितम् ॥ ९९ ॥
अर्जुनेन प्रतिज्ञाते वधे कर्णसुतस्य तु।
महान् सुतुमुलः शब्दो बभूव रथिनां तदा ॥ १४०० ॥

तस्मिन्नाकुलसंग्रामे वर्तमाने महाभये।
मन्दरश्मिः सहस्रांशुरस्तं गिरिमुपाद्रवत् ॥ १ ॥

ततो राजन् हृषीकेशः संग्रामशिरसि स्थितम्।
तीर्णप्रतिज्ञं बीभत्सुं परिष्वज्यैनमब्रवीत् ॥ २ ॥
दिष्ट्या विनिहत पापो वृद्धक्षत्रः सहात्मजः ॥ ३ ॥
धार्तराष्ट्रबलं प्राप्य देवसेनापि भारत।
सीदेत समरे जिष्णो नात्र कार्या विचारणा ॥ ४ ॥

न तं पश्यामि लोकेषु चिन्तयन्पुरुषं क्वचित्।
त्वदृते पुरुषव्याघ्र य एतद्योधयेद्बलम् ॥ ५ ॥

एवमेव हते कर्णे सानुबन्धे दुरात्मनि ।
वर्धयिष्यामि भूयस्त्वां विजितारिं हतद्विषम् ॥ ६ ॥

तमर्जुनः प्रत्युवाच प्रसादात्तव माधव ।
प्रतिज्ञेयं मया तीर्णा विबुधैरपि दुस्तरा ॥ ७ ॥

अनाश्चर्यो जयस्तेषां येषां नाथोऽसि केशव ।
त्वत्प्रसादान्महीं कृत्स्नां संप्राप्स्यति युधिष्ठिरः ॥ ८ ॥

तव प्रभावो वार्ष्णेय तवैव विजयः प्रभो ।
वर्धनीयास्तव वयं सदैव मधुसूदन ॥ ९ ॥

एवमुक्तस्ततः कृष्णः शनकैर्वाहयन्हयान् ।
दर्शयामास पार्थाय क्रूरमायोधनं महत् ॥ १४१० ॥

(अ.१४९)ततो राजानमभ्येत्य धर्मपुत्रं युधिष्ठिरम् ।
ववन्दे स प्रहृष्टात्मा हते पार्थेन सैन्धवे ॥ ११ ॥

दिष्ट्या वर्धसि राजेन्द्र हतशत्रुर्नरोत्तम ।
दिष्ट्या निस्तीर्णवांश्चैव प्रतिज्ञामनुजस्तव ॥ १२ ॥

स त्वेवमुक्त कृष्णेन हृष्टः परपुरंजयः ।
ततो युधिष्ठिरो राजा रथादाप्लुत्य भारत ।
पर्यष्वजत्तदा कृष्णावानन्दाश्रुपरिप्लुत· ॥ १३ ॥

प्रमृज्य वदनं शुभ्रं पुण्डरीकसमप्रभम् ।
अब्रवीद्वासुदेवं च पाण्डवं च धनञ्जयम् ॥ १४ ॥

प्रियमेतदुपश्रुत्य त्वत्तः पुष्करलोचन ।
नान्तं गच्छामि हर्षस्य तितीर्षुरुदधेरिव ॥ १५ ॥

अत्यद्भुतमिदं कृष्ण कृतं पार्थेन धीमता ॥ १६ ॥
दिष्ट्या पश्यामि संग्रामे तीर्णभारौ महारथौ ।
दिष्ट्या विनिहतः पाप· सैन्धवः पुरुषाधमः ॥ १७ ॥

न तेषां दुष्कृतं किञ्चित् त्रिषु लोकेषु विद्यते ।
सर्वलोकगुरुर्येषां त्वं नाथो मधुसूदन ॥ १८ ॥

त्वत्प्रसादाद्धि गोविन्द वयं जेष्यामहे रिपून् ॥ १९ ॥
असम्भाव्यमिदं कर्म देवैरपि जनार्दन ।
त्वद्बुद्धिबलवीर्येण कृतवानेष फाल्गुनः ॥ १४२० ॥
इत्येवं धर्मराजेन हरिरुक्तो महायशाः ।
अनुरूपमिदं वाक्यं प्रत्युवाच जनार्दनः ॥ २१ ॥
भवता तपसोग्रेण धर्मेण परमेण च ।
साधुत्वादार्जवाच्चैव हतः पापो जयद्रथः ॥ २२ ॥
अयं च पुरुषव्याघ्र त्वदनुध्यानसंवृतः ।
हत्वा योधसहस्राणि न्यहन् जिष्णुर्जयद्रथम् ॥ २३ ॥
ततो धर्मसुतो जिष्णु परिष्वज्य विशांपते ।
प्रमृज्य वदनं तस्य पर्याश्वासयत प्रभु ॥ २४ ॥
अतीव सुमहत्कर्म कृतवानसि फाल्गुन ।
असह्यं चाविषह्यं च देवैरपि सवासवै ॥ २५ ॥
दिष्ट्या निस्तीर्णभारोऽसि हतारिश्चासि शत्रुहन् ।
दिष्ट्या सत्या प्रतिज्ञेयं कृता हत्वा जयद्रथम् ॥ २६ ॥
एवमुक्त्वा गुडाकेशं धर्मराजो महायशाः ।
पस्पर्श पुण्यगन्धेन पृष्ठे हस्तेन पार्थिवः ॥ २७ ॥
ततो भीमो महाबाहुः सात्यकिश्च महारथः ।
अभिवाद्य गुरुं ज्येष्ठं मार्गणैः क्षतविक्षतौ ।
क्षितावास्तां महेष्वासौ पाञ्चाल्यपरिवारितौ ॥ २८ ॥
तौ दृष्ट्वा मुदितौ वीरौ प्राञ्जली चाग्रतः स्थितौ ।
अभ्यनन्दत कौन्तेयस्तावुभौ भीमसात्यकी ॥ २९ ॥
दिष्ट्या पश्यामि वां शूरौ विमुक्तौ सैन्यसागरात् ।
मम वाक्यकरौ वीरौ मम गौरवयन्त्रितौ ।
सैन्यार्णवं समुत्तीर्णौ दिष्ट्या पश्यामि वामहम् ॥ १४३० ॥
इत्युक्त्वा पाण्डवो राजन् युयुधानवृकोदरौ ।
सस्वजे पुरुषव्याघ्रौ हर्षाद्बाष्पं मुमोच ह ॥ ३१ ॥

## चतुर्दशदिने रात्रियुद्धारम्भः

(अ.१५०) सैन्धवे निहते राजन् पुत्रस्तव सुयोधनः।
अश्रुपूर्णमुखो दीनो निरुत्साहो द्विषज्जये ॥ ३२ ॥

स विवर्णः कृशो दीनो बाष्पविप्लुतलोचनः।
अमन्यतार्जुनसमो न योद्धा भुवि विद्यते ॥ ३३ ॥

यस्य वीर्यं समाश्रित्य शमं याचन्तमच्युतम्।
तृणवत्तमहं मन्ये स कर्णो निर्जितो युधि ॥ ३४ ॥

एवं क्लान्तमना राजन्नुपायाद्द्रोणमीक्षितुम्।
आगस्कृत्सर्वलोकस्य पुत्रस्ते भरतर्षभ ॥ ३५ ॥

दुर्यो०- पश्य मूर्धाभिषिक्तानामाचार्य कदनं महत्।
कृत्वा प्रमुखतः शूरं भीष्मं मम पितामहम् ॥ ३६ ॥

तं निहत्य प्रलुब्धोऽयं शिखण्डी पूर्णमानसः।
पाञ्चाल्यैः सहितः सर्वैः सेनाग्रमभिवर्तते ॥ ३७ ॥

अपरश्चापि दुर्धर्षः शिष्यस्ते सव्यसाचिना।
अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः ॥ ३८ ॥

भवानुपेक्षां कुरुते शिष्यत्वादर्जुनस्य हि।
अतो विनिहताः सर्वे येऽस्मज्जयचिकीर्षवः ॥ ३९ ॥

सोऽहमद्य गमिष्यामि यत्र ते पुरुषर्षभाः।
हता मदर्थे संग्रामे युद्ध्यमानाः किरीटिना ॥ १४४० ॥

न हि मे जीवितेनार्थस्तानृते पुरुषर्षभान्।
आचार्यः पाण्डुपुत्राणामनुजानातु नो भवान् ॥ ४१ ॥

(अ.१५१) द्रोणस्तु तद्वचः श्रुत्वा पुत्रस्य तव दुर्मनाः।
मुहूर्तमिव तद्ध्यात्वा भृशमार्तोऽभ्यभाषत ॥ ४२ ॥

दुर्योधन किमेवं मां वाक्शरैरपि कृन्तसि।
अजय्यं सततं सङ्ख्ये ब्रुवाणं सव्यसाचिनम् ॥ ४३ ॥

एतेनैवार्जुनं ज्ञातुमलं कौरव संयुगे।
यच्छिखण्डयवधीद्भीष्मं पाल्यमानः किरीटिना ॥ ४४ ॥

अवध्यं निहतं दृष्ट्वा संयुगे देवदानवैः।
तदैवाश्वासिषमहं नेयमस्तीति भारती ॥ ४५ ॥

यच्च नः प्रेक्षमाणानां कृष्णामानाय्य तत्सभाम्।
अनर्हन्तीं कुले जातां सर्वधर्मानुचारिणीम् ॥ ४६ ॥

तस्याधर्मस्य गान्धारे फलं प्राप्तमिदं महत्।
नो चेत्पापं परे लोके त्वमर्च्छेथास्ततोऽधिकम् ॥ ४७ ॥

पुत्राणामिव चैतेषां धर्ममाचरतां सदा।
द्रुह्येत्को नु नरो लोके मदन्यो ब्राह्मणब्रुवः ॥ ४८ ॥

पाण्डवानामयं कोपस्त्वया शकुनिना सह।
आहृतो धृतराष्ट्रस्य संमते कुरुसंसदि ॥ ४९ ॥

दुःशासनेन संयुक्तः कर्णेन परिवर्धितः।
क्षत्तुर्वाक्यमनादृत्य त्वयाऽभ्यस्तः पुनःपुनः ॥ १४५० ॥

कथं त्वयि च कर्णे च कृपे शल्ये च जीवति।
अश्वत्थाम्नि च कौरव्य निधनं सैन्धवोऽगमत् ॥ ५१ ॥

मय्येव हि विशेषेण तथा दुर्योधन त्वयि।
आशंसत परित्राणमर्जुनात्स महीपतिः ॥ ५२ ॥

ततस्तस्मिन्परित्राणमलब्धवति फाल्गुनात्।
न किञ्चिदनुपश्यामि जीवितस्थानमात्मनः ॥ ५३ ॥

मज्जन्तमिव चात्मानं धृष्टद्युम्नस्य किल्बिषे।
पश्याम्यहत्वा पञ्चालान्सह तेन शिखण्डिना ॥ ५४ ॥

तन्मां किमभितप्यन्तं वाक्शरैरेव कृन्तसि।
अशक्तः सिन्धुराजस्य भूत्वा त्राणाय भारत ॥ ५५ ॥

इमानि पाण्डवानां च सृञ्जयानां च भारत।
अनीकान्याद्रवन्ते मां सहितान्यद्य भारत ॥ ५६ ॥

नाहत्वा सर्वपञ्चालान्कवचस्य विमोक्षणम् ।
कर्ताऽस्मि समरे कर्म धार्तराष्ट्र हितं तव ॥ ५७ ॥

राजन् ब्रूयाः सुतं मे त्वमश्वत्थामानमाहवे ।
न सोमकाः प्रमोक्तव्या जीवितं परिरक्षता ॥ ५८ ॥

यच्च पित्राऽनुशिष्टोऽसि तद्वचः परिपालय ।
आनृशंस्ये दमे सत्ये चार्जवे च स्थिरो भव ॥ ५९ ॥

धर्मार्थकामकुशलो धर्मार्थावप्यपीडयन् ।
धर्मप्रधानकार्याणि कुर्याश्चेति पुनः पुन. ॥ १४६० ॥

चक्षुर्मनोभ्यां सन्तोष्या विप्रा. पूज्याश्च शक्तितः ।
न चैषां विप्रियं कार्यं ते हि वह्निशिखोपमा ॥ ६१ ॥

एष त्वहमनीकानि प्रविशाम्यरिसूदन ।
रणाय महते राजंस्त्वया वाक्शरपीडित. ॥ ६२ ॥

त्वं च दुर्योधन बलं यदि शक्तोऽसि पालय ।
रात्रावपि च योत्स्यन्ते संरब्धा. कुरुसृञ्जयाः ॥ ६३ ॥

एवमुक्त्वा ततः प्रायाद्द्रोण. पाण्डवसृञ्जयान् ।
मुष्णन् क्षत्रियतेजांसि नक्षत्राणामिवांशुमान् ॥ ६४ ॥

(अ.१५२) ततो दुर्योधनो राजा द्रोणेनैवं प्रचोदित. ।
अमर्षवशमापन्नो युद्धायैव मनो दधे ॥ ६५ ॥

अब्रवीच्च तदा कर्णं पुत्रो दुर्योधनस्तव ।
पश्य कृष्णसहायेन पाण्डवेन किरीटिना ॥ ६६ ॥

आचार्यविहितं व्यूहं भित्त्वा देवैः सुदुर्भिदम् ।
मिषतां योधमुख्यानां सैन्धवो विनिपातित. ॥ ६७ ॥

पश्य राधेय पृथ्वीशाः पृथिव्यां प्रवरा युधि ।
पार्थेनैकेन निहताः सिंहेनेवेतरे मृगा ॥ ६८ ॥

अल्पावशेषं सैन्यं मे कृतं शक्रात्मजेन ह ॥ ६९ ॥

कथं नियच्छमानस्य द्रोणस्य युधि फाल्गुनः।
भिन्द्यात्सुदुर्भिदं व्यूहं यतमानोऽपि संयुगे॥ १४७०॥

दयित. फाल्गुनो नित्यमाचार्यस्य महात्मनः।
ततोऽस्य दत्तवान्द्वारमयुद्धेनैव शत्रुहन्॥ ७१॥

अभयं सिन्धुराजाय दत्वा द्रोण. परंतपः।
प्रादात्किरीटिने द्वारं पश्य निर्गुणतां मयि॥ ७२॥

यद्यदास्यदनुज्ञां वै पूर्वमेव गृहान्प्रति।
प्रस्थातुं सिन्धुराजस्य नाभविष्यज्जनक्षयः॥ ७३॥

अद्य मे भ्रातरः क्षीणाश्चित्रसेनादयो रणे।
भीमसेनं समासाद्य पश्यतां नो दुरात्मनाम्॥ ७४॥

कर्ण०– आचार्यं मा विगर्हस्व शक्त्याऽसौ युद्ध्यते द्विजः।
यथाबलं यथोत्साहं त्यक्त्वा जीवितमात्मनः॥ ७५॥

कृती दक्षो युवा शूर कृतास्त्रो लघुविक्रमः।
यदर्जुनोऽभ्ययाद्द्रोणमुपपन्नं हि तस्य तत्॥ ७६॥

आचार्यः स्थविरो राजन् शीघ्रयाने तथाऽक्षमः।
बाहुव्यायामचेष्टायामशक्तस्तु नराधिप॥ ७७॥

तेनैवमभ्यतिक्रान्त. श्वेताश्वः कृष्णसारथिः।
तस्य दोषं न पश्यामि द्रोणस्यानेन हेतुना॥ ७८॥

दैवादिष्टोऽन्यथाभावो न मन्ये विद्यते क्वचित्॥ ७९॥

यतो नो युध्यमानानां परं शक्त्या सुयोधन।
सैन्धवो निहतो युद्धे दैवमत्र परं स्मृतम्॥ १४८०॥

दैवोपसृष्ट. पुरुषो यत्कर्म कुरुते क्वचित्।
कृतं कृतं हि तत्कर्म दैवेन विनिपात्यते॥ ८१॥

यत्कर्तव्यं मनुष्येण व्यवसायवता सदा।
तत्कार्यमविशङ्केन सिद्धिर्दैवे प्रतिष्ठिता॥ ८२॥

निकृत्या वञ्चिताः पार्था विषयोगैश्च भारत।
दग्धा जतुगृहे चापि द्यूतेन च पराजिताः ॥ ८३ ॥

राजनीतिं व्यपाश्रित्य प्रहिताश्चैव काननम्।
यत्नेन च कृतं तत्तद्दैवेन विनिपातितम् ॥ ८४ ॥

युध्यस्व यत्नमास्थाय दैवं कृत्वा निरर्थकम्।
यततस्तव तेषा च दैवं मार्गेण यास्यति ॥ ८५ ॥

न तेषां मतिपूर्वं हि सुकृतं दृश्यते क्वचित्।
दुष्कृतं तव वा वीर बुद्ध्या हीनं कुरूद्वह ॥ ८६ ॥

दैवं प्रमाणं सर्वस्य सुकृतस्येतरस्य वा।
अनन्यकर्म दैवं हि जागर्ति स्वपतामपि ॥ ८७ ॥

तैरल्पैर्बहवो यूयं क्षयं नीताः प्रहारिणः।
शङ्के दैवस्य तत्कर्म पौरुषं येन नाशितम् ॥ ८८ ॥

एवं सम्भाषमाणानां बहु तत्तज्जनाधिप।
पाण्डवानामनीकानि समदृश्यन्त संयुगे ॥ ८९ ॥

ततः प्रववृते युद्धं व्यतिषक्तरथ-द्विपम्।
तावकानां परैः सार्धं राजन् दुर्मन्त्रिते तव ॥ १४९० ॥

(अ.१५३) पञ्चालाः कुरवश्चैव योधयन्तः परस्परम्।
यमराष्ट्राय महते परलोकाय दीक्षिताः ॥ ९१ ॥

तथा प्रयुध्यमानेषु पाण्डवेयेषु भारत।
दुर्योधनो महाराज व्यवागाहत तद्बलम् ॥ ९२ ॥

सैन्धवस्य वधेनैव भृशं दुःखसमन्वितः।
मर्तव्यमिति सञ्चिन्त्य प्राविशच्च द्विषद्बलम् ॥ ९३ ॥

यथा मध्यंदिने सूर्यं प्रतपन्तं गभस्तिभिः।
तथा तव सुतं मध्ये प्रतपन्तं शरार्चिभिः।
न शेकुर्भ्रातरं युद्धे पाण्डवाः समुदीक्षितुम् ॥ ९४ ॥

पुत्रेण नव सा सेना पाण्डवी मथिता रणे।
नलिनी द्विरदेनेव समन्तात्फुल्लपङ्कजा ॥ ९५ ॥

क्षीणतोयानिलार्काभ्यां हतत्विडिव पद्मिनी।
बभूव पाण्डवी सेना तव पुत्रस्य तेजसा ॥ ९६ ॥

ततो युधिष्ठिरो राजा तव पुत्रस्य मारिष।
शरं च सूर्यरश्म्याभमत्युग्रमनिवारणम्।
हा हतोऽसीति राजानमुक्त्वाऽमुञ्चद्युधिष्ठिरः ॥ ९७ ॥

स तेनाकर्णमुक्तेन विद्धो बाणेन कौरव ।
निषसाद रथोपस्थे भृशं सम्मूढचेतनः ॥ ९८ ॥

अथ द्रोणो द्रुतं तत्र प्रत्यदृश्यत संयुगे।
प्रत्युद्ययुस्तं त्वरिताः पञ्चाला युद्धदुर्मदाः ॥ ९९ ॥

(अ.१५४) तथेतरे नरव्याघ्राः पाण्डवानां महारथाः।
सहिताः संन्यवर्तन्त द्रोणमेव द्विजर्षभम् ॥ १५०० ॥

(अ.१५५) ततो द्रोणः केकयांश्च धृष्टद्युम्नस्य चात्मजान्।
संप्रैषयत्प्रेतलोकं सर्वानिषुभिराशुगैः ॥ १ ॥

प्रमथ्नन्तं तदा वीरान्भारद्वाजं महारथम्।
अभ्यवर्तत संक्रुद्धः शिबी राजा प्रतापवान् ॥ २ ॥

तस्य द्रोणो हयान्हत्वा सारथिं च महात्मनः।
अथास्य सशिरस्त्राणं शिरः कायादपाहरत् ॥ ३ ॥

(अ.१५७) ततो युधिष्ठिरः क्रुद्धस्तवानीकमशातयत्।
मिषतः कुंभयोनेस्तु पुत्राणां तव चानघ ॥ ४ ॥

सैन्यानि द्रावयन्तं तं द्रोणो दृष्ट्वा युधिष्ठिरम्।
चोदितस्तव पुत्रेण सायकैरभ्यवाकिरत् ॥ ५ ॥

सत्यां चिकीर्षमाणस्तु प्रतिज्ञां कुम्भसम्भवः।
युधिष्ठिरवधं प्रेप्सुर्ब्राह्ममस्त्रमुदैरयत् ॥ ६ ॥

ब्रह्मास्त्रमुद्यतं दृष्ट्वा कुन्तीपुत्रो युधिष्ठिरः।
ब्रह्मास्त्रेणैव राजेन्द्र तदस्त्रं प्रत्यवारयत् ॥ ७ ॥

ततः प्रमुच्य कौन्तेयं द्रोणो द्रुपदवाहिनीम्।
व्यधमत्क्रोधताम्राक्षो वायव्यास्त्रेण भारत ॥ ८ ॥

तत· किरीटी भीमश्च सहसा संन्यवर्तताम्।
महद्भ्यां रथवंशाभ्या परिगृह्य बल तदा ॥ ९ ॥

भारद्वाजं शरौघाभ्यां महद्भ्यामभ्यवर्षताम् ॥ १५१० ॥

ततः सा भारती सेना वध्यमाना किरीटिना।
तमसा निद्रया चैव पुनरेव व्यदीर्यत ॥ ११ ॥

द्रोणेन वार्यमाणास्ते स्वयं तव सुतेन च।
नाशक्यन्त महाराज योधा वारयितुं तदा ॥ १२ ॥

(अ.१५८) उदीर्यमाणं तद्दृष्ट्वा पाण्डवानां महद्बलम्।
अविषह्यं च मन्वानः कर्णं दुर्योधनोऽब्रवीत् ॥ १३ ॥

अयं स कालः संप्राप्तो मित्राणां मित्रवत्सल।
त्रायस्व समरे कर्ण सर्वान्योधान्महारथान् ॥ १४ ॥

कर्ण०– जयं ते प्रतिदास्यामि वासवस्येव पावकिः।
प्रियं तव मया कार्यमिति जीवामि पार्थिव ॥ १५ ॥

सर्वेषामेव पार्थानां फाल्गुनो बलवत्तरः।
तस्यामोघां विमोक्ष्यामि शक्तिं शक्रविनिर्मिताम् ॥ १६ ॥

मयि जीवति कौरव्य विषादं मा कृथाः क्वचित्।
अहं जेष्याभि समरे सहितान्सर्वपाण्डवान् ॥ १७ ॥

पञ्चालान्केकयांश्चैव वृष्णींश्चापि समागतान्।
बाणौघैः शकलीकृत्य तव दास्यामि मेदिनीम् ॥ १८ ॥

एवं ब्रुवाणं कर्णं तु कृपः शारद्वतोऽब्रवीत् ॥ १९ ॥

शोभनं शोभनं कर्ण सनाथः कुरुपुङ्गवः।
त्वया नाथेन राधेय वचसा यदि सिध्यति ॥ १५२० ॥

बहुश· कत्थसे कर्ण कौरवस्य समीपत· ।
न तु ते विक्रमः कश्चिद्दृश्यते फलमेव वा ॥ २१ ॥
समागमः पाण्डुसुतैर्दृष्टस्ते बहुशो युधि ।
सर्वत्र निर्जितश्चासि पाण्डवैः सूतनन्दन ॥ २२ ॥
एकस्याप्यसमर्थस्त्वं फाल्गुनस्य रणाजिरे ।
कथमुत्सहसे जेतुं सकृष्णान्सर्वपाण्डवान् ॥ २३ ॥
अब्रुवन्कर्ण युध्यस्व कत्थसे बहु सूतज ।
अनुक्त्वा विक्रमेद्यस्तु तद्वै सत्पुरुषव्रतम् ॥ २४ ॥
गर्जित्वा सूतपुत्र त्व शारदाभ्रमिवाफलम् ।
निष्फलो दृश्यसे कर्ण तच्च राजा न बुध्यते ॥ २५ ॥
एवं संरुषितस्तेन तदा शारद्वतेन ह ।
कर्णः प्रहरतां श्रेष्ठः कृपं वाक्यमथाब्रवीत् ॥ २६ ॥
शूरा गर्जन्ति सततं प्रावृषीव बलाहका· ।
फलं चाशु प्रयच्छन्ति बीजमुप्तमृताविव ॥ २७ ॥
यं भारं पुरुषो वोढुं मनसा हि व्यवस्यति ।
दैवमस्य ध्रुवं तत्र साहाय्यायोपपद्यते ॥ २८ ॥
व्यवसायद्वितीयोऽहं मनसा भारमुद्वहन् ।
गर्जामि यद्यहं विप्र तव किं तत्र नश्यति ॥ २९ ॥
सोऽहमद्य रणे यत्तौ सहितौ कृष्णपाण्डवौ ।
उत्सहे मनसा जेतुं ततो गर्जामि गौतम ॥ १५३० ॥
कृप०— मनोरथप्रलापा मे न ग्राह्यास्तव सूतज ।
यस्त्वमुत्सहसे योद्धुं समरे शौरिणा सह ॥ ३१ ॥
एवमुक्तस्तु राधेयः प्रहसन् भरतर्षभ ।
अब्रवीच्च तदा कर्णो गुरुं शारद्वतं कृपम् ॥ ३२ ॥
सत्यमुक्तं त्वया ब्रह्मन् पाण्डवान्प्रति यद्वच· ।
तथापि पार्थाञ्जेष्यामि शक्त्या वासवदत्तया ॥ ३३ ॥

सुनीतैरिह सर्वार्थाः सिध्यन्ते नात्र संशयः ।
एतमर्थमहं ज्ञात्वा ततो गर्जामि गौतम ॥ ३४ ॥

त्वं तु विप्रश्च वृद्धश्च अशक्तश्चापि संयुगे ।
कृतस्नेहश्च पार्थेषु मोहान्मामवमन्यसे ॥ ३५ ॥

यद्येवं वक्ष्यसे भूयो ममाप्रियमिह द्विज ।
ततस्ते खड्गमुद्यम्य जिह्वां छेत्स्यामि दुर्मते ॥ ३६ ॥

(अ.१५९) तथा परुषितं दृष्ट्वा सूतपुत्रेण मातुलम् ।
खड्गमुद्यम्य वेगेन द्रौणिरभ्यपतद्द्रुतम् ॥ ३७ ॥

अश्व०- यदर्जुनगुणांस्तथ्यान्कीर्तयानं नराधम ।
शूरं द्वेषात्सुदुर्बुद्धे त्वं भर्त्सयसि मातुलम् ॥ ३८ ॥

विकत्थमानः शौर्येण सर्वलोकधनुर्धरम् ।
दर्पोत्सेधगृहीतोऽद्य न कञ्चिद्गणयन्मृधे ॥ ३९ ॥

क्व ते वीर्यं क्व चास्त्राणि यं त्वां निर्जित्य संयुगे ।
गाण्डीवधन्वा हतवान् प्रेक्षतस्ते जयद्रथम् ॥ १५४० ॥

कर्ण पश्य सुदुर्बुद्धे तिष्ठेदानीं नराधम ।
एष तेऽद्य शिरः कायादुद्धरामि सुदुर्मते ॥ ४१ ॥

तमुद्यतं तु वेगेन राजा दुर्योधनः स्वयम् ।
न्यवारयन्महातेजाः कृपश्च द्विपदां वरः ॥ ४२ ॥

कर्ण०- शूरोऽयं समरश्लाघी दुर्मतिश्च द्विजाधमः ।
आसादयतु मद्वीर्यं मुञ्चेमं कुरुसत्तम ॥ ४३ ॥

अश्व०- तवैतत्क्षम्यतेऽस्माभिः सूतात्मज सुदुर्मते ।
दर्पमुत्सिक्तमेतत्ते फाल्गुनो नाशयिष्यति ॥ ४४ ॥

दुर्यो०- अश्वत्थामन्प्रसीदस्व क्षन्तुमर्हसि मानद ।
कोपः खलु न कर्तव्यः सूतपुत्रं कथञ्चन ॥ ४५ ॥

त्वयि कर्णे कृपे द्रोणे मद्रराजेऽथ सौबले ।
महत्कार्यं समासक्तं प्रसीद द्विजसत्तम ॥ ४६ ॥

एते ह्यभिमुखाः सर्वे राधेयेन युयुत्सवः ।
आयान्ति पाण्डवा ब्रह्मन्नाह्वयन्तः समंततः ॥ ४७ ॥

सञ्जय०–प्रसाद्यमानस्तु ततो राज्ञा द्रौणिर्महामनाः ।
प्रससाद महाराज क्रोधवेगसमन्वितः ॥ ४८ ॥

ततः कृपोऽप्युवाचेदमाचार्यः सुमहामना ।
सौम्यस्वभावाद्राजेन्द्र क्षिप्रमागतमार्दवः ॥ ४९ ॥

तवैतत्क्षम्यतेऽस्माभिः सूतात्मज सुदुर्मते ।
दर्पमुत्सिक्तमेतत्ते फाल्गुनो नाशयिष्यति ॥ १५५० ॥

ततस्ते पाण्डवा राजन् पञ्चालाश्च यशस्विनः ।
आजग्मुः सहिताः कर्णं तर्जयन्तः समन्ततः ॥ ५१ ॥

ततः प्रववृते युद्धं कर्णस्य सह पाण्डवैः ।
भीषणं सुमहाराज सिंहनादविराजितम् ॥ ५२ ॥

ततो द्रौणिः कृपः शल्यो हार्दिक्यश्च महारथः ।
प्रत्युद्ययुस्तदा पार्थं सूतपुत्रपरीप्सया ॥ ५३ ॥

बीभत्सुरपि राजेन्द्र पञ्चालैरभिसंवृतः ।
प्रत्युद्ययौ तदा कर्णं यथा वृत्रं शतक्रतुः ॥ ५४ ॥
स कर्णं शरजालेन च्छादयामास पाण्डवः ॥ ५५ ॥
ततः कर्णः सुसंरब्धः शरैस्त्रिभिरविध्यत ।
तस्य तल्लाघवं पार्थो नामृष्यत महाबलः ॥ ५६ ॥
ततः पार्थो महेष्वासो दृष्ट्वा कर्णस्य विक्रमम् ।
मुष्टिदेशे धनुस्तस्य चिच्छेद त्वरयान्वितः ।
अश्वांश्च चतुरो भल्लैरनयद्यमसादनम् ॥ ५७ ॥
हताश्वात्तु रथात्तूर्णमवप्लुत्य नरर्षभः ।
आरुरोह रथं तूर्णं कृपस्य शरपीडितः ॥ ५८ ॥
राधेयं निर्जितं दृष्ट्वा तावका भरतर्षभ ।
धनञ्जयशरैर्भग्नाः प्राद्रवन्त दिशो दश ॥ ५९ ॥

द्रवतस्तान्समालोक्य राजा दुर्योधनो नृप।
निवर्तयामास तदा वाक्यमेतदुवाच ह ॥ १५६० ॥

अलं द्रुतेन वः शूरास्तिष्ठध्वं क्षत्रियर्षभाः।
एष पार्थवधायाहं स्वयं गच्छामि संयुगे ॥ ६१ ॥

अहं पार्थान् हनिष्यामि सपञ्चालान्ससोमकान्।
इत्युक्त्वा प्रययौ राजा सैन्येन महता वृतः ॥ ६२ ॥

तं प्रयान्तं महाबाहुं द्रौणिः शस्त्रभृतां वरः।
दुर्योधनमिदं वाक्यं त्वरितः समभाषत ॥ ६३ ॥

मयि जीवति गान्धारे न युद्धं गन्तुमर्हसि ॥ ६४ ॥

दुर्यो०- आचार्यः पाण्डुपुत्रान् वै पुत्रवत् परिरक्षति।
त्वमप्युपेक्षां कुरुषे तेषु नित्यं द्विजोत्तम ॥ ६५ ॥

मम वा मन्दभाग्यत्वान्मन्दस्ते विक्रमो युधि।
धर्मराजप्रियार्थं वा द्रौपद्या वा न विद्म तत् ॥ ६६ ॥

अश्वत्थामन्प्रसीदस्व नाशयैतान्ममाहितान् ॥ ६७ ॥

तवास्त्रगोचरे शक्ताः स्थातुं देवा न दानवाः।
किमु पार्थाः सपञ्चालाः सत्यमेतद्ब्रवीमि ते ॥ ६८ ॥

(अ.१६०) दुर्योधनेनैवमुक्तो द्रौणिराहवदुर्मदः।
प्रत्युवाच महाबाहुस्तव पुत्रमिदं वचः ॥ ६९ ॥

एष गच्छामि संग्रामं त्वत्कृते कुरुनन्दन।
योत्स्येऽहं शत्रुभिः सार्धं जेष्यामि च वरान्वरान् ॥१५७०॥

एवमुक्त्वा महाबाहुः पुत्रं दुर्योधनं तव।
अभ्यवर्तत युद्धाय त्रासयन्सर्वधन्विनः ॥ ७१ ॥

ततस्तमाचार्यसुतं धृष्टद्युम्नः प्रतापवान्।
मर्मभिद्भिः शरैस्तीक्ष्णैर्जघान भरतर्षभ ॥ ७२ ॥

ततो द्रौणिर्महाराज पार्षतस्य महात्मनः।
ध्वजं धनुस्तथा छत्रमुभौ च पार्ष्णिसारथी।
सूतमश्वांश्च चतुरो निहत्याभ्यद्रवद्रणे ॥ ७३ ॥
पञ्चालांश्चैव तान्सर्वान्बाणैः सन्नतपर्वभिः।
व्यद्रावयदमेयात्मा शतशोऽथ सहस्रशः ॥ ७४ ॥
ततस्तु विव्यथे सेना पाण्डवी भरतर्षभ ॥ ७५ ॥
(अ.१६१) ततः किरीटी भीमश्च सहसा सन्न्यवर्तताम्।
महता रथवंशेन परिगृह्य बलं महत् ॥ ७६ ॥
ततः सा भारती सेना हन्यमाना किरीटिना।
तमसा निद्रया चैव पुनरेव व्यदीर्यत ॥ ७७ ॥
(अ.१६२) सोमदत्तं तु सप्रेक्ष्य विधुन्वानं महद्धनुः।
सात्यकिः प्राह यन्तारं सोमदत्ताय मां वह ॥ ७८ ॥
ततः संप्रेषयद्यन्ता सैन्धवांस्तान्मनोजवान् ॥ ७९ ॥
तमापतन्तं संप्रेक्ष्य सात्वतं रभसं रणे।
सोमदत्तो महाबाहुरसंभ्रान्तो न्यवर्तत ॥ १५८० ॥
सोमदत्तस्तु तं षष्ट्या विव्याधोरसि माधवम्।
सात्यकिश्चापि तं राजन्नविध्यत्सायकैः शितैः ॥ ८१ ॥
तावन्योन्यं शरैः कृत्तौ व्यराजेतां नरर्षभौ।
सुपुष्पौ पुष्पसमये पुष्पिताविव किंशुकौ ॥ ८२ ॥
ततस्तु सात्यकी राजन्सोमदत्तस्य संयुगे।
धनुश्चिच्छेद भल्लेन हस्तावापं च पञ्चभिः ॥ ८३ ॥
ततः शरं महाघोरं ज्वलन्तमिव पावकम्।
मुमोच सात्वतो राजन्स्वर्णपुङ्खं शिलाशितम् ॥ ८४ ॥
सोऽतिविद्धो महाराज सात्वतेन महारथः।
सोमदत्तो महाबाहुर्निपपात ममार च ॥ ८५ ॥
तं दृष्ट्वा निहतं तत्र सोमदत्तं महारथाः।
महता शरवर्षेण युयुधानमुपादवन् ॥ ८६ ॥

छाद्यमानं शरैर्दृष्ट्वा युयुधानं युधिष्ठिरः।
पाण्डवाश्च महाराज सह सर्वैः प्रभद्रकैः।
महत्या सेनया सार्धं द्रोणानीकमुपाद्रवन् ॥ ८७ ॥
तत॰ शरसहस्रेण द्रोणं विव्याध पार्थिवः।
साश्वसूतध्वजरथं तदद्भुतमिवाभवत् ॥ ८८ ॥
ततोऽब्रवीद्वासुदेवः कुन्तीपुत्रं युधिष्ठिरम्।
उपारमस्व युद्धे त्वं द्रोणाद्भरतसत्तम ॥ ८९ ॥
योऽस्य सृष्टो विनाशाय स एवैनं हनिष्यति ॥ १५९० ॥
परिवर्ज्य गुरुं याहि यत्र राजा सुयोधनः।
राजा राज्ञा हि योद्धव्यो नाराज्ञा युद्धमिष्यते ॥ ९१ ॥
वासुदेववच श्रुत्वा धर्मराजो युधिष्ठिरः।
प्रायाद्द्रुतममित्रघ्नो यत्र भीमो व्यवस्थितः ॥ ९२ ॥
द्रोणोऽपि पाण्डुपञ्चालान् व्यधमद्रजनीमुखे ॥ ९३ ॥
(अ.१६१) वर्तमाने तथा युद्धे घोररूपे भयावहे।
तमसा संवृते लोके रजसा च महीपते ॥ ९४ ॥
नापश्यन्त रणे योधाः परस्परमवस्थिताः।
अनुमानेन संज्ञाभिर्युद्धं तद्ववृधे महत् ॥ ९५ ॥
ततः सर्वाणि सैन्यानि सेनागोपाश्च भारत।
व्यमुह्यन्त रणे तत्र तमसा संवृते सति ॥ ९६ ॥
ततः सर्वाणि सैन्यानि हतशिष्टानि यानि वै।
सेनागोप्तॄनथादिश्य पुनर्व्यूहमकल्पयत् ॥ ९७ ॥*
द्रोणः पुरस्ताज्जघने तु शल्य-
स्तथा द्रौणिः कृतवर्मा सौबलश्च।
स्वयं तु सर्वाणि बलानि राजन्
राजाऽभ्ययाद्गोपयन् वै निशायाम् ॥ ९८ ॥

---

* उत्तरश्लोकाद्द्रोण इत्यपकृष्य तेषा सैन्यानामित्यध्याहृत्य योज्यम्।

उवाच सर्वांश्च पदातिसङ्घान्
दुर्योधनः पार्थिव सान्त्वपूर्वम् ।
उत्सृज्य सर्वे परमायुधानि
गृह्णीत हस्तैर्ज्वलितान् प्रदीपान् ॥ ९९ ॥

ते चोदिताः पार्थिवसत्तमेन
ततः प्रहृष्टा जगृहुः प्रदीपान् ।
रथे रथे पञ्च विदीपकास्तु
प्रदीपकास्तत्र गजे त्रयश्च ॥ १६०० ॥

क्षणेन सर्वे विहिताः प्रदीपा
व्यादीपयन्तो ध्वजिनीं तवाशु ॥ १ ॥

शस्त्रप्रभाभिश्च विराजमानं
दीपप्रभाभिश्च तदा बलं तत् ।
प्रकाशितं चाभरणप्रभाभि-
र्भृशं प्रकाशं नृपते बभूव ॥ २ ॥

तत्संप्रदीप्तं बलमस्मदीयं
निशाम्य पार्थास्त्वरितास्तथैव ।
सर्वेषु सैन्येषु पदातिसंघा-
नचोदयंस्तेऽपि चक्रुः प्रदीपान् ॥ ३ ॥

गजे गजे सप्त कृताः प्रदीपा
रथे रथे चैव दश प्रदीपाः ।
द्वावश्वपृष्ठे परिपार्श्वतोऽन्ये
ध्वजेषु चान्ये जघनेषु चान्ये ॥ ४ ॥

सेनासु सर्वासु च पार्श्वतोऽन्ये
पश्चात्पुरस्ताच्च समन्ततश्च ।
मध्ये तथान्ये ज्वलिताग्निहस्ता
व्यदीपयन्पाण्डुसुतस्य सेनाम् ॥ ५

नेन प्रकाशेन भृशं प्रकाशं
बभूव तेषां तव चैव सैन्यम् ॥ ६ ॥

(अ.१६४) प्रकाशिते तदा लोके रजसा तमसा वृते।
समाजग्मुरथो वीराः परस्परवधैषिणः ॥ ७ ॥

(अ.१६५) कृतवर्मा तु हार्दिक्यो धर्मपुत्रं युधिष्ठिरम्।
वारयामास संक्रुद्धो वेलेवोद्धृत्तमर्णवम् ॥ ८ ॥

युधिष्ठिरस्तु हार्दिक्यं विद्ध्वा पञ्चभिराशुगैः।
पुनर्विव्याध विंशत्या तिष्ठ तिष्ठेति चाब्रवीत् ॥ ९ ॥

कृतवर्मा तु संक्रुद्धो धर्मपुत्रस्य मारिष।
धनुश्चिच्छेद भल्लेन तं च विव्याध सप्तभिः ॥ १६१० ॥

ते तस्य कवचं भित्त्वा हेमचित्रं महाधनम्।
प्राविशन् धरणीं भित्त्वा वल्मीकमिव पन्नगाः ॥ ११ ॥

ततस्तु समरे शूरो वृष्णीनां प्रवरो रथी।
व्यश्वसूतरथं चक्रे निमेषार्धाद्युधिष्ठिरम् ॥ १२ ॥

स च्छिन्नधन्वा विरथः शीर्णवर्मा शरार्दितः।
अपायासीद्रणात्तूर्णं धर्मपुत्रो युधिष्ठिरः ॥ १३ ॥

(अ.१६६) भूरिस्तु समरे राजञ्शैनेयं रथिनां वरम्।
आपतन्तमपासेधत्प्रयाणादिव कुञ्जरम् ॥ १४ ॥

स विद्ध्वा सात्वतं बाणैस्त्रिभिरेव विशां पते।
धनुश्चिच्छेद भल्लेन सुतीक्ष्णेन हसन्निव ॥ १५ ॥

छिन्नधन्वा महाराज सात्यकिः क्रोधमूर्छितः।
प्रजहार महावेगां शक्तिं तस्य महोरसि ॥ १६ ॥

स तु शक्त्या विभिन्नाङ्गो निपपात रथोत्तमात् ॥ १७ ॥
भीमसेनं तु युध्यन्तं भारद्वाजरथं प्रति।
स्वयं दुर्योधनो राजा प्रत्यविध्यच्छितैः शरैः ॥ १८ ॥

ततो भीमो महाराज गदां गुर्वीं महाप्रभाम्।
चिक्षेपाविध्य वेगेन दुर्योधनरथं प्रति ॥ १९ ॥

ततः सा सहसा वाहास्तव पुत्रस्य संयुगे।
सारथिं च गदा गुर्वी ममर्दास्य रथं पुनः ॥ १६२० ॥

पुत्रस्तु तव राजेन्द्र भीमाद्भीतः प्रणश्य च।
आरुरोह रथं चान्यं नन्दकस्य महात्मनः ॥ २१ ॥

(अ.१६७) सहदेवमथायान्तं द्रोणप्रेप्सुं विशां पते।
कर्णो वैकर्तनो युद्धे वारयामास भारत ॥ २२ ॥

सहदेवस्तु राधेयं विद्ध्वा नवभिराशुगैः।
पुनर्विव्याध दशभिर्विशिखैर्नतपर्वभिः ॥ २३ ॥

तस्य कर्णो हयान्हत्वा शरैः सन्नतपर्वभिः।
सारथिं चास्य भल्लेन द्रुतं निन्ये यमक्षयम् ॥ २४ ॥

स निरायुधमात्मानं ज्ञात्वा माद्रवतीसुतः।
वार्यमाणस्तु विशिखैः सहदेवो रणं जहौ ॥ २५ ॥

वधं प्राप्तं तु माद्रेयं नावधीत्समरेऽरिहा।
कुन्त्याः स्मृत्वा वचो राजन् सत्यसन्धो महायशाः ॥ २६ ॥

(अ.१७०) तस्मिन्सुतुमुले युद्धे वर्तमाने भयावहे।
बलेन महता युक्तः सूतपुत्रस्तु सात्वतम् ॥ २७ ॥

अभ्ययात्त्वरितो युद्धे किरञ्छरशतान्बहून्।
तथैव पार्थिवाः सर्वे सात्यकिं पर्यवारयन् ॥ २८ ॥

(अ.१७१) तेऽभ्यवर्षञ्छरैस्तीक्ष्णैः सात्यकिं सत्यविक्रमम्।
त्वरमाणा महावीरा माधवस्य वधैषिणः ॥ २९ ॥

तत्र वीरो महेष्वासः सात्यकिर्युद्धदुर्मदः।
निचकर्त शिरांस्युग्रैः शरैः सन्नतपर्वभिः ॥ १६३० ॥

एतेषां युयुधानेन युध्यतां युधि भारत।
बभूव तुमुलः शब्दः प्रेतानां क्रन्दतामिव ॥ ३१ ॥

ततो दुर्योधनः क्रुद्धो दृढधन्वा जितक्लमः।
शीघ्रहस्तश्चित्रयोधी युयुधानमुपाद्रवत्॥ ३२॥

शैनेयस्तु रणे क्रुद्धस्तव पुत्रं महारथम्।
सायकानामशीत्या तु विव्याधोरसि भारत॥ ३३॥

ततोऽस्य वाहान्समरे शरैर्निन्ये यमक्षयम्।
सारथिं च रथात्तूर्णं पातयामास पत्रिणा॥ ३४॥

अथापरेण भल्लेन मुष्टिदेशे महद्धनुः।
चिच्छेद तरसा युद्धे तव पुत्रस्य माधवः॥ ३५॥

विरथो विधनुष्कश्च सर्वलोकेश्वरः प्रभुः।
आरुरोह रथं तूर्णं भास्वरं कृतवर्मणः॥ ३६॥

दुर्योधने परावृत्ते शैनेयस्तव वाहिनीम्।
द्रावयामास विशिखैर्निशामध्ये विशां पते॥ ३७॥

शकुनिश्चार्जुनं राजन्परिवार्य समन्ततः।
रथैरनेकसाहस्रैर्गजैश्चापि सहस्रशः।
तथा हयसहस्रैश्च नानाशस्त्रैरवाकिरत्॥ ३८॥

तान्यर्जुनः सहस्राणि रथवारणवाजिनाम्।
प्रत्यवारयदायस्तः प्रकुर्वन्विपुलं क्षयम्॥ ३९॥

ततस्तु समरे शूरः शकुनिः सौबलस्तदा।
विव्याध निशितैर्बाणैरर्जुनं प्रहसन्निव॥ १६४०॥

अर्जुनः शकुनेश्चापं सायकैरच्छिनद्रणे।
निन्ये च चतुरो वाहान् यमस्य सदनं प्रति॥ ४१॥

ततो रथादवप्लुत्य सौबलो भरतर्षभ।
उलूकस्य रथं तूर्णमारुरोह विशां पते॥ ४२॥

तावेकरथमारूढौ पितापुत्रौ महारथौ।
पार्थं सिषिचतुर्बाणैर्गिरिं मेघाविवाम्बुभिः॥ ४३॥

तौ तु विद्ध्वा महाराज पाण्डवो निशितैः शरैः ।
विद्रावयंस्तव चमूं शतशो व्यधमच्छरैः ॥ ४४ ॥

अनिलेन यथाऽभ्राणि विच्छिन्नानि समन्ततः ।
विच्छिन्नानि तथा राजन् बलान्यासन् विशां पते ॥ ४५ ॥

तद्बलं भरतश्रेष्ठ वध्यमानं तदा निशि ।
प्रदुद्राव दिशः सर्वा वीक्ष्यमाणं भयार्दितम् ॥ ४६ ॥

धृष्टद्युम्नो महाराज द्रोणं विद्ध्वा त्रिभिः शरैः ।
चिच्छेद धनुषस्तूर्णं ज्यां शरेण शितेन ह ॥ ४७ ॥

तन्निधाय धनुर्भूमौ द्रोणः क्षत्रियमर्दनः ।
आददेऽन्यद्धनुः शूरो वेगवत्सारवत्तरम् ॥ ४८ ॥

धृष्टद्युम्नं ततो द्रोणो विद्ध्वा सप्तभिराशुगैः ।
सारथिं पञ्चभिर्बाणै राजन्विव्याध संयुगे ॥ ४९ ॥

तं निवार्य शरैस्तूर्णं धृष्टद्युम्नो महारथः ।
व्यधमत्कौरवीं सेनामासुरीं मघवानिव ॥ १६५० ॥

वध्यमाने बले तस्मिंस्तव पुत्रस्य मारिष ।
प्रावर्तत नदी घोरा शोणितौघतरङ्गिणी ॥ ५१ ॥

द्रावयित्वा तु तत्सैन्यं धृष्टद्युम्नः प्रतापवान् ।
अभ्यराजत तेजस्वी शक्रो देवगणेष्विव ॥ ५२ ॥

सिंहनादरवांश्चक्रुः पाण्डवा जितकाशिनः ।
पश्यतस्तव पुत्रस्य कर्णस्य च रणोत्कटाः ॥ ५३ ॥

(अ.१७२) विद्रुतं स्वबलं दृष्ट्वा वध्यमानं महात्मभिः ।
क्रोधेन महताऽऽविष्टः पुत्रस्तव विशां पते ॥ ५४ ॥

अभ्येत्य सहसा कर्णं द्रोणं च जयतां वरम् ।
अमर्षवशमापन्नो वाक्यज्ञो वाक्यमब्रवीत् ॥ ५५ ॥

भवद्भ्यामिह संग्रामः क्रुद्धाभ्यां संप्रवर्तितः ।
आहवे निहतं दृष्ट्वा सैन्धवं सव्यसाचिना ॥ ५६ ॥

निहन्यमाना पाण्डूनां बलेन मम वाहिनीम्।
भूत्वा तद्विजये शक्तावशक्ताविव पश्यतः॥ ५७॥

यद्यहं भवतोस्त्याज्यो न वाच्योऽस्मि तदैव हि।
आवां पाण्डुसुतान्संख्ये जेष्याव इति मानदौ॥ ५८॥

तदैवाहं वचः श्रुत्वा भवद्भ्यामनुसंमतम्।
नाकरिष्यमिदं पार्थैर्वैरं योधविनाशनम्॥ ५९॥

यदि नाहं परित्याज्यो भवद्भ्या पुरुषर्षभौ।
युध्यतामनुरूपेण विक्रमेण सुविक्रमौ॥ १६६०॥

वाक्प्रतोदेन तौ वीरौ प्रणुन्नौ तनयेन ते।
प्रावर्तयेतां संग्रामं घट्टिताविव पन्नगौ॥ ६१॥

ततस्तौ रथिनां श्रेष्ठौ सर्वलोकधनुर्धरौ।
शैनेयप्रमुखान्पार्थानभिदुद्रुवतू रणे॥ ६२॥

तथैव सहिताः पार्थाः सर्वसैन्येन संवृताः।
अभ्यवर्तन्त तौ वीरौ नर्दमानौ मुहुर्मुहुः॥ ६३॥

तत्र द्रोणोऽहरत्प्राणान्क्षत्रियाणां विशां पते।
रश्मिभिर्भास्करो राजंस्तमांसीव समन्ततः॥ ६४॥

सा तथा पाण्डवी सेना पीड्यमाना महात्मना।
निशि संप्राद्रवद्राजन्नुत्सृज्योल्काः सहस्रशः॥ ६५॥

द्रवमाणं तु तत् सैन्यं द्रोणकर्णौ महारथौ।
जघ्नतुः पृष्ठतो राजन् किरन्तौ सायकान् बहून्॥ ६६॥

ततस्तौ पुरुषव्याघ्रावुभौ माधवपाण्डवौ।
द्रोणकर्णौ समासाद्य धिष्ठितौ रणमूर्धनि॥ ६७॥

ततस्तत् पुनरावृत्तं युधिष्ठिरबलं महत्।
ततो द्रोणश्च कर्णश्च परान् ममृदतुर्युधि॥ ६८॥

(अ.१७३) लब्धलक्षस्तु राधेयः पञ्चालानां महारथान्।
अभ्यपीडयदायस्तः शरैर्मेघ इवाचलम्॥ ६९॥

सा पीडयमाना कर्णेन पञ्चालानां महाचमू ।
सम्प्राद्रवत् सुसन्त्रस्ता सिंहेनेवार्दिता मृगी ॥ १६७० ॥

## अलम्बुषवधः, अलायुधवधः, घटोत्कचवधः

ततो युधिष्ठिरो राजा स्वसैन्यं प्रेक्ष्य विद्रुतम् ।
अपयाने मनः कृत्वा फाल्गुनं वाक्यमब्रवीत् ॥ ७१ ॥
पश्य कर्णं महेष्वासं धनुष्पाणिमवस्थितम् ।
निशीथे दारुणे काले तपन्तमिव भास्करम् ॥ ७२ ॥
यदत्रानन्तरं कार्यं प्राप्तकाल च पश्यसि ।
कर्णस्य वधसंयुक्तं तत्कुरुष्व धनञ्जय ॥ ७३ ॥
एवमुक्तो महाराज पार्थः कृष्णमथाब्रवीत् ।
भीतः कुन्तीसुतो राजा राधेयस्याद्य विक्रमात् ॥ ७४ ॥
एवंगते प्राप्तकालं कर्णानीके पुनः पुनः ।
भवान् व्यवस्यतु क्षिप्रं द्रवते हि वरूथिनी ॥ ७५ ॥
नैनं शक्ष्यामि संसोढुं चरन्तं रणमूर्धनि ।
स भवांस्तत्र यात्वाशु यत्र कर्णो महारथः ॥ ७६ ॥
वासु०— न तु तावदहं मन्ये प्राप्तकालं तवानघ ।
समागमं महाबाहो सूतपुत्रेण संयुगे ॥ ७७ ॥
रक्ष्यते शक्तिरेषा हि रौद्रं रूप बिभर्ति च ।
घटोत्कचस्तु राधेयं प्रत्युद्यातु महाबलः ॥ ७८ ॥
एवमुक्तो महाबाहुः पार्थः पुष्करलोचनः ।
आजुहावाथ तद्रक्षस्तच्चासीत्प्रादुरग्रतः ॥ ७९ ॥
कवची सशरः खड्गी सधन्वा च विशा पते ।
अभिवाद्य ततः कृष्णं पाण्डवं च धनञ्जयम् ।
अब्रवीच्च तदा कृष्णमयमस्म्यनुशाधि माम् ॥ १६८० ॥
वासु०— घटोत्कच विजानीहि यत्त्वां वक्ष्यामि पुत्रक ।
प्राप्तो विक्रमकालोऽयं तव नान्यस्य कस्यचित् ॥ ८१ ॥

पश्य कर्णेन हैडिम्बे पाण्डवानामनीकिनी।
काल्यमाना यथा गावः पालेन रणमूर्धनि॥ ८२॥

एतस्यैवं प्रवृद्धस्य सूतपुत्रस्य संयुगे।
निषेद्धा विद्यते नान्यस्त्वामृते भीमविक्रम॥ ८३॥

एतदर्थं हि हैडिम्बे पुत्रानिच्छन्ति मानवाः।
कथं नस्तारयेद्दुःखात्स त्वं तारय बान्धवान्॥ ८४॥

रात्रौ हि राक्षसा भूयो भवन्त्यमितविक्रमाः।
बलवन्तः सुदुर्धर्षाः शूरा विक्रान्तचारिणः॥ ८५॥

घटो०- अद्य दास्यामि संग्रामं सूतपुत्राय तं निशि।
यं जनाः संप्रवक्ष्यन्ति यावद्भूमिर्धरिष्यति॥ ८६॥

एवमुक्त्वा महाबाहुर्हैडिम्बिर्वरवीरहा।
अभ्ययात्तुमुले कर्णं तव सैन्यं विभीषयन्॥ ८७॥

तमापतन्तं संक्रुद्धं दीप्तास्यं दीप्तमूर्धजम्।
प्रहसन् पुरुषव्याघ्रः प्रतिजग्राह सूतजः॥ ८८॥

(अ.१७४) एतस्मिन्नन्तरे राजञ्जटासुरसुतो बली।
दुर्योधनमुपागम्य प्राह प्रहरतां वरः॥ ८९॥

दुर्योधन तवामित्रान्प्रख्यातान् युद्धदुर्मदान्।
पाण्डवान्हन्तुमिच्छामि त्वयाऽऽज्ञप्तः सहानुगान्॥१६९०॥

जटासुरो मम पिता रक्षसां ग्रामणीः पुरा।
प्रयुज्य कर्म रक्षोघ्नं क्षुद्रैः पार्थैर्निपातितः॥ ९१॥

तस्यापचितिमिच्छामि शत्रुशोणितपूजया।
शत्रुमांसैश्च राजेन्द्र मामनुज्ञातुमर्हसि॥ ९२॥

तमब्रवीत्ततो राजा प्रीयमाणः पुनः पुनः।
द्रोणकर्णादिभिः सार्धं पर्याप्तोऽहं द्विषद्वधे॥ ९३॥
त्वं तु गच्छ मयाऽऽज्ञप्तो जहि युद्धे घटोत्कचम्॥ ९४॥

तथेत्युक्त्वा महाकाय· समाहूय घटोत्कचम् ।
जाटासुरिर्भैमसेनिं नानाशस्त्रैरवाकिरत् ॥ ९५ ॥

ततो घटोत्कचो राजन्नलम्बुषवधेप्सया ।
उत्पपात भृशं क्रुद्ध· श्येनवन्निपपात च ॥ ९६ ॥

गृहीत्वा च महाकायं राक्षसेन्द्रमलम्बुषम् ।
उद्यम्य न्यवधीद्भूमौ मयं विष्णुरिवाहवे ॥ ९७ ॥

ततो घटोत्कचः खड्गमुद्धृत्याद्भुतदर्शनम् ।
रौद्रस्य कायाद्धि शिरो भीम विकृतदर्शनम् ॥ ९८ ॥

स्फुरतस्तस्य समरे नदतश्चातिभैरवम् ।
निचकर्त महाराज शत्रोरमितविक्रम ॥ ९९ ॥

शिरस्तच्चापि संगृह्य केशेषु रुधिरोक्षितम् ।
ययौ घटोत्कचस्तूर्णं दुर्योधनरथं प्रति ॥ १७०० ॥

अभ्येत्य च महाबाहु· स्मयमानः स राक्षसः ।
शिरो रथेऽस्य निक्षिप्य विकृताननमूर्धजम् ।
प्राणदद्भैरवं नादं प्रावृषीव बलाहकः ॥ १ ॥

अब्रवीच्च ततो राजन् दुर्योधनमिदं वचः ॥ २ ॥
एष ते निहतो बन्धुस्त्वया दृष्टोऽस्य विक्रम ।
पुनर्द्रष्टासि कर्णस्य निष्ठामेतां तथाऽऽत्मन· ॥ ३ ॥

स्वधर्ममर्थं कामं च त्रितयं योऽभिवाञ्छति ।
रिक्तपाणिर्न पश्येत राजानं ब्राह्मणं स्त्रियम् ॥ ४ ॥

तिष्ठस्व तावत्सुप्रीतो यावत्कर्णं वधाम्यहम् ॥ ५ ॥
एवमुक्त्वा तत· प्रायात्कर्णं प्रति नरेश्वर ।
किरञ्छरगणांस्तीक्ष्णान् रुषितो रणमूर्धनि ॥ ६ ॥

ततः समभवद्युद्धं घोररूपं भयानकम् ।
विस्मापनं महाराज नरराक्षसयोर्मृधे ॥ ७ ॥

(अ.१७६)तस्मिंस्तथा वर्तमाने कर्णराक्षसयोर्मृधे।
अलायुधो राक्षसेन्द्रो वीर्यवानभ्यवर्तत।
विज्ञायैतन्निशायुद्धं जिघांसुर्भीममाहवे ॥ ८ ॥

स मत्त इव मातङ्गः संक्रुद्ध इव चोरगः।
दुर्योधनमिदं वाक्यमब्रवीद्युद्धलालसः ॥ ९ ॥

विदितं ते महाराज यथा भीमेन राक्षसाः।
हिडिम्बबककिर्मीरा निहता मम बान्धवाः ॥ १७१० ॥

परामर्शश्च कन्याया हिडिम्बायाः कृतः पुरा ॥ ११ ॥

तमहं सगणं राजन्सवाजिरथकुञ्जरम्।
हैडिम्बिं च सहामात्यं हन्तुमभ्यागतः स्वयम् ॥ १२ ॥

तस्यैतद्वचनं श्रुत्वा हृष्टो दुर्योधनस्तदा।
प्रतिगृह्याब्रवीद्वाक्यं भ्रातृभिः परिवारितः ॥ १३ ॥

त्वां पुरस्कृत्य सगणं वयं योत्स्यामहे परान्।
न हि वैरान्तमनसः स्थास्यन्ति मम सैनिकाः ॥ १४ ॥

एवमस्त्विति राजानमुक्त्वा राक्षसपुङ्गवः।
अभ्ययात्त्वरितो भैमिं सहितः पुरुषादकैः ॥ १५ ॥

(अ.१७७)ततः कर्णं समुत्सृज्य भैमसेनिरपि प्रभो।
प्रत्यमित्रमुपायान्तमर्दयामास मार्गणैः ॥ १६ ॥

(अ.१७८)अलायुधस्तु संक्रुद्धो घटोत्कचमरिंदमम्।
परिघेणातिकायेन ताडयामास मूर्धनि ॥ १७ ॥

स तु तेन प्रहारेण भैमसेनिर्महाबलः।
ईषन्मूर्छितमात्मानमस्तंभयत वीर्यवान् ॥ १८ ॥

ततो दीप्ताग्निसंकाशां शतघंटामलंकृताम्।
चिक्षेप समरे तस्मै गदां काञ्चनभूषिताम् ॥ १९ ॥

सा हयांश्च रथं चास्य सारथिं च महास्वना।
चूर्णयामास वेगेन विसृष्टा भीमकर्मणा ॥ १७२० ॥

स भग्नहयचक्राक्षाद्विशीर्णध्वजकूबरात् ।
उत्पपात रथात्तूर्णं मायामास्थाय राक्षसीम् ॥ २१ ॥
स समास्थाय मायां तु ववर्ष रुधिरं बहु ।
विद्युद्विभ्राजितं चासीत्तुमुलाभ्राकुलं नभः ॥ २२ ॥
तां प्रेक्ष्य महतीं माया राक्षसो राक्षसस्य च ।
ऊर्ध्वमुत्पत्य हैडिम्बिस्तां मायां माययाऽवधीत् ॥ २३ ॥
सोऽभिवीक्ष्य हतां मायां मायावी माययैव हि ।
अश्मवर्षं सुतुमुलं विससर्ज घटोत्कचे ॥ २४ ॥
अश्मवर्षं स तं घोरं शरवर्षेण वीर्यवान् ।
दिक्षु विध्वंसयामास तदद्भुतमिवाभवत् ॥ २५ ॥
ततो नानाप्रहरणैरन्योन्यमभिवर्षताम् ।
विपुलैः पर्वताग्रैश्च नानाधातुभिराचितैः ॥ २६ ॥
युद्धं समभवद्घोरं भैम्यलायुधयोर्नृप ।
हरीन्द्रयोर्यथा राजन् वालिसुग्रीवयोः पुरा ॥ २७ ॥
तौ युद्ध्वा विविधैर्घोरैरायुधैर्विशिखैस्तथा ।
प्रगृह्य च शितौ खड्गावन्योन्यमभिपेततुः ॥ २८ ॥
तावन्योन्यमभिद्रुत्य केशेषु सुमहाबलौ ।
भुजाभ्यां पर्यगृह्णीतां महाकायौ महाबलौ ॥ २९ ॥
तौ स्विन्नगात्रौ प्रस्वेदं सुस्रुवाते जनाधिप ।
रुधिरं च महाकायावतिवृष्टाविवांबुदौ ॥ १७३० ॥
अथाभिपत्य वेगेन समुद्भ्राम्य च राक्षसम् ।
बलेनाक्षिप्य हैडिम्बिश्चकर्तास्य शिरो महत् ॥ ३१ ॥
हतं दृष्ट्वा महाकायं बकज्ञातिमरिंदमम् ।
पञ्चालाः पाण्डवाश्चैव सिंहनादान्विनेदिरे ॥ ३२ ॥
अथ दुर्योधनो राजा दृष्ट्वा हतमलायुधम् ।
बभूव परमोद्विग्नः सह सैन्येन भारत ॥ ३३ ॥

(अ.१७९) निहत्यालायुधं रक्षः प्रहृष्टात्मा घटोत्कचः।
ननाद विविधान्नादान्वाहिन्याः प्रमुखे तव ॥ ३४ ॥

तस्य तं तुमुलं शब्दं श्रुत्वा कुञ्जरकम्पनम्।
तावकानां महाराज भयमासीत्सुदारुणम् ॥ ३५ ॥

अलायुधविषक्तं तु भैमसेनिं महाबलम्।
दृष्ट्वा कर्णो महाबाहुः पञ्चालान्समुपाद्रवत् ॥ ३६ ॥

ततोऽतुलैर्वज्रनिपातकल्पैः
शितैः शरैः काञ्चनचित्रपुङ्खैः।
शत्रून् व्यपोहत् समरे महात्मा
वैकर्तनः पुत्रहिते रतस्ते ॥ ३७ ॥

तान्प्रेक्ष्य भग्नान्विमुखीकृतांश्च
घटोत्कचो रोषमतीव चक्रे।
वैकर्तनं कर्णमुपेत्य चापि
विव्याध वज्रप्रतिमैः पृषत्कैः ॥ ३८ ॥

समाहितावप्रतिमप्रभावा-
वन्योन्यमाजघ्नतुरुत्तमास्त्रैः।
तयोर्हि वीरोत्तमयोर्न कश्चि-
द्ददर्श तस्मिन् समरे विशेषम् ॥ ३९ ॥

घटोत्कचं यदा कर्णो न विशेषयते नृप।
ततः प्रादुश्चकारोग्रमस्त्रमस्त्रविदां वरः ॥ १७४० ॥

तेनास्त्रेणावधीत्तस्य रथं सहयसारथिम्।
विरथश्चापि हैडिम्बिः क्षिप्रमन्तरधीयत ॥ ४१ ॥

अन्तर्हितं राक्षसेन्द्रं विदित्वा
संप्राक्रोशन्कुरवः सर्व एव।
कथं नायं राक्षसः कूटयोधी
हन्यात्कर्णं समरेऽदृश्यमानः ॥ ४२ ॥

ततो मायां दारुणामन्तरिक्षे
घोरां भीमां विहितां राक्षसेन ।
अपश्याम लोहिताभ्रप्रकाशां
देदीप्यन्तीमग्निशिखामिवोग्राम् ॥ ४३ ॥

ततः शराः प्रापतन् रुक्मपुङ्खाः
शक्त्यृष्टिप्रासमुसलान्यायुधानि ।
परश्वधास्तैलधौताश्च खड्गाः
प्रदीप्ताग्रास्तोमराः पट्टिशाश्च ॥ ४४ ॥

तां शक्तिपाषाणपरश्वधानां
प्रासासिवज्राशनिमुद्गराणाम् ।
वृष्टिं विशालां ज्वलितां पतन्तीं
कर्णः शरौघैर्न शशाक हन्तुम् ॥ ४५ ॥

सुभीमनानाविधशस्त्रपातै-
र्घटोत्कचेनाभिहतं समन्तात् ।
दौर्योधनं वै बलमार्तरूप-
मावर्तमानं ददृशे भ्रमत्तत् ॥ ४६ ॥

तस्मिन् घोरे कुरुवीरावमर्दे
कालोत्सृष्टे क्षत्रियाणामभावे ।
ते वै भग्नाः सहसा व्यद्रवन्त
प्राक्रोशन्तः कौरवाः सर्व एव ॥ ४७ ॥

ततोऽब्रुवन् कुरवः सर्व एव
कर्णं दृष्ट्वा घोररूपां च मायाम् ।
शक्त्या रक्षो जहि कर्णाद्य तूर्णं
नश्यन्त्येते कुरवो धार्तराष्ट्राः ॥ ४८ ॥

करिष्यतः किञ्च नो भीमपार्थौ
तपन्तमेनं जहि पापं निशीथे ।

यो नः संग्रामाद्घोररूपाद्विमुञ्चे-
त्स नः पार्थान् सबलान् योधयेत ॥ ४९ ॥

तस्मादेनं राक्षसं घोररूपं
शक्त्या जहि त्वं दत्तया वासवेन ।
मा कौरवाः सर्व एवेन्द्रकल्पा
रात्रियुद्धे कर्ण नेशुः सयोधाः ॥ १७५० ॥

स वध्यमानो रक्षसा वै निशीथे
दृष्ट्वा राजंस्त्रास्यमानं बलं च ।
महच्छ्रुत्वा निनदं कौरवाणां
मतिं दध्रे शक्तिमोक्षाय कर्णः ॥ ५१ ॥

याऽसौ राजन्निहिता वर्षपूगान्
वधायाजौ सत्कृता फाल्गुनस्य ।
ता वै शक्तिं लेलिहानां प्रदीप्तां ।
वैकर्तनः प्राहिणोद्राक्षसाय ॥ ५२ ॥

सा ता मायां भस्म कृत्वा ज्वलन्ती
भित्त्वा गाढं हृदयं राक्षसस्य ।
ऊर्ध्वं ययौ दीप्यमाना निशाया
नक्षत्राणामन्तराण्याविवेश ॥ ५३ ॥

पतद्रक्षः स्वेन कायेन तूर्ण-
मतिप्रमाणेन विवर्धता च ।
प्रियं कुर्वन् पाण्डवानां गतासु-
रक्षौहिणीं तव तूर्णं जघान ॥ ५४ ॥

ततो मिश्राः प्राणदन्सिंहनादै-
र्भेर्यः शङ्खा मुरजाश्चानकाश्च ।
दग्धां मायां निहतं राक्षसं च
दृष्ट्वा हृष्टाः प्राणदन् कौरवेयाः ॥ ५५ ॥

## घटोत्कचवधेन श्रीकृष्णस्य हर्षः

(अ.१८०) हैडिम्बिं निहतं दृष्ट्वा विशीर्णमिव पर्वतम्।
बभूवुः पाण्डवाः सर्वे शोकबाष्पाकुलेक्षणाः ॥ ५६ ॥
वासुदेवस्तु हर्षेण महताऽभिपरिप्लुतः।
ननाद सिंहनादं वै पर्यष्वजत फाल्गुनम् ॥ ५७ ॥
स विनद्य महानादमभीषून्संनियम्य च।
ननर्त हर्षसंवीतो वातोद्धूत इव द्रुमः ॥ ५८ ॥
प्रहृष्टमनसं ज्ञात्वा वासुदेवं महाबलः।
अर्जुनोऽथाब्रवीद्राजन्नातिहृष्टमना इव ॥ ५९ ॥
अतिहर्षोऽयमस्थाने तवाद्य मधुसूदन।
शोकस्थाने तु संप्राप्ते हैडिम्बस्य वधेन तु ॥ १७६० ॥
नैतत्कारणमल्पं हि भविष्यति जनार्दन।
तदद्य शंस मे पृष्टः सत्यं सत्यभृतां वर ॥ ६१ ॥
वासु०— अतिहर्षमिमं प्राप्तं शृणु मे त्वं धनञ्जय ॥ ६२ ॥
शक्तिं घटोत्कचेनेमां व्यंसयित्वा महाद्युते।
कर्णं निहतमेवाजौ विद्धि सद्यो धनञ्जय ॥ ६३ ॥
दिष्ट्याऽपनीतकवचो दिष्ट्याऽपहृतकुण्डलः।
दिष्ट्या सा व्यंसिता शक्तिरमोघाऽस्य घटोत्कचे ॥ ६४ ॥
आशीविष इव क्रुद्धो जृम्भितो मन्त्रतेजसा।
तथाऽद्य भाति कर्णो मे शान्तज्वाल इवानलः ॥ ६५ ॥
कवचेन विहीनश्च कुण्डलाभ्यां च पाण्डव।
सोऽद्य मानुषतां प्राप्तो विमुक्तः शक्रदत्तया ॥ ६६ ॥
एको हि योगोऽस्य भवेद्वधाय-
चिछद्रे ह्येनं स्वप्रमत्तः प्रमत्तम्।
कृच्छ्रं प्राप्तं रथचक्रे विमग्ने
हन्याः पूर्वं त्वं तु संज्ञां विचार्य ॥ ६७ ॥

जरासन्धश्चेदिराजो महात्मा
महाबाहुश्चैकलव्यो निषादः।
एकैकशो निहताः सर्व एते
योगैस्तैस्तैस्त्वद्धितार्थं मयैव ॥ ६८ ॥

(अ.१८१) यदि ह्येनं नाहनिष्यत्कर्णः शक्त्या महामृधे।
मया वध्योऽभविष्यत्स भैमसेनिर्घटोत्कचः ॥ ६९ ॥

मया न निहतः पूर्वमेष युष्मत्प्रियेप्सया ॥ १७७० ॥

एष हि ब्राह्मणद्वेषी यज्ञद्वेषी च राक्षसः।
धर्मस्य लोप्ता पापात्मा तस्मादेष निपातितः ॥ ७१ ॥

व्यंसिता चाप्युपायेन शक्रदत्ता मयाऽनघ ॥ ७२ ॥

ये हि धर्मस्य लोप्तारो वध्यास्ते मम पाण्डव।
धर्मसंस्थापनार्थं हि प्रतिज्ञैषा ममाव्यया ॥ ७३ ॥

ब्रह्म सत्यं दमः शौचं धर्मो ह्रीः श्रीर्धृतिः क्षमा।
यत्र तत्र रमे नित्यमहं सत्येन ते शपे ॥ ७४ ॥

(अ.१८२) ततः कृष्णं महाबाहुं सात्यकिः सत्यविक्रमः।
पप्रच्छ रथशार्दूलः कर्णं प्रति महारथः ॥ ७५ ॥

अयं च प्रत्ययः कर्णे शक्तिश्चामितविक्रमा।
किमर्थं सूतपुत्रेण न मुक्ता फाल्गुने तु सा ॥ ७६ ॥

वासु०— दुःशासनश्च कर्णश्च शकुनिश्च ससैन्धवः।
सततं मन्त्रयन्ति स्म दुर्योधनपुरोगमाः ॥ ७७ ॥

कर्ण कर्ण महेष्वास रणेऽमितपराक्रम।
नान्यस्य शक्तिरेषा ते मोक्तव्या जयतां वर ॥ ७८ ॥

ऋते महारथात्कर्ण कुन्तीपुत्राद्धनञ्जयात्।
स हि तेषामतियशा देवानामिव वासवः ॥ ७९ ॥

तस्मिन्विनिहते पार्थे पाण्डवाः सृञ्जयैः सह।
भविष्यन्ति गतात्मानः सुरा इव निरग्नयः ॥ १७८० ॥

तथेति च प्रतिज्ञातं कर्णेन शिनिपुङ्गव।
हृदि नित्यं च कर्णस्य वधो गाण्डीवधन्वनः ॥ ८१ ॥
अहमेव तु राधेयं मोहयामि युधां वर।
ततो नावासृजच्छक्तिं पाण्डवे श्वेतवाहने ॥ ८२ ॥
फाल्गुनस्य हि सा मृत्युरिति चिंतयतोऽनिशम्।
न निद्रा न च मे हर्षो मनसोऽस्ति युधां वर ॥ ८३ ॥
घटोत्कचे व्यंसितां तु दृष्ट्वा तां शिनिपुङ्गव।
मृत्योरास्यान्तरान्मुक्तं पश्याम्यद्य धनञ्जयम् ॥ ८४ ॥
न पिता न च मे माता न यूयं भ्रातरस्तथा।
न च प्राणास्तथा रक्ष्या यथा बीभत्सुराहवे ॥ ८५ ॥
त्रैलोक्यराज्याद्यत्किञ्चिद्भवेदन्यत्सुदुर्लभम्।
नेच्छेयं सात्वताहं तद्विना पार्थं धनञ्जयम् ॥ ८६ ॥
अतः प्रहर्षः सुमहान्युयुधानाद्य मेऽभवत्।
मृतं प्रत्यागतमिव दृष्ट्वा पार्थं धनञ्जयम् ॥ ८७ ॥
अतश्च प्रहितो युद्धे मया कर्णाय राक्षसः।
न ह्यन्यः समरे रात्रौ शक्तः कर्णं प्रबाधितुम् ॥ ८८ ॥
इति सात्यकये प्राह तदा देवकिनन्दनः।
धनञ्जयहिते युक्तस्तत्प्रिये सततं रतः ॥ ८९ ॥
(अ.१८३) हते घटोत्कचे राजन् कर्णेन निशि राक्षसे।
प्रणदत्सु च हृष्टेषु तावकेषु युयुत्सुषु ॥ १७९० ॥
विगाढायां रजन्यां च राजा दैन्यं परं गतः।
अब्रवीच्च महाबाहुर्भीमसेनमिदं वचः ॥ ९१ ॥
आवारय महाबाहो धार्तराष्ट्रस्य वाहिनीम् ॥ ९२ ॥

## सर्वसैन्यस्य निद्रा, चन्द्रोदये पुनर्युद्धारम्भः, द्रुपदविराटवधः

(अ १८४) ततः प्रववृते युद्धं श्रान्तवाहनसैनिकम्।
पाण्डवानां कुरूणां च गर्जतामितरेतरम् ॥ ९३ ॥

निद्रान्धास्ते महाराज परिश्रान्ताश्च संयुगे।
नाभ्यपद्यन्त समरे काञ्चिच्चेष्टां महारथाः॥ ९४॥

सर्वे ह्यासन्निरुत्साहाः क्षत्रिया दीनचेतसः।
स्वधर्ममनुपश्यन्तो न जहुः स्वामनीकिनीम्॥ ९५॥

अस्त्राण्यन्ये समुत्सृज्य निद्रान्धाः शेरते जनाः।
रथेष्वन्ये गजेष्वन्ये हयेष्वन्ये च भारत॥ ९६॥

हन्यमानमथात्मानं परेभ्यो बहवो जनाः।
नाभ्यजानन्त समरे निद्रया मोहिता भृशम्॥ ९७॥

तेषामेतादृशीं चेष्टां विज्ञाय पुरुषर्षभः।
उवाच वाक्यं बीभत्सुरुच्चैः सन्नादयन् दिशः॥ ९८॥

श्रान्ता भवन्तो निद्रान्धाः सर्वे एव सवाहनाः।
ते यूयं यदि मन्यध्वमुपारमत सैनिकाः॥ ९९॥

निमीलयत चात्रैव रणभूमौ मुहूर्तकम्॥ १८००॥

ततो विनिद्रा विश्रान्ताश्चन्द्रमस्युदिते पुनः।
संसाधयिष्यथान्योन्यं संग्रामं कुरुपाण्डवाः॥ १॥

तद्वचः सर्वधर्मज्ञा धार्मिकस्य विशां पते।
अरोचयन्त सैन्यानि तथा चान्योन्यमब्रुवन्॥ २॥

तथा विक्रोशमानस्य फाल्गुनस्य ततस्ततः।
उपारमत पाण्डूनां सेना तव च भारत॥ ३॥

अश्वपृष्ठेषु चाप्यन्ये रथनीडेषु चापरे।
गजस्कन्धगताश्चान्ये शेरते चापरे क्षितौ॥ ४॥

एवं हयाश्च नागाश्च योधाश्च भरतर्षभ।
युद्धाद्विरम्य सुषुपुः श्रमेण महताऽन्विताः॥ ५॥

तत्तथा निद्रया भग्नमबोधं प्रास्वपद्भृशम्।
कुशलैः शिल्पिभिर्न्यस्तं पटे चित्रमिवाद्भुतम्॥ ६॥

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥ ७ ॥

दशशताक्षककुब्दरिनिःसृतः
किरणकेसरभासुरपिञ्जरः ।
तिमिरवारणयूथविदारणः
समुदियादुदयाचलकेसरी ॥ ८ ॥

हरवृषोत्तमगात्रसमद्युतिः
स्मरशरासनपूर्णसमप्रभः ।
नववधूस्मितचारुमनोहरः
प्रविसृतः कुमुदाकरबान्धवः ॥ ९ ॥

ततो मुहूर्ताद्भगवान् पुरस्ताच्छशलक्षणः ।
रश्मिजालं महच्चन्द्रो मन्दं मन्दमवासृजत् ॥ १८१० ॥

बोध्यमानं तु तत्सैन्यं राजंश्चन्द्रस्य रश्मिभिः ।
बुबुधे शतपत्राणां वनं सूर्यांशुभिर्यथा ॥ ११ ॥

यथा चन्द्रोदयोद्धूतः क्षुभितः सागरोऽभवत् ।
तथा चन्द्रोदयोद्धूतः स बभूव बलार्णवः ॥ १२ ॥

(अ १८५) ततो दुर्योधनो द्रोणमभिगम्याब्रवीदिदम् ।
अमर्षवशमापन्नो जनयन्हर्षतेजसी ॥ १३ ॥

न मर्षणीयाः संग्रामे विश्रमन्तः श्रमान्विताः ।
सपत्ना ग्लानमनसो लब्धलक्षा विशेषतः ॥ १४ ॥

यत्तु मर्षितमस्माभिर्भवतः प्रियकाम्यया ।
त एते परिविश्रान्ताः पाण्डवा बलवत्तराः ॥ १५ ॥

सर्वथा परिहीनाः स्म तेजसा च बलेन च ।
भवता पाल्यमानास्ते विवर्धन्ते पुनः पुनः ॥ १६ ॥

दिव्यान्यस्त्राणि सर्वाणि ब्राह्मादीनि च यानि ह ।
तानि सर्वाणि तिष्ठन्ति भवत्येव विशेषतः ॥ १७ ॥

स भवान्मर्षयत्येतांस्त्वत्तो भीतान्विशेषतः।
शिष्यत्वं वा पुरस्कृत्य मम वा मन्दभाग्यताम्॥ १८॥
एवमुद्धर्षितो द्रोणः कोपितश्च सुतेन ते।
समन्युरब्रवीद्राजन्दुर्योधनमिदं वचः॥ १९॥
स्थविरः सन्परं शक्त्या घटे दुर्योधनाहवे।
अतःपरं मया कार्यं क्षुद्रं विजयगृद्धिना॥ १८२०॥
अनस्त्रविदयं सर्वो हन्तव्योऽस्त्रविदा जनः॥ २१॥
यद्भवान्मन्यते चापि शुभं वा यदिवाऽशुभम्।
तद्वै कर्तास्मि कौरव्य वचनात्तव नान्यथा॥ २२॥
निहत्य सर्वपञ्चालान् युद्धे कृत्वा पराक्रमम्।
विमोक्ष्ये कवचं राजन् सत्येनायुधमालभे॥ २३॥
मन्यसे यच्च कौन्तेयमर्जुनं श्रान्तमाहवे।
तस्य वीर्यं महाबाहो शृणु सत्येन कौरव॥ २४॥
तं न देवा न गन्धर्वा न यक्षा न च राक्षसाः।
उत्सहन्ते रणे जेतुं कुपितं सव्यसाचिनम्॥ २५॥
तं तदाऽभिप्रशंसन्तमर्जुनं कुपितस्तदा।
द्रोणं तव सुतो राजन् पुनरेवेदमब्रवीत्॥ २६॥
अहं दुःशासनः कर्णः शकुनिर्मातुलश्च मे।
हनिष्यामोऽर्जुनं संख्ये द्विधा कृत्वाऽद्य भारतीम्॥ २७॥
तस्य तद्वचनं श्रुत्वा भारद्वाजो हसन्निव।
अन्ववर्तत राजानं स्वस्ति तेऽस्त्विति चाब्रवीत्॥ २८॥
युद्धे ह्यर्जुनमासाद्य स्वस्तिमान् को व्रजेद्गृहान्॥ २९॥
त्वं तु सर्वाभिशंकित्वान्निष्ठुरः पापनिश्चयः।
श्रेयसस्त्वद्धिते युक्तांस्तत्तद्वक्तुमिहेच्छसि॥ १८३०॥
गच्छ त्वमपि कौन्तेयमात्मार्थे जहि मा चिरम्।
इमान्किं क्षत्रियान्सर्वान् घातयिष्यस्यनागसः॥ ३१॥

एष ते पाण्डव. शत्रुरविशङ्कोऽग्रत. स्थितः ।
क्षत्रधर्ममवेक्षस्व श्लाघ्यस्तव वधो जयात् ॥ ३२ ॥

दत्तं भुक्तमधीतं च प्राप्तमैश्वर्यमीप्सितम् ।
कृतकृत्योऽनृणश्चासि मा भैर्युध्यस्व पाण्डवम् ॥ ३३ ॥

इत्युक्त्वा समरे द्रोणो न्यवर्तत यत. परे ।
द्वैधीकृत्य तत. सेनां युद्धं समभवत्तदा ॥ ३४ ॥

(अ.१८६) त्रिभागमात्रशेषायां रात्र्यां युद्धमवर्तत ।
कुरूणां पाण्डवाना च सम्प्रहृष्टानां विशां पते ॥ ३५ ॥

ततो द्वैधीकृते सैन्ये द्रोण. सोमकपाण्डवान् ।
अभ्यद्रवत्सपञ्चालान् दुर्योधनपुरोगम ॥ ३६ ॥

ततो विराटद्रुपदौ द्रोणं प्रति ययू रणे ॥ ३७ ॥

द्रुपदस्य ततः पौत्रास्त्रय एव विशां पते ।
चेदयश्च महेष्वासा द्रोणमेवाभ्ययुर्युधि ॥ ३८ ॥

तेषा द्रुपदपौत्राणा त्रयाणां निशितै. शरै. ।
त्रिभिर्द्रोणोऽहरत्प्राणांस्ते हता न्यपतन्भुवि ॥ ३९ ॥

ततो द्रोणः सुपीताभ्यां भल्लाभ्यामरिमर्दन ।
द्रुपदं च विराटं च प्रेषयामास मृत्यवे ॥ १८४० ॥

अथ चन्द्रप्रभां मुष्णन्नादित्यस्य पुर सर ।
अरुणोऽभ्युदयांचक्रे ताम्रीकुर्वन्निवाम्बरम् ॥ ४१ ॥

प्राच्यां दिशि सहस्रांशोररुणेनारुणीकृतम् ।
तापनीयं यथा चक्रं भ्राजते रविमण्डलम् ॥ ४२ ॥

ततो रथाश्वांश्च मनुष्ययाना-
न्युत्सृज्य सर्वे कुरुपाण्डुयोधा ।
दिवाकरस्याभिमुखं जपन्त
सन्ध्यागताः प्राञ्जलयो बभूवुः ॥ ४३ ॥

## पञ्चदशदिनयुद्धम्

अ.१८७) उदिते तु सहस्रांशौ तप्तकाञ्चनसप्रभे ।
प्रकाशितेषु लोकेषु पुनर्युद्धमवर्तत ॥ ४४ ॥

अ.१८९) तस्मिंस्तथा वर्तमाने गजाश्वनरसंक्षये ।
दुःशासनो महाराज धृष्टद्युम्नमयोधयत् ॥ ४५ ॥
स तु दुःशासनं बाणैर्विमुखीकृत्य पार्षत ।
किरञ्छरसहस्राणि द्रोणमेवाभ्ययाद्रणे ॥ ४६ ॥
अभ्यपद्यत हार्दिक्यः कृतवर्मा त्वनन्तरम् ।
सोदर्याणां त्रयश्चैव त एनं पर्यवारयन् ॥ ४७ ॥
तं यमौ पृष्ठतोऽन्वैतां रक्षन्तौ पुरुषर्षभौ ।
द्रोणायाभिमुखं यान्त दीप्यमानमिवानलम् ॥ ४८ ॥
शुद्धात्मानः शुद्धवृत्ता राजन् स्वर्गपुरस्कृताः ।
आर्यं युद्धमकुर्वन्त परस्परजिगीषवः ॥ ४९ ॥
नात्र कर्णी न नालीको न लिप्तो न च बस्तिकः ।
न सूची कपिशो नैव न गवास्थिगजास्थिजः ॥ १८५० ॥
इषुरासीन्न संश्लिष्टो न पूतिर्न च जिह्मगः ।
ऋजून्येव विशुद्धानि सर्वे शस्त्राण्यधारयन् ॥ ५१ ॥
तदासीत्तुमुलं युद्धं सर्वदोषविवर्जितम् ।
चतुर्णां तव योधानां तैस्त्रिभिः पाण्डवैः सह ॥ ५२ ॥
दृष्ट्वा द्रोणाय पाञ्चाल्यं व्रजन्तं युद्धदुर्मदम् ।
यमाभ्यां तांश्च संसक्तांस्तदन्तरमुपाद्रवत् ।
दुर्योधनो महाराज किरञ्शोणितभोजनान् ॥ ५३ ॥
तं सात्यकिः शीघ्रतरं पुनरेवाभ्यवर्तत ॥ ५४ ॥
तौ परस्परमासाद्य समीपे कुरुमाधवौ ।
हसमानौ नृशार्दूलावभीतौ समसज्जताम् ॥ ५५ ॥
अथ दुर्योधनो राजा सात्यकिं समभाषत ।
प्रियं सखायं सततं गर्हयन् वृत्तमात्मनः ॥ ५६ ॥

धिक् क्रोधं धिक्सखे लोभं धिङ्मोहं धिगमर्षितम्।
धिगस्तु क्षात्रमाचारं धिगस्तु बलमौरसम्।
यत्र मामभिसंधत्से त्वां चाहं शिनिपुङ्गव ॥ ५७ ॥
त्वं हि प्राणैः प्रियतरो ममाहं च सदा तव ॥ ५८ ॥
स्मरामि तानि सर्वाणि बाल्यवृत्तानि यानि नौ।
तानि सर्वाणि जीर्णानि सांप्रतं नो रणाजिरे ॥ ५९ ॥
किमन्यत्क्रोधलोभाभ्या युद्धमेवाद्य सात्वत ॥ १८६० ॥
तं तथावादिनं तत्र सात्यकिः प्रत्यभाषत।
प्रहसन्विशिखांस्तीक्ष्णानुद्यम्य परमास्त्रवित् ॥ ६१ ॥
नेयं सभा राजपुत्र नाचार्यस्य निवेशनम्।
यत्र क्रीडितमस्माभिस्तदा राजन् समागतैः ॥ ६२ ॥
दुर्यो०— क्व सा क्रीडा गताऽस्माकं बाल्ये वै शिनिपुङ्गव।
क्व च युद्धमिदं भूयः कालो हि दुरतिक्रमः ॥ ६३ ॥
किं नु नो विद्यते कृत्यं धनेन धनलिप्सया।
यत्र युध्यामहे सर्वे धनलोभात्समागताः ॥ ६४ ॥
तं तथावादिनं तत्र राजानं माधवोऽब्रवीत्।
एवंवृत्तं सदा क्षात्रं युध्यन्तीह गुरूनपि ॥ ६५ ॥
यदि तेऽहं प्रियो राजन् जहि मां मा चिरं कृथाः।
त्वत्कृते सुकृतांल्लोकान् गच्छेयं भरतर्षभ ॥ ६६ ॥
या ते शक्तिर्बलं यच्च तत्क्षिप्रं मयि दर्शय।
नेच्छामि तदहं द्रष्टुं मित्राणां व्यसनं महत् ॥ ६७ ॥
इत्येवं व्यक्तमाभाष्य प्रतिभाष्य च सात्यकिः।
अभ्ययात्तूर्णमव्यग्रो दयां नाकुरुतात्मनि ॥ ६८ ॥
तमायान्तं महाबाहुं प्रत्यगृह्णात्तवात्मजः ॥ ६९ ॥
तस्य संदधतश्चेषुं संहितेषुं च कार्मुकम्।
आच्छिनत्सात्यकिस्तूर्णं शरैश्चैवाप्यवीविधत् ॥ १८७० ॥

स गाढविद्धो व्यथित. प्रत्यपायाद्रथान्तरे ।
दुर्योधनो महाराज दाशार्हशरपीडितः ॥ ७१ ॥

## युधिष्ठिरस्य असत्यकथनम्

(अ.१९०) पञ्चालानां ततो द्रोणोऽप्यकरोत्कदनं महत् ।
यथा क्रुद्धो रणे शक्रो दानवानां क्षयं पुरा ॥ ७२ ॥

वध्यमानेषु संग्रामे पञ्चालेषु महात्मना ।
उदीर्यमाणे द्रोणास्त्रे पाण्डवान् भयमाविशत् ॥ ७३ ॥

त्रस्तान्कुन्तीसुतान् दृष्ट्वा द्रोणसायकपीडितान् ।
मतिमाञ्श्रेयसे युक्त केशवोऽर्जुनमब्रवीत् ॥ ७४ ॥

नैष युद्धेन संग्रामे जेतुं शक्य कथञ्चन ।
सधनुर्धन्विनां श्रेष्ठो देवैरपि सवासवै. ॥ ७५ ॥

न्यस्तशस्त्रस्तु संग्रामे शक्यो हन्तुं भवेन्नृभि. ।
आस्थीयतां जये योगो धर्ममुत्सृज्य पाण्डवाः ॥ ७६ ॥

यथा नः संयुगे सर्वान्न हन्याद्रुक्मवाहन. ॥ ७७ ॥

अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम ।
तं हतं संयुगे कश्चिदस्मै शंसतु मानव ॥ ७८ ॥

एतन्नारोचयद्राजन् कुन्तीपुत्रो धनञ्जयः ।
अन्ये त्वरोचयन्सर्वे कृच्छ्रेण तु युधिष्ठिरः ॥ ७९ ॥

ततो भीमो महाबाहुरनीके स्वे महागजम् ।
जघान गदया राजन्नश्वत्थामानमित्युत ।
परप्रमथनं घोरं मालवस्येन्द्रवर्मणः ॥ १८८० ॥

भीमसेनस्तु सव्रीडमुपेत्य द्रोणमाहवे ।
अश्वत्थामा हत इति शब्दमुच्चैश्चकार ह ॥ ८१ ॥

भीमसेनवचः श्रुत्वा द्रोणस्तत्परमाप्रियम् ।
मनसा सन्नगात्रोऽभूद्यथा सैकतमम्भसि ॥ ८२ ॥

शङ्कमानः स तन्मिथ्या वीर्यज्ञः स्वसुतस्य वै।
हत स इति च श्रुत्वा नैव धैर्यादकम्पत॥ ८३॥

स पार्षतमभिद्रुत्य जिघांसुर्मृत्युमात्मन.।
अवाकिरत्सहस्रेण तीक्ष्णानां कङ्कपत्रिणाम्॥ ८४॥

तं विंशतिसहस्राणि पञ्चालानां नरर्षभाः।
तथा चरन्तं संग्रामे सर्वतोऽवाकिरञ्छरैः॥ ८५॥

विधूय तान्बाणगणान् पञ्चालानां महारथ.।
प्रादुश्चक्रे ततो द्रोणो ब्राह्ममस्त्रं परंतप॥ ८६॥

ते वध्यमाना. समरे भारद्वाजेन पार्थिवाः।
मेदिन्यामन्वकीर्यन्त वातनुन्ना इव द्रुमा.॥ ८७॥

हत्वा विंशतिसाहस्रान् पञ्चालाना रथव्रजान्।
पुन. पञ्चशतान्मत्स्यान् षट्सहस्रांश्च सृञ्जयान्॥ ८८॥
हस्तिनामयुतं हत्वा जघानाश्वायुतं पुन॥ ८९॥

क्षत्रियाणामभावाय दृष्ट्वा द्रोणमवस्थितम्।
ऋषयोऽभ्यागतास्तूर्णं हव्यवाहपुरोगमा.॥ १८९०॥

विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतम।
वसिष्ठ. कश्यपोऽत्रिश्च ब्रह्मलोकं निनीषव.॥ ९१॥

त एनमब्रुवन्सर्वे द्रोणमाहवशोभिनम्।
अधर्मतः कृतं युद्धं समयो निधनस्य ते॥ ९२॥

ब्रह्मास्त्रेण त्वया दग्धा अनस्त्रज्ञा नरा भुवि।
यदेतदीदृशं विप्र कृतं कर्म न साधु तत्॥ ९३॥

न्यस्यायुधं रणे विप्र द्रोण मा त्वं चिरं कृथा।
मा पापिष्ठतरं कर्म करिष्यसि पुनर्द्विज॥ ९४॥

इति तेषां वच. श्रुत्वा भीमसेनवचश्च तत्।
धृष्टद्युम्नं च संप्रेक्ष्य रणे स विमनाऽभवत्॥ ९५॥

सन्दिह्यमानो व्यथितः कुन्तीपुत्रं युधिष्ठिरम् ।
अहतं वा हतं वेति पप्रच्छ सुतमात्मनः ॥ ९६ ॥

स्थिरा बुद्धिर्हि द्रोणस्य न पार्थो वक्ष्यतेऽनृतम् ।
त्रयाणामपि लोकानामैश्वर्यार्थे कथञ्चन ॥ ९७ ॥

ततो निष्पाण्डवामुर्वी करिष्यन्तं युधां पतिम् ।
द्रोणं ज्ञात्वा धर्मराजं गोविन्दो व्यथितोऽब्रवीत् ॥ ९८ ॥

यद्यर्धदिवसं द्रोणो युध्यते मन्युमास्थित ।
सत्यं ब्रवीमि ते सेना विनाशं समुपैष्यति ॥ ९९ ॥

स भवांस्त्रातु नो द्रोणात्सत्याज्ज्यायोऽनृतं वच ।
अनृतं जीवितस्यार्थे वदन्न स्पृश्यतेऽनृतैः ॥ १००० ॥

तयो संवदतोरेवं भीमसेनोऽब्रवीदिदम् ॥ १ ॥
अश्वत्थामेति विख्यातो गजः शक्रगजोपमः ।
निहतो युधि विक्रम्य ततोऽहं द्रोणमब्रवम् ॥ २ ॥
अश्वत्थामा हतो ब्रह्मन्निवर्तस्वाहवादिति ।
नूनं नाश्रद्दधद्वाक्यमेष मे पुरुषर्षभ ॥ ३ ॥
स त्वं गोविन्दवाक्यानि मानयस्व जयैषिण ।
द्रोणाय निहतं शंस राजञ्शारद्वतीसुतम् ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा कृष्णवाक्यप्रचोदितः ।
भावित्वाच्च महाराज वक्तुं समुपचक्रमे ॥ ५ ॥
तमतथ्यभये मग्नो जये सक्तो युधिष्ठिरः ।
अश्वत्थामा हत इति शब्दमुच्चैश्चकार ह ॥ ६ ॥
अव्यक्तमब्रवीद्राजन् हत· कुञ्जर इत्युत ॥ ७ ॥
तस्य पूर्वं रथ पृथ्व्याश्चतुरङ्गुलमुच्छ्रितः ।
बभूवैवं च तेनोक्ते तस्य वाहाः स्पृशन्महीम् ॥ ८ ॥
युधिष्ठिरात्तु तद्वाक्यं श्रुत्वा द्रोणो महारथः ।
पुत्रव्यसनसन्तप्तो निराशो जीवितेऽभवत् ॥ ९ ॥

आगस्कृतमिवात्मानं पाण्डवानां महात्मनाम्।
ऋषिवाक्येन मन्वानः श्रुत्वा च निहतं सुतम्॥ १९१०॥
विचेताः परमोद्विग्नो धृष्टद्युम्नमवेक्ष्य च।
योद्धुं नाशक्नुवद्राजन् यथापूर्वमरिंदम॥ ११॥

## द्रोणस्य शरीरत्यागः, द्रोणस्य शिरश्छेदः

(अ.१९१) तं दृष्ट्वा परमोद्विग्नं शोकोपहतचेतसम्।
पञ्चालराजस्य सुतो धृष्टद्युम्नः समाद्रवत्॥ १२॥
य इष्ट्वा मनुजेन्द्रेण द्रुपदेन महामखे।
लब्धो द्रोणविनाशाय समिद्धाद्धव्यवाहनात्॥ १३॥
ततः प्रयत्नमातिष्ठदाचार्यस्तस्य वारणे।
न चास्यास्त्राणि राजेन्द्र प्रादुरासन्महात्मन॥ १४॥
(अ.१९२) हतौजा इव चाप्यासीद्भारद्वाजो महारथः।
प्रास्फुरन्नयनं चास्य वामबाहुस्तथैव च॥ १५॥
विमनाश्चाभवद्युद्धे दृष्ट्वा पार्षतमग्रतः॥ १६॥
ऋषीणां ब्रह्मवादानां स्वर्गस्य गमनं प्रति।
सुयुद्धेन ततः प्राणानुत्स्रष्टुमुपचक्रमे॥ १७॥
ततश्चतुर्दिशं सैन्यैर्द्रुपदस्याभिसंवृतः।
निर्दहन् क्षत्रियव्रातान् द्रोणः पर्यचरद्रणे॥ १८॥
ततो भीमो दृढक्रोधो द्रोणस्याश्लिष्य तं रथम्।
शनकैरिव राजेन्द्र द्रोणं वचनमब्रवीत्॥ १९॥
यदि नाम न युध्येरञ्शिक्षिता ब्रह्मबन्धवः।
स्वकर्मभिरसन्तुष्टा न स्म क्षत्रं क्षयं व्रजेत्॥ १९२०॥
अहिंसा सर्वभूतेषु धर्मं ज्यायस्तरं विदु।
तस्य च ब्राह्मणो मूलं भवांश्च ब्रह्मवित्तम॥ २१॥
एकस्यार्थे बहून्हत्वा पुत्रस्याधर्मविद्यया।
स्वकर्मस्थान्विकर्मस्थो न व्यपत्रपसे कथम्॥ २२॥

यस्यार्थे शस्त्रमादाय यमपेक्ष्य च जीवसि ।
स चाद्य पतितः शेते पृष्ठेनावेदितस्तव ।
धर्मराजस्य तद्वाक्यं नाभिशङ्कितुमर्हसि ॥ २३ ॥

एवमुक्तस्ततो द्रोणो भीमेनोत्सृज्य तद्धनुः ।
सर्वाण्यस्त्राणि धर्मात्मा हातुकामोऽभ्यभाषत ॥ २४ ॥

कर्ण कर्ण महेष्वास कृप दुर्योधनेति च ।
संग्रामे क्रियतां यत्नो ब्रवीम्येष पुनः पुनः ॥ २५ ॥

पाण्डवेभ्यः शिवं वोऽस्तु शस्त्रमभ्युत्सृजाम्यहम् ।
इति तत्र महाराज प्राक्रोशद्द्रौणिमेव च ॥ २६ ॥

उत्सृज्य च रणे शस्त्रं रथोपस्थे निविश्य च ।
अभयं सर्वभूतानां प्रददौ योगमीयिवान् ॥ २७ ॥

तस्य तच्छिद्रमाज्ञाय धृष्टद्युम्नः प्रतापवान् ।
सशरं तद्धनुर्घोरं संन्यस्याथ रथे ततः ।
खड्गी रथादवप्लुत्य सहसा द्रोणमभ्ययात् ॥ २८ ॥

द्रोणं तथागतं दृष्ट्वा धृष्टद्युम्नवशं गतम् ।
हाहाकारं भृशं चक्रुरहो धिगिति चाब्रुवन् ॥ २९ ॥

द्रोणोऽपि शस्त्राण्युत्सृज्य परमं साङ्ख्यमास्थितः ।
पुराणं पुरुषं विष्णुं जगाम मनसा परम् ॥ १९३० ॥

स्मरित्वा देवदेवेशमक्षरं परमं प्रभुम् ।
दिवमाक्रामदाचार्यः साक्षात्सद्भिर्दुराक्रमाम् ॥ ३१ ॥

वितुन्नाङ्गं शरव्रातैर्न्यस्तायुधमसृक्क्षरम् ।
धिक्कृतः पार्षतस्तं तु सर्वभूतैः परामृशत् ॥ ३२ ॥

तस्य मूर्धानमालम्ब्य गतसत्त्वस्य देहिनः ।
किञ्चिदब्रुवतः कायाद्विचकर्तासिना शिरः ॥ ३३ ॥

उक्तवांश्च महाबाहुः कुन्तीपुत्रो धनञ्जयः ।
जीवन्तमानयाचार्यं मा वधीर्द्रुपदात्मज ॥ ३४ ॥

न हन्तव्यो न हन्तव्य इति ते सैनिकाश्च ह।
उत्क्रोशन्नर्जुनश्चैव सानुक्रोशस्तमाव्रजत् ॥ ३५ ॥
क्रोशमानेऽर्जुने चैव पार्थिवेषु च सर्वशः।
धृष्टद्युम्नोऽवधीद्द्रोणं रथतल्पे नरर्षभम् ॥ ३६ ॥
शोणितेन परिक्लिन्नो रथाद्भूमिमथापतत्।
लोहिताङ्ग इवादित्यो दुर्धर्षः समपद्यत ॥ ३७ ॥
एवं तं निहतं सङ्ख्ये ददृशे सैनिको जनः ॥ ३८ ॥
धृष्टद्युम्नस्तु तद्राजन्भारद्वाजशिरोऽहरत्।
तावकानां महेष्वासः प्रमुखे तत्समाक्षिपत् ॥ ३९ ॥
पाण्डवास्तु जय लब्ध्वा परत्र च महद्यशः।
बाणशङ्खरवांश्चक्रुः सिंहनादांश्च पुष्कलान् ॥ १९४० ॥
भीमसेनस्ततो राजन् धृष्टद्युम्नश्च पार्षतः।
वरूथिन्यामनृत्येतां परिष्वज्य परस्परम् ॥ ४१ ॥
(अ.१९३) भास्करस्येव पतन समुद्रस्येव शोषणम्।
विपर्यासं यथा मेरोर्वासवस्येव निर्जयम् ॥ ४२ ॥
अमर्षणीयं तद्दृष्ट्वा भारद्वाजस्य पातनम्।
त्रस्तरूपतरा राजन् कौरवाः प्राद्रवन् भयात् ॥ ४३ ॥
द्रवमाणं बलं दृष्ट्वा पलायनकृतक्षणम्।
दुर्योधनं समासाद्य द्रोणपुत्रोऽब्रवीदिदम् ॥ ४४ ॥
किमियं द्रवते सेना त्रस्तरूपेव भारत।
त्वं चापि न यथा पूर्वं प्रकृतिस्थो नराधिप ॥ ४५ ॥
कस्मिन्निदं हते राजन् रथसिंहे बलं तव।
एतामवस्थां संप्राप्तं तन्ममाचक्ष्व कौरव ॥ ४६ ॥
तत्तु दुर्योधनः श्रुत्वा द्रोणपुत्रस्य भाषितम्।
घोरमप्रियमाख्यातुं नाशक्नोत्पार्थिवर्षभः ॥ ४७ ॥
अथ शारद्वतो राजन्नार्तिमाच्छन्पुनः पुनः।
शशंस द्रोणपुत्राय यथा द्रोणो निपातितः ॥ ४८ ॥

## अश्वत्थामकृतं नारायणास्त्रमोक्षणम्

(अ.१९५) छद्मना निहतं श्रुत्वा पितरं पापकर्मणा।
बाष्पेणापूर्यत द्रौणी रोषेण च नरर्षभ ॥ ४९ ॥

अश्रुपूर्णे ततो नेत्रे व्यपमृज्य पुनः पुनः।
उवाच कोपान्निःश्वस्य दुर्योधनमिदं वचः ॥ १९५० ॥

युद्धेष्वपि प्रवृत्ताना ध्रुवं जयपराजयौ।
न शोच्यः पुरुषव्याघ्र यस्तदा निधनं गतः ॥ ५१ ॥

यत्तु धर्मप्रवृत्तः सन् केशग्रहणमाप्तवान्।
पश्यतां सर्वसैन्यानां तन्मे मर्माणि कृन्तति ॥ ५२ ॥

मयि जीवति यत्तात· केशग्रहमवाप्तवान्।
कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिण· स्पृहाम् ॥ ५३ ॥

कामात्क्रोधादविज्ञानाद्धर्षाद्बाल्येन वा पुनः।
निधर्मकाणि कुर्वन्ति तथा परिभवन्ति च ॥ ५४ ॥

तदिदं पार्षतेनेह महदाधर्मिकं कृतम्।
तस्यानुबन्धं द्रष्टाऽसौ धृष्टद्युम्नः सुदारुणम् ॥ ५५ ॥

शपे सत्येन कौरव्य इष्टापूर्तेन चैव ह।
अहत्वा सर्वपञ्चालान् जीवेयं न कथञ्चन ॥ ५६ ॥

धृष्टद्युम्नं च समरे हन्ताऽहं पापकारिणम्।
कर्मणा येन तेनेह मृदुना दारुणेन च ॥ ५७ ॥

पित्रा तु मम साऽवस्था प्राप्ता निर्बन्धुना यथा।
मयि शैलप्रतीकाशे पुत्रे शिष्ये च जीवति ॥ ५८ ॥

धिङ् ममास्त्राणि दिव्यानि धिग्बाहू धिक् पराक्रमम्।
यं स्म द्रोणः सुतं प्राप्य केशग्रहमवाप्तवान् ॥ ५९ ॥

स तथाऽहं करिष्यामि यथा भरतसत्तम।
परलोकगतस्यापि भविष्याम्यनृणः पितुः ॥ १९६० ॥

सोऽहं नारायणास्त्रेण महता शत्रुतापनः।
शत्रून्विध्वंसयिष्यामि कदर्थीकृत्य पाण्डवान् ॥ ६१ ॥
तथोक्त्वा द्रोणपुत्रस्तु वार्युपस्पृश्य भारत।
प्रादुश्चकार तद्दिव्यमस्त्रं नारायणं तदा ॥ ६२ ॥
(अ.१९९)प्रादुरासंस्ततो बाणा दीप्ताग्राः खे सहस्रशः।
पाण्डवान्क्षपयिष्यन्तो दीप्तास्या· पन्नगा इव ॥ ६३ ॥
ते दिशः खं च सैन्यं च समावृण्वन्महाहवे।
मुहूर्ताद्भास्करस्येव लोके राजन् गभस्तयः ॥ ६४ ॥
यथा हि शिशिरापाये दहेत्कक्षं हुताशनः।
तथा तदस्त्रं पाण्डूनां ददाह ध्वजिनीं प्रभो ॥ ६५ ॥
आपूर्यमाणेनास्त्रेण सैन्ये क्षीयति च प्रभो।
जगाम परमं त्रास धर्मपुत्रो युधिष्ठिर· ॥ ६६ ॥
वासुदेवोऽपि धर्मात्मा दाशार्हस्त्वरितस्ततः।
निवार्य सैन्यं बाहुभ्यामिदं वचनमब्रवीत् ॥ ६७ ॥
शीघ्र न्यस्यत शस्त्राणि वाहेभ्यश्चावरोहत।
एष योगोऽत्र विहितः प्रतिषेधे महात्मना ॥ ६८ ॥
द्विपाश्वस्यन्दनेभ्यश्च क्षितिं सर्वेऽवरोहत।
एवमेतन्न वो हन्यादस्त्रं भूमौ निरायुधान् ॥ ६९ ॥
यस्त्वेतत्प्रतियोत्स्यन्ति मनसाऽपीह केचन।
निहनिष्यति तान् सर्वान् रसातलगतानपि ॥ १९७० ॥
तत उत्स्रष्टुकामांस्तानस्त्राण्यालक्ष्य पाण्डव·।
भीमसेनोऽब्रवीद्राजन्निदं संहर्षयन्वचः ॥ ७१ ॥
न कथञ्चन शस्त्राणि मोक्तव्यानीह केनचित्।
अहमावारयिष्यामि द्रोणपुत्रास्त्रमाशुगै ॥ ७२ ॥

यदि नारायणास्त्रस्य प्रतियोद्धा न विद्यते।
अद्यैतत्प्रतियोत्स्यामि पश्यत्सु कुरुपाण्डुषु ॥ ७३ ॥

अर्जुनार्जुन बीभत्सो न न्यस्यं गाण्डिवं त्वया।
शशाङ्कस्येव ते पङ्को नैर्मल्यं पातयिष्यति ॥ ७४ ॥

अर्जुन०– भीम नारायणास्त्रे मे गोषु च ब्राह्मणेषु च।
एतेषु गाण्डिव न्यस्यमेतद्धि व्रतमुत्तमम् ॥ ७५ ॥

सञ्जय०– तत शस्त्राणि ते सर्वे समुत्सृज्य महीतले।
अवारोहन् रथेभ्यश्च हस्त्यश्वेभ्यश्च सर्वशः ॥ ७६ ॥

तेषु निक्षिप्तशस्त्रेषु वाहनेभ्यश्च्युतेषु च।
तदस्त्रवीर्यं विपुलं भीममूर्धन्यथापतत् ॥ ७७ ॥

## कृष्णार्जुनकृतं भीमरक्षणम्

(अ.२००) भीमसेनं समाकीर्णं दृष्ट्वाऽस्त्रेण धनञ्जय.।
तेजसः प्रतिघातार्थं वारुणेन समावृणोत् ॥ ७८ ॥

साश्वसूतरथो भीमो द्रोणपुत्रास्त्रसंवृतः।
अग्नावग्निरिव न्यस्तो ज्वालामाली सुदुर्दशः ॥ ७९ ॥

विकीर्णमस्त्रं तद्दृष्ट्वा तथा भीमरथं प्रति।
उदीर्यमाणं द्रौणिं च निष्प्रतिद्वन्द्वमाहवे ॥ १९८० ॥

अर्जुनो वासुदेवश्च त्वरमाणौ महाद्युती।
अवप्लुत्य रथाद्वीरौ भीममाद्रवतां ततः ॥ ८१ ॥

ततस्तद्द्रोणपुत्रस्य तेजोऽस्त्रबलसंभवम्।
विगाह्य तौ सुबलिनौ मायथाऽविशतां तथा ॥ ८२ ॥

न्यस्तशस्त्रौ ततस्तौ तु नादहत्सोऽस्त्रजोऽनलः।
वारुणास्त्रप्रयोगाच्च वीर्यवत्त्वाच्च कृष्णयोः ॥ ८३ ॥

ततश्चक्रुपतुर्भीमं सर्वशस्त्रायुधानि च।
नारायणास्त्रशान्त्यर्थं नरनारायणौ बलात् ॥ ८४ ॥

यदाऽपकृष्टः स रथान्न्यासितश्चायुधं भुवि।
ततो नारायणास्त्रं तत् प्रशान्तं शत्रुतापनम् ॥ ८५ ॥

(अ.२०१) ततो द्रौणिर्धनुस्त्यक्त्वा रथात्प्रस्कन्द्य वेगित ।
वरूथिनीमभिप्रेक्ष्य ह्यवहारमकारयत् ॥ ८६ ॥

ततः प्रत्यवहारोऽभूत्पाण्डवानां विशां पते।
कौरवाणां च दीनानां द्रोणे युधि निपातिते ॥ ८७ ॥

युद्धं कृत्वा दिनान्पञ्च द्रोणो हत्वा वरूथिनीम्।
ब्रह्मलोकं गतो राजन् ब्राह्मणो वेदपारगः ॥ १९८८ ॥

भीष्मपर्वतः श्लोकाः ॥ ३६८० ॥
आदिपर्वतः श्लोकाः ॥ ८६७५ ॥

इति श्रीमहाभारतसारे द्रोणपर्व समाप्तम्।

---

# महाभारतसारः

## ८. कर्णपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥

### कर्णवधश्रवणेन धृतराष्ट्रविलापः

(अ. १) ततो द्रोणे हते राजन् दुर्योधनमुखा नृपाः ।
वैश०- ते द्रोणमनुशोचन्त स्वानि वेश्मानि भेजिरे ॥ १ ॥

ते वेश्मस्वपि कौरव्य पृथ्वीशा नाप्नुवन्सुखम् ।
चिन्तयन्त: क्षयं तीव्रं दु:खशोकसमन्विता ॥ २ ॥

विशेषतः सूतपुत्रो राजा चैव सुयोधन ।
दु:शासनश्च शकुनिः सौबलश्च महाबलः ॥ ३ ॥

उषितास्ते निशां तां तु दुर्योधननिवेशने ।
चिन्तयन्तः परिक्लेशान् पाण्डवानां महात्मनाम् ॥ ४ ॥

यत्तद्द्यूते परिक्लिष्टा कृष्णा चानायिता सभाम् ।
तत्स्मरन्तोऽनुशोचन्तो भृशमुद्विग्नचेतसः ॥ ५ ॥

तथा तु संचिन्तयतां तान् क्लेशान् द्यूतकारितान् ।
दु:खेन क्षणदा राजन् जगामाब्दशतोपमा ॥ ६ ॥

तत प्रभाते विमले स्थिता दिष्टस्य शासने ।
चक्रुरावश्यकं सर्वे विधिदिष्टेन कर्मणा ॥ ७ ॥

ते कृत्वाऽवश्यकार्याणि समाश्वस्य च भारत ।
योगमाज्ञापयामासुर्युद्धाय च विनिर्ययुः ।
कर्णं सेनापतिं कृत्वा कृतकौतुकमङ्गलाः ॥ ८ ॥

तथैव पाण्डवा राजन् कृतपूर्वाह्णिकक्रिया ।
शिविरान्निर्ययुस्तूर्णं युद्धाय कृतनिश्चया· ॥ ९ ॥

तत प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
कुरूणां पाण्डवानां च परस्परजयैषिणाम् ॥ १० ॥

तयोर्द्वौ दिवसौ युद्धं कुरुपाण्डवसेनयो· ।
कर्णे सेनापतौ राजन् बभूवाद्भुतदर्शनम् ॥ ११ ॥

तत शत्रुक्षयं कृत्वा सुमहान्तं रणे वृष· ।
पश्यतां धार्तराष्ट्राणां फाल्गुनेन निपातित ॥ १२ ॥

ततस्तु सञ्जयः सर्वं गत्वा नागपुरं द्रुतम् ।
आचष्ट धृतराष्ट्राय यद्वृत्तं कुरुजाङ्गले ॥ १३ ॥

(अ. ८) श्रुत्वा कर्णस्य निधनमश्रद्धेयमिवाद्भुतम् ।
भूतसम्मोहन भीमं मेरोः संसर्पणं यथा ॥ १४ ॥

दिवः प्रपतनं भानोरुर्व्यामिव महाद्युतेः ।
शोकाग्निना दह्यमानो धम्यमान इवाऽशये ॥ १५ ॥

विस्रस्ताङ्गः श्वसन् दीनो हा हेत्युक्त्वा सुदुःखितः ।
विललाप महाराज धृतराष्ट्रोऽम्बिकासुत· ॥ १६ ॥

धृत०– यस्य ज्यातलशब्देन शरवृष्टिरवेण च ।
रथाश्वनरमातङ्गा नावतिष्ठन्ति संयुगे ॥ १७ ॥

यमाश्रित्य महाबाहुं विद्विषां जयकाङ्क्षया ।
दुर्योधनोऽकरोद्वैरं पाण्डुपुत्रैर्महारथै ॥ १८ ॥

स कथ रथिनां श्रेष्ठ· कर्ण· पार्थेन संयुगे ।
निहत· पुरुषव्याघ्रः प्रसह्यासह्यविक्रमः ॥ १९ ॥

शार्ङ्गगाण्डीवधन्वानौ सहितावपराजितौ ।
अहं दिव्याद्रथादेक· पातयिष्यामि संयुगे ॥ २० ॥

इति यः सततं मन्दमवोचल्लोभमोहितम् ।
दुर्योधनमवाचीन राज्यकामुकमातुरम् ॥ २१ ॥

समुद्वीक्ष्य मुखं राज्ञो बालार्कसमवर्चसम् ।
आचार्यपुत्रो मेधावी वाक्यज्ञो वाक्यमाददे ॥ ३५ ॥

रागो योगस्तथा दाक्ष्यं नयश्चेत्यर्थसाधकाः ।
उपायाः पण्डितैः प्रोक्तास्ते तु दैवमुपाश्रिताः ॥ ३६ ॥

न त्वेव कार्यं नैराश्यमस्माभिर्विजयं प्रति ।
सुनीतैरिह सर्वार्थैर्दैवमप्यनुलोम्यते ॥ ३७ ॥

ते वयं प्रवरं नृणां सर्वैर्गुणगणैर्युतम् ।
कर्णमेवाभिषेक्ष्यामः सैनापत्येन भारत ॥ ३८ ॥

कर्णं सेनापतिं कृत्वा प्रमथिष्यामहे रिपून् ॥ ३९ ॥

एतदाचार्यतनयाच्छ्रुत्वा राजंस्तवात्मजः ।
दुर्योधनो महाराज राधेयमिदमब्रवीत् ॥ ४० ॥

कर्ण जानामि ते वीर्यं सौहृदं परमं मयि ।
भवानेव तु नः शक्तो विजयाय न संशयः ॥ ४१ ॥

देवतानां यथा स्कन्दः सेनानीः प्रभुरव्ययः ।
तथा भवानिमां सेनां धार्तराष्ट्रीं बिभर्तु वै ॥ ४२ ॥

सञ्जय०— आशा बलवती राजन् पुत्रस्य तव याऽभवत् ।
हते भीष्मे च द्रोणे च कर्णो जेष्यति पाण्डवान् ॥ ४३ ॥

तामाशां हृदये कृत्वा कर्णमेवं तदाऽब्रवीत् ।
सूतपुत्र न ते पार्थः स्थित्वाऽग्रे संयुयुत्सति ॥ ४४ ॥

कर्ण०— उक्तमेतन्मया पूर्वं गान्धारे तव सन्निधौ ।
जेष्यामि पाण्डवान् सर्वान् सपुत्रान् सजनार्दनान् ॥ ४५ ॥

सेनापतिर्भविष्यामि तवाहं नात्र संशयः ।
स्थिरो भव महाराज जितान् विद्धि च पाण्डवान् ॥ ४६ ॥

ततोऽभिषिषिचुः कर्णं विधिदृष्टेन कर्मणा ।
दुर्योधनमुखा राजन् राजानो विजयैषिणः ॥ ४७ ॥

कर्णोऽपि राजन् संप्राप्य सैन्यापत्यमरिन्दमः।
योगमाज्ञापयामास सूर्यस्योदयन प्रति ॥ ४८ ॥

(अ. ११) ततः श्वेतपताकेन बलाकावर्णवाजिना।
रथेनाभिपताकेन सूतपुत्रोऽभ्यदृश्यत ॥ ४९ ॥

दृष्ट्वा कर्णं महेष्वासं रथस्थं रथिनां वरम्।
न भीष्मव्यसनं केचिन्नापि द्रोणस्य मारिष।
नान्येषां पुरुषव्याघ्र मेनिरे तत्र कौरवाः ॥ ५० ॥

व्यूहं व्यूह्य महेष्वासो मकरं शत्रुतापनः।
प्रत्युद्ययौ तथा कर्णः पाण्डवान् विजिगीषया ॥ ५१ ॥

तथा प्रयाते राजेन्द्र कर्णे नरवरोत्तमे।
धनञ्जयमभिप्रेक्ष्य धर्मराजोऽब्रवीदिदम् ॥ ५२ ॥

पश्य पार्थ यथा सेना धार्तराष्ट्रीह संयुगे।
कर्णेन विहिता वीर गुप्ता वीरैर्महारथैः ॥ ५३ ॥

हतवीरतमा ह्येषा धार्तराष्ट्री महाचमूः।
फल्गुशेषा महाबाहो तृणैस्तुल्या मता मम ॥ ५४ ॥

एको ह्यत्र महेष्वासः सूतपुत्रो विराजते।
तं हत्वाऽद्य महाबाहो विजयस्तव फाल्गुन ॥ ५५ ॥

उद्धृतश्च भवेच्छल्यो मम द्वादशवार्षिकः।
एवं ज्ञात्वा महाबाहो व्यूहं व्यूह यथेच्छसि ॥ ५६ ॥

भ्रातुरेतद्वचः श्रुत्वा पाण्डवः श्वेतवाहनः।
अर्धचन्द्रेण व्यूहेन प्रत्यव्यूहत तां चमूम् ॥ ५७ ॥

उभे सैन्ये महाराज प्रहृष्टनरसङ्कुले।
योद्धुकामे स्थिते राजन् हन्तुमन्योन्यमोजसा ॥ ५८ ॥

ततः प्रववृते युद्धं नरवारणवाजिनाम्।
रथानां च महाराज अन्योऽन्यमभिजिघ्नताम् ॥ ५९ ॥

(अ. १२) रथाश्वेभनराणां तु नराश्वेभरथै कृतम्।
पाणिपादैश्च शस्त्रैश्च रथैश्च कदनं महत्॥ ६०॥
तस्य सैन्यस्य महतो महामात्रवरैर्वृत.।
मध्ये वृकोदरोऽभ्यायात्त्वदीयान्नागधूर्गतः॥ ६१॥
तं दृष्ट्वा द्विरदं दूरात्क्षेमधूर्तिर्द्विपस्थित ।
आह्वयन्नभिदुद्राव प्रमना प्रमनस्तरम्॥ ६२॥
समुद्यतकराभ्यां तौ द्विपाभ्यां कृतिनावुभौ।
वातोद्धूतपताकाभ्यां युयुधाते महाबलौ॥ ६३॥
तावन्योन्यस्य धनुषी छित्त्वाऽन्योन्य विनेदतु ॥ ६४॥
क्षेमधूर्तिस्तदा भीमं तोमरेण स्तनान्तरे।
निर्बिभेदातिवेगेन षड्भिश्चाप्यपरैर्नदन्॥ ६५॥
तस्य भीमोऽपि द्विरदं गदया समपोथयत्॥ ६६॥
तस्मात्प्रमथितान्नागात् क्षेमधूर्तिमवप्लुतम्।
उद्यतायुधमायान्तं गदयाऽहन् वृकोदर ॥ ६७॥
तं हतं नृपतिं दृष्ट्वा कुलूतानां यशस्करम्।
प्राद्रवद्व्यथिता सेना त्वदीया भरतर्षभ॥ ६८।

(अ. १४) श्रुतकर्मा ततो राजंश्चित्रसेन महीपतिम्।
आजघ्ने समरे क्रुद्ध पञ्चाशद्भिः शिलीमुखै ॥ ६९।
अभिसारस्तु तं राजन्नवभिर्नतपर्वभिः।
श्रुतकर्माणमाहत्य सूतं विव्याध पञ्चभि ॥ ७०॥
श्रुतकर्मा ततो राजञ्शत्रुणा समभिद्रुत.।
शत्रुसंवारणं क्रुद्धो द्विधा चिच्छेद कार्मुकम्॥ ७१॥
ततोऽपरेण भल्लेन तीक्ष्णेन निशितेन च।
जहार सशिरस्त्राणं शिरस्तस्य महात्मन ॥ ७२॥
राजानं निहतं दृष्ट्वा तेऽभिसारं तु मारिष।
अभ्यद्रवन्त वेगेन चित्रसेनस्य सैनिका ॥ ७३॥

प्रतिविन्ध्यस्ततश्चित्रं भित्त्वा पञ्चभिराशुगैः ।
शक्तिं चिक्षेप चित्राय स्वर्णदण्डामलङ्कृताम् ॥ ७४ ॥

तामापतन्तीं जग्राह चित्रो राजन् महामनाः ।
ततस्तामेव चिक्षेप प्रतिविन्ध्याय पार्थिवः ॥ ७५ ॥

प्रतिविन्ध्यस्ततो राजंस्तोमरं हेमभूषितम् ।
प्रेषयामास संक्रुद्धश्चित्रस्य वधकाङ्क्षया ॥ ७६ ॥

स पपात तदा राजा तोमरेण समाहतः ।
प्रसार्य विपुलौ बाहू पीनौ परिघसन्निभौ ॥ ७७ ॥

चित्रं सम्प्रेक्ष्य निहतं तावका रणशोभिनः ।
विप्रकीर्यन्त सहसा वातनुन्ना घना इव ॥ ७८ ॥

विप्रद्रुते बले तस्मिन्वध्यमाने समन्ततः ।
द्रौणिरेकोऽभ्ययात्तूर्णं भीमसेनं महाबलम् ॥ ७९ ॥

(अ. १५) ततः शरसहस्रेण सुप्रयुक्तेन पाण्डवः ।
द्रोणपुत्रमवच्छाद्य सिंहनादममुञ्चत ॥ ८० ॥

ततः शरशतैर्द्रौणिरर्दयामास पाण्डवम् ।
न चैनं कम्पयामास मातरिश्वेव पर्वतम् ॥ ८१ ॥

तथैव पाण्डवो युद्धे द्रौणिं शरशतैः शितैः ।
नाकम्पयत संहृष्टो वार्योघ इव पर्वतम् ॥ ८२ ॥

ततः क्रुद्धौ महाराज बाणौ गृह्य महाहवे ।
उभौ चिक्षिपतुस्तूर्णमन्योन्यस्य वधैषिणौ ॥ ८३ ॥

तौ परस्परवेगाच्च शराभ्यां च भृशाहतौ ।
निपेततुर्महावीर्यौ रथोपस्थे तयोस्तदा ॥ ८४ ॥

ततस्तु सारथिर्ज्ञात्वा द्रोणपुत्रमचेतनम् ।
अपोवाह रणाद्राजन् सर्वसैन्यस्य पश्यतः ॥ ८५ ॥

तथैव पाण्डवं राजन् विह्वलन्तं मुहुर्मुहुः ।
अपोवाह रथेनाजौ विशोकः शत्रुतापनम् ॥ ८६ ॥

(अ. १६) पार्थः संशप्तकबलं प्रविश्यार्णवसन्निभम्।
व्यक्षोभयदमित्रघ्नो महावात इवार्णवम् ॥ ८७ ॥

शिरांस्युन्मथ्य वीराणां शितैर्भल्लैर्धनञ्जयः।
पूर्णचन्द्राभवक्त्राणि स्वक्षिभ्रूदशनानि च।
सन्तस्तार क्षितिं क्षिप्रं विनालैर्नलिनैरिव ॥ ८८ ॥

सुवृत्तानायतान् पुष्टांश्चन्दनागुरुभूषितान्।
सायुधान्सतलत्रांश्च पञ्चास्योरगसन्निभान्।
बाहून् क्षुरैरमित्राणां चिच्छेद समरेऽर्जुनः ॥ ८९ ॥

विस्मापयन्प्रेक्षणीयं द्विषतां भयवर्धनम्।
महारथसहस्रस्य समं कर्माकरोज्जयः ॥ ९० ॥

सिद्धदेवर्षिसघाश्च चारणाश्चापि तुष्टुवुः ॥ ९१ ॥

देवदुन्दुभयो नेदुः पुष्पवर्षाणि चापतन्।
केशवार्जुनयोर्मूर्ध्नि प्राह वाक् चाशरीरिणी ॥ ९२ ॥

चन्द्राग्न्यनिलसूर्याणां कान्तिदीप्तिबलद्युतीः।
यौ सदा बिभ्रतुर्वीराविमौ तौ केशवार्जुनौ ॥ ९३ ॥

इत्येतन्महदाश्चर्यं दृष्ट्वा श्रुत्वा च भारत।
अश्वत्थामा सुसंयत्तः कृष्णावभ्यद्रवद्रणे ॥ ९४ ॥

अथ पाण्डवमस्यन्तममित्रघ्नकराञ्छरान्।
सेषुणा पाणिनाऽऽहूय प्रहसन् द्रौणिरब्रवीत् ॥ ९५ ॥

यदि मां मन्यसे वीर प्राप्तमर्हमिहातिथिम्।
ततः सर्वात्मना त्वद्य युद्धातिथ्यं प्रयच्छ मे ॥ ९६ ॥

तमामन्त्र्यैकमनसं केशवो द्रौणिमब्रवीत्।
अश्वत्थामन् स्थिरो भूत्वा प्रहराशु सहस्व च ॥ ९७ ॥

निर्वेष्टुं भर्तृपिण्डं हि कालोऽयमुपजीविनाम्।
सूक्ष्मो विवादो विप्राणां स्थूलौ क्षात्रौ जयाजयौ ॥ ९८ ॥

यामभ्यर्थयसे मोहाद्दिव्यां पार्थस्य सत्क्रियाम्।
तामाप्तुमिच्छन् युध्यस्व स्थिरो भूत्वाऽद्य पाण्डवम् ॥९९॥

इत्युक्तो वासुदेवेन पाण्डवेऽस्त्राण्यवासृजत्।
अश्वत्थामाभिरूपाय गृहानतिथये यथा ॥ १०० ॥

अथ संशप्तकांस्त्यक्त्वा पाण्डवो द्रौणिमभ्ययात्।
अपांक्तेयानिव त्यक्त्वा दाता पांक्तेयमर्थिनम् ॥ १०१ ॥

(अ. १७) ततः समभवद्युद्धं शुक्राङ्गिरसवर्चसोः।
नक्षत्रमभितो व्योम्नि शुक्राङ्गिरसयोरिव ॥ १०२ ॥

ततोऽविध्यद्भ्रुवोर्मध्ये नाराचेनार्जुनो भृशम्।
स तेन विबभौ द्रौणिरूर्ध्वरश्मिर्यथा रविः ॥ १०३ ॥

अथ कृष्णौ शरशतैरश्वत्थाम्नाऽर्दितौ भृशम्।
स्वरश्मिजालविकचौ युगान्तार्काविवासतुः ॥ १०४ ॥

अथार्जुनं प्राह दशार्हनाथः
प्रमाद्यसे किं जहि योधमेतम्।
कुर्याद्धि दोषं समुपेक्षितोऽयं
कष्टो भवेद्व्याधिरिवाक्रियावान् ॥ १०५ ॥

तथेति चोक्त्वाऽच्युतमप्रमादी
द्रौणिं प्रयत्नादिषुभिस्ततक्ष ॥ १०६ ॥

भुजौ वरौ चन्दनसारदिग्धौ
वक्षः शिरोऽथाप्रतिमौ तथोरू।
गाण्डीवमुक्तैः कुपितोऽविकर्णै-
र्द्रौणिं शरैः संयति निर्बिभेद ॥ १०७ ॥

छित्त्वा तु रश्मींस्तुरगानविध्य-
त्ते तं रणादूहुरतीव दूरम्।
स तैर्हृतो वातजवैस्तुरङ्गै-
र्द्रौणिर्दृढं पार्थशराभिभूतः ॥ १०८ ॥

इयेष नावृत्य पुनस्तु योद्धुं
पार्थेन सार्धं मतिमान्विमृश्य।
जानञ्जयं नियतं वृष्णिवीरे
धनञ्जये चाङ्गिरसां वरिष्ठः ॥ १०९ ॥

नियम्य स हयान् द्रौणिः समाश्वास्य च मारिष।
रथाश्वनरसंबाधं कर्णस्य प्राविशद्बलम् ॥ ११० ॥

प्रतीपकारिणि रणादश्वत्थाम्नि हृते हयैः।
मन्त्रौषधिक्रियायोगैर्व्याधौ देहादिवाहृते ॥ १११ ॥

संशप्तकानभिमुखौ प्रयातौ केशवार्जुनौ।
वातोद्धूतपताकेन स्यन्दनेनौघनादिना ॥ ११२ ॥

(अ.१८) अथोत्तरेण पाण्डूनां सेनायां ध्वनिरुत्थितः।
रथनागाश्वपत्तीनां दण्डधारेण वध्यताम् ॥ ११३ ॥

निवर्तयित्वा तु रथं केशवोऽर्जुनमब्रवीत्।
वाहयन्नेव तुरगान् गरुडानिलरंहस ॥ ११४ ॥

मागधोऽप्यतिविक्रान्तो द्विरदेन प्रमाथिना।
भगदत्तादनवरः शिक्षया च बलेन च ॥ ११५ ॥

एनं हत्वा निहन्तासि पुनः संशप्तकानिति।
वाक्यान्ते प्रापयत् पार्थं दण्डधारान्तिकं प्रति ॥ ११६ ॥

ततोऽर्जुनं द्वादशभिः शरोत्तमै-
र्जनार्दनं षोडशभिः समार्पयत्।
स दण्डधारस्तुरगांस्त्रिभिस्त्रिभि-
स्ततो ननाद प्रजहास चासकृत् ॥ ११७ ॥

ततोऽस्य पार्थः सगुणेषुकार्मुकं
चकर्त भल्लैर्ध्वजमप्यलङ्कृतम् ॥ ११८ ॥

अथास्य बाहू द्विपहस्तसन्निभौ
शिरश्च पूर्णेन्दुनिभाननं त्रिभिः।
क्षुरैः प्रचिच्छेद सहैव पाण्डव-
स्ततो द्विपं बाणशतैः समार्पयत् ॥ ११९ ॥

स वेदनार्तोऽम्बुदनिःस्वनो नदं-
श्चरन् भ्रमन् प्रस्खलितान्तरोऽद्रवत्।
पपात रुग्णः सनियन्तृकस्तथा
यथा गिरिर्वज्रविदारितस्तथा ॥ १२० ॥

हते रणे भ्रातरि दण्ड आव्रज-
ज्जिघांसुरिन्द्रावरज धनञ्जयम्।
स तोमरैरर्ककरप्रभैस्त्रिभि-
र्जनार्दनं पञ्चभिरर्जुनं शितैः।
समर्पयित्वा विननाद नर्दयं-
स्ततोऽस्य बाहू निचकर्त पाण्डवः ॥ १२१ ॥

क्षुरप्रकृत्तौ सुभृशं सतोमरौ
शुभाङ्गदौ चन्दनरूषितौ भुजौ।
गजात् पतन्तौ युगपद्विरेजतु-
र्यथाद्रिशृङ्गाद्रुचिरौ महोरगौ ॥ १२२ ॥

तथाऽर्धचन्द्रेण हतं किरीटिना
पपात दण्डस्य शिरः क्षितिं द्विपात्।
स शोणितार्द्रो निपतन् विरेजे
दिवाकरोऽस्तादिव पश्चिमां दिशम् ॥ १२३ ॥

(अ.१९) प्रत्यागत्य पुनर्जिष्णुर्जघ्ने संशप्तकान् बहून्।
वक्रातिवक्रगमनादङ्गारक इव ग्रहः ॥ १२४ ॥

पार्थबाणहता राजन्नराश्वरथकुञ्जराः।
विचेलुर्बभ्रमुर्नेशुः पेतुर्मम्लुश्च भारत ॥ १२५ ॥

धुर्यान् धुर्यगतान् सूतान् ध्वजांश्चापानि सायकान्
पाणीन् पाणिगतं शस्त्रं बाहूनपि शिरांसि च ॥ १२६ ॥
भल्लैः क्षुरैरर्धचन्द्रैर्वत्सदन्तैश्च पाण्डव ।
चिच्छेदामित्रवीराणां समरे प्रतियुध्यताम् ॥ १२७ ॥
अथाब्रवीद्वासुदेवः पार्थ किं क्रीडसेऽनघ ।
संशप्तकान् प्रमथ्यैनांस्ततः कर्णवधे त्वर ॥ १२८ ॥
तथेत्युक्त्वाऽर्जुनः कृष्णं शिष्टान्संशप्तकांस्तदा ।
आक्षिप्य शस्त्रेण बलाद्दैत्यानिन्द्र इवावधीत् ॥ १२९ ॥
(अ.२०) भीष्म-द्रोण-कृप-द्रौणि-कर्णार्जुन-जनार्दनान् ।
सञ्जय०-समाप्तविद्यान् धनुषि श्रेष्ठान्यान् मन्यसे रथान् ॥ १३० ॥
यो ह्याक्षिपति वीर्येण सर्वानेतान्महारथान् ।
स पाण्ड्यो नृपतिः श्रेष्ठः सर्वशस्त्रभृतां वरः ।
कर्णस्यानीकमहनत् पराभूत इवान्तकः ॥ १३१ ॥
चतुरङ्गं बलं बाणैर्निघ्नन्तं पाण्ड्यमाहवे ।
दृष्ट्वा द्रौणिरसम्भ्रान्तमसम्भ्रान्तस्ततोऽभ्ययात् ॥ १३२ ॥
मर्मभेदिभिरत्युग्रैर्बाणैरग्निशिखोपमैः ।
स्मयन्नभ्यहनद्द्रौणिः पाण्ड्यमाचार्यसत्तम ॥ १३३ ॥
अष्टावष्टगवान्यूहुः शकटानि यदायुधम् ।
अह्नस्तदष्टभागेन द्रौणिश्चिक्षेप मारिष ॥ १३४ ॥
द्रौणिपर्जन्यमुक्तां तां बाणवृष्टिं सुदुःसहाम् ।
वायव्यास्त्रेण संक्षिप्य मुदा पाण्ड्यानिलोऽनुदत् ॥ १३५ ॥
तस्य नानदतः केतुं चन्दनागुरुरूषितम् ।
मलयप्रतिमं द्रौणिश्छित्त्वाऽश्वांश्चतुरोऽहनत् ॥ १३६ ॥
हतेश्वरो दन्तिवरः सुकल्पित-
स्त्वराभिसृष्टः प्रतिशब्दगो बली ।
तमाद्रवद्द्रौणिशराहतस्त्वरन्
जवेन कृत्वा प्रतिहस्तिगर्जितम् ॥ १३७ ॥

तं वारणं वारणयुद्धकोविदो
द्विपोत्तमं पर्वतसानुसन्निभम्।
समभ्यतिष्ठन्मलयध्वजस्त्वर-
न्यथाद्रिशृङ्गं हरिरुन्नदंस्तथा॥ १३८॥

स तोमरं भास्कररश्मिवर्चसं
बलास्त्रसर्गोत्तमयत्नमन्युभिः।
ससर्ज शीघ्रं परिपीडयन् गजं
गुरो सुतायाद्रिपतीश्वरो नदन्॥ १३९॥

तत॰ प्रजज्वाल परेण मन्युना
पादाहतो नागपतिर्यथा तथा।
समाददे चान्तकदण्डसन्निभा-
निषूनमित्रार्तिकरांश्चतुर्दश॥ १४०॥

द्विपस्य पादाग्रकरान् स पञ्चभि-
र्नृपस्य बाहू च शिरोऽथ च त्रिभि।
जघान षड्भि षडनुत्तमत्विषः
स पाण्ड्यराजाऽनुचरान् महारथान्॥ १४१॥

(अ.२१) ततः प्रववृते भूय सङ्ग्रामो राजसत्तम।
कर्णस्य पाण्डवानां च यमराष्ट्रविवर्धन॰॥ १४२॥

(अ.२४) नकुलं रभसं युद्धे द्रावयन्तं वरूथिनीम्।
कर्णो वैकर्तनो राजन् वारयामास वै रुषा॥ १४३॥

नकुलस्तु तत॰ कर्णं प्रहसन्निदमब्रवीत्।
त्वं हि मूलमनर्थानां वैरस्य कलहस्य च॥ १४४॥

त्वद्दोषात् कुरवः क्षीणा समासाद्य परस्परम्।
त्वामद्य समरे हत्वा कृतकृत्योऽस्मि विज्वरः॥ १४५॥

एवमुक्त प्रत्युवाच नकुलं सूतनन्दनः।
कर्म कृत्वा रणे शूर ततः कत्थितुमर्हसि॥ १४६॥

अनुक्त्वा समरे तात शूरा युध्यन्ति शक्तित ।
प्रयुध्यस्व मया शक्त्या हनिष्ये दर्पमेव ते ॥ १४७ ॥

इत्युक्त्वा प्राहरत्तूर्णं पाण्डुपुत्राय सूतजः ।
विव्याध चैनं समरे त्रिसप्तत्या शिलीमुखैः ॥ १४८ ॥

नकुलस्तु ततो विद्धः सूतपुत्रेण भारत ।
अशीत्याशीविषप्रख्यैः सूतपुत्रमविध्यत ॥ १४९ ॥

तस्य कर्णो धनुश्छित्त्वा स्वर्णपुङ्खैः शिलाशितैः ।
त्रिंशता परमेष्वासः शरैः पाण्डवमर्दयत् ॥ १५० ॥

ततः क्रुद्धो महाराज नकुलः परवीरहा ।
क्षुरप्रेण सुतीक्ष्णेन कर्णस्य धनुराच्छिनत् ॥ १५१ ॥

सोऽन्यत्कार्मुकमादाय समरे वेगवत्तरम् ।
नकुलस्य ततो बाणैः समन्ताच्छादयद्दिशः ॥ १५२ ॥

संछाद्यमानः सहसा कर्णचापच्युतैः शरैः ।
चिच्छेद स शरांस्तूर्णं शरैरेव महारथः ॥ १५३ ॥

ततो बाणमयं जालं विततं व्योम्नि दृश्यते ।
खद्योतानामिव व्रातैः सम्पतद्भिर्यथा नभः ॥ १५४ ॥
बाणजालावृते व्योम्नि च्छादिते च दिवाकरे ।
न स्म सम्पतते भूम्यां किञ्चिदप्यन्तरिक्षगम् ॥ १५५ ॥

ततः कर्णो महाराज धनुश्छित्त्वा महात्मनः ।
सारथिं पातयामास रथनीडाद्धसन्निव ॥ १५६ ॥
ततोऽश्वांश्चतुरश्चास्य चतुर्भिर्निशितैः शरैः ।
यमस्य भवनं तूर्णं प्रेषयामास भारत ॥ १५७ ॥
स हन्यमानः समरे कृतास्त्रेण बलीयसा ।
प्राद्रवत्सहसा राजन्नकुलो व्याकुलेन्द्रियः ॥ १५८ ॥
तमभिद्रुत्य राधेयः प्रहसन् वै पुनः पुनः ।
सज्यमस्य धनुः कण्ठे व्यवासृजत भारत ॥ १५९ ॥

ततः स शुशुभे राजन् कण्ठासक्तमहाधनुः।
परिवेषमनुप्राप्तो यथा स्याद् व्योम्नि चन्द्रमाः॥ १६० ॥
यथैव चासितो मेघः शक्रचापेन शोभितः॥ १६१ ॥
तमब्रवीत्ततः कर्णो व्यर्थं व्याहृतवानसि।
वदेदानीं पुनर्हृष्टो वध्यमानः पुनः पुनः॥ १६२ ॥
मा योत्सीः कुरुभिः सार्धं बलवद्भिश्च पाण्डव।
सदृशैस्तात युध्यस्व व्रीडां मा कुरु पाण्डव।
गृहं वा गच्छ माद्रेय यत्र वा कृष्णफाल्गुनौ॥ १६३ ॥
एवमुक्त्वा महाराज व्यसर्जयत तं तदा।
वधप्राप्तं तु तं शूरो नाहनद्धर्मवित्तदा।
स्मृत्वा कुन्त्या वचो राजंस्तत एनं व्यसर्जयत्॥ १६४ ॥
तं विजित्याथ कर्णोऽपि पञ्चालांस्त्वरितो ययौ।
तत्राकरोन्महाराज कदनं सूतनन्दनः।
मध्यं प्राप्ते दिनकरे चक्रवद्विचरन्प्रभुः॥ १६५ ॥
तं दहन्तमनीकानि तत्र तत्र महारथम्।
क्षत्रिया वर्जयामासुर्युगान्ताग्निमिवोल्बणम्॥ १६६ ॥
(अ.२८) युधिष्ठिरं महाराज विसृजन्तं शरान् बहून्।
स्वयं दुर्योधनो राजा प्रत्यगृह्णादभीतवत्॥ १६७ ॥
तमापतन्तं सहसा तव पुत्रं महारथम्॥
धर्मराजो द्रुतं विद्ध्वा तिष्ठ तिष्ठेति चाब्रवीत्॥ १६८ ॥
स तु तं प्रतिविव्याध नवभिर्निशितैः शरैः।
सारथिं चास्य भल्लेन भृशं क्रुद्धोऽभ्यताडयत्॥ १६९ ॥
ततो युधिष्ठिरो राजन् स्वर्णपुङ्खाञ्शिलीमुखान्।
दुर्योधनाय चिक्षेप त्रयोदश शिलाशितान्॥ १७० ॥
(अ.२९) ततो दुर्योधनो राजा धर्मशीलस्य मारिष॥
शिलाशितेन भल्लेन धनुश्चिच्छेद संयुगे॥ १७१ ॥

अन्यत्कार्मुकमादाय धर्मपुत्रश्चमूमुखे।
दुर्योधनस्य चिच्छेद ध्वजं कार्मुकमेव च ॥ १७२ ॥
अथान्यद्धनुरादाय प्राविध्यत युधिष्ठिरम् ॥ १७३ ॥

सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः।
दुर्योधनं समुद्दिश्य बाणं जग्राह सत्वरः ॥ १७४ ॥

स तु बाणः समासाद्य तव पुत्र महारथम् ॥
व्यामोहयत राजानं धरणीं च ददार ह ॥ १७५ ॥

भीमस्तमाह च ततः प्रतिज्ञामनुचिन्तयन्।
नायं वध्यस्तव नृप इत्युक्तः स न्यवर्तत ॥ १७६ ॥

ततस्त्वरितमागम्य कृतवर्मा तवात्मजम्।
प्रत्यपद्यत राजानं निमग्नं व्यसनार्णवे ॥ १७७ ॥

गदामादाय भीमोऽपि हेमपट्टपरिष्कृताम्।
अभिदुद्राव वेगेन कृतवर्माणमाहवे ॥ १७८ ॥

एवं तदभवद्युद्धं त्वदीयानां परैः सह।
अपराह्णे महाराज काङ्क्षतां विजयं युधि ॥ १७९ ॥

(अ.१०) ततः कर्णं पुरस्कृत्य त्वदीया युद्धदुर्मदाः।
पुनरावृत्य संग्रामं चक्रुर्देवासुरोपमम् ॥ १८० ॥

अथ विस्फार्य गाण्डीवं रथे नृत्यन्निवार्जुनः।
शरसम्बाधमकरोत्खं दिशः प्रदिशस्तथा ॥ १८१ ॥

तां शस्त्रवृष्टिं बहुधा कर्णश्छित्त्वा शितैः शरैः।
अपोवाहास्त्रवीर्येण द्रुमं भङ्क्त्वेव मारुतः ॥ १८२ ॥

रथिनः समहामात्रान् गजानश्वान्ससादिनः।
पत्तिव्रातांश्च संक्रुद्धो निघ्नन् कर्णो व्यदृश्यत ॥ १८३ ॥

तद्वध्यमानं पाण्डूनां बलं कर्णास्त्रतेजसा।
विशस्त्रपत्रदेहासु प्राय आसीत्पराङ्मुखम् ॥ १८४ ॥

अथ कर्णास्त्रमस्त्रेण प्रतिहत्यार्जुनः स्मयन् ।
दिशं खं चैव भूमिं च प्रावृणोच्छरवृष्टिभिः ॥ १८५ ॥

निष्कैवल्यं तदा युद्धं प्रापुरश्व-नर-द्विपाः ।
हन्यमानाः शरैरार्तास्तदा भीताः प्रदुद्रुवुः ॥ १८६ ॥

त्वदीयानां तदा युद्धे संसक्तानां जयैषिणाम् ।
गिरिमस्तं समासाद्य प्रत्यपद्यत भानुमान् ॥ १८७ ॥

ते त्रस्यन्तो महेष्वासा रात्रियुद्धस्य भारत ।
अपयानं ततश्चक्रुः सहिताः सर्वयोधिभिः ॥ १८८ ॥

कौरवेष्वपयातेषु तदा राजन् दिनक्षये ।
जयं सुमनसः प्राप्य पार्थाः स्वशिविरं ययुः ॥ १८९ ॥

अ.३१) प्रभातायां रजन्यां तु कर्णो राजानमभ्ययात् ।
समेत्य च महाबाहुर्दुर्योधनमथाब्रवीत् ॥ १९० ॥

अद्य राजन् समेष्यामि पाण्डवेन यशस्विना ।
निहनिष्यामि तं वीरं स वा मां निहनिष्यति ॥ १९१ ॥

बहुत्वान्मम कार्याणां तथा पार्थस्य भारत ।
नाभूत्समागमो राजन् मम चैवार्जुनस्य च ॥ १९२ ॥

इदं तु मे यथाप्रज्ञं शृणु वाक्यं विशां पते ।
अनिहत्य रणे पार्थं नाहमेष्यामि भारत ॥ १९३ ॥

हतप्रवीरे सैन्येऽस्मिन्मयि चावस्थिते युधि ।
अभियास्यति मां पार्थः शक्रशक्तिविनाकृतम् ॥ १९४ ॥

ततः श्रेयस्करं यच्च तन्निबोध जनेश्वर ।
आयुधानां च मे वीर्यं दिव्यानामर्जुनस्य च ॥ १९५ ॥

कार्यस्य महतो भेदे लाघवे दूरपातने ।
सौष्ठवे चास्त्रपाते च सव्यसाची न मत्समः ॥ १९६ ॥

प्राणे शौर्येऽथ विज्ञाने विक्रमे चापि भारत ।
निमित्तज्ञानयोगे च सव्यसाची न मत्समः ॥ १९७ ॥

सर्वायुधमहामात्रं विजयं नाम तद्धनुः।
इन्द्रार्थं प्रियकामेन निर्मितं विश्वकर्मणा ॥ १९८ ॥

तद्भार्गवाय प्रायच्छच्छक्रः परमसम्मतम्।
तद्रामो ह्यददन्मह्यं तेन योत्स्यामि पाण्डवम् ॥ १९९ ॥

अद्य दुर्योधनाहं त्वां नन्दयिष्ये सबान्धवम्।
निहत्य समरे वीरमर्जुनं जयतां वरम् ॥ २०० ॥

न हि मां समरे सोढुं स शक्तोऽग्निं तरुर्यथा।
अवश्यं तु मया वाच्य येन हीनोऽस्मि फाल्गुनात् ॥ २०१ ॥

ज्या तस्य धनुषो दिव्या तथाऽक्षय्ये महेषुधी।
सारथिस्तस्य गोविन्दो मम तादृङ् न विद्यते ॥ २०२ ॥

एतैर्द्रव्यैरहं हीनो योद्धुमिच्छामि पाण्डवम् ॥ २०३ ॥

अय तु सदृश· शौरे· शल्य· समितिशोभनः।
सारथ्यं यदि म कुर्याद्ध्रुवस्ते विजयो भवेत्।
क्रियतामेष कामो मे मा व कालोऽत्यगादयम् ॥ २०४ ॥

एवमुक्तस्तव सुतः कर्णेनाहवशोभिना।
अभिगम्याब्रवीद्राजा मद्रराजमिदं वचः ॥ २०५ ॥

(अ ३२) शल्य कर्णोऽर्जुनेनाद्य योद्धुमिच्छति संयुगे।
तस्याभीषुग्रहवरो नान्योऽस्ति भुवि कश्चन ॥ २०६ ॥

पार्थस्य समरे कृष्णो यथाभीषुग्रहो वरः।
तथा त्वमपि कर्णस्य रथेऽभीषुग्रहो भव ॥ २०७ ॥

अरुणेन यथा सार्धं तमः सूर्यो व्यपोहति।
तथा कर्णेन सहितो जहि पार्थं महाहवे ॥ २०८ ॥

शल्य०– अवमन्यसि गान्धारे ध्रुवं च परिशङ्कसे।
यन्मां ब्रवीषि विश्रब्धं सारथ्यं क्रियतामिति ॥ २०९ ॥

ब्रह्मक्षत्रस्य विहिताः सूता वै परिचारकाः।
न क्षत्रियो वै सूतानां शृणुयाच्च कथञ्चन ॥ २१० ॥

अहं मूर्धाभिषिक्तो हि राजर्षिकुलजो नृपः।
महारथः समाख्यातः सेव्यः स्तुत्यश्च बन्दिनाम् ॥ २११ ॥

सोऽहमेतादृशो भूत्वा नेहारिबलसूदनः।
सूतपुत्रस्य संग्रामे सारथ्यं कर्तुमुत्सहे ॥ २१२ ॥

अवमानमहं प्राप्य न योत्स्यामि कथञ्चन।
आपृच्छे त्वाऽद्य गान्धारे गमिष्यामि गृहाय वै ॥ २१३ ॥

एवमुक्त्वा महाराज शल्यः समितिशोभनः।
उत्थाय प्रययौ तूर्णं राजमध्यादमर्षितः ॥ २१४ ॥

प्रणयाद्बहुमानाच्च तं निगृह्य सुतस्तव।
अब्रवीन्मधुरं वाक्यं साम्ना सर्वार्थसाधकम् ॥ २१५ ॥

ऋतमेव हि पूर्वास्ते वदन्ति पुरुषोत्तमाः।
तस्मादार्तायनिः प्रोक्तो भवानिति मतिर्मम ॥ २१६ ॥

शल्यभूतस्तु शत्रूणां यस्मात्त्वं युधि मानद।
तस्माच्छल्यो हि ते नाम कथ्यते पृथिवीतले ॥ २१७ ॥

न च त्वत्तो हि राधेयो न चाहमपि वीर्यवान्।
वृणेऽऽहं त्वा हयाग्र्याणां यन्तारमिह संयुगे ॥ २१८ ॥

यथाश्वहृदयं वेद वासुदेवो महामनाः।
द्विगुणं त्वं तथा वेत्सि मद्रराजेश्वरात्मज ॥ २१९ ॥

(अ. ३३) भूय एव तु मद्रेश यत्ते वक्ष्यामि तच्छृणु।
देवानामसुराणां च परस्परजिगीषया ॥ २२० ॥

बभूव प्रथमो राजन् सङ्ग्रामस्तारकामयः।
निर्जिताश्च तदा दैत्या दैवतैरिति न श्रुतम् ॥ २२१ ॥

निर्जितेषु च दैत्येषु तारकस्य सुतास्त्रयः।
ताराक्षः कमलाक्षश्च विद्युन्माली च पार्थिव ॥ २२२ ॥

तप उग्रं समास्थाय नियमे परमे स्थिताः।
तपसा कर्षयामासुर्देहान् स्वान् शत्रुतापन ॥ २२३ ॥

तेषां पितामह• प्रीतो वरदः प्रददौ वरम् ॥ २२४ ॥
अवध्यत्वं च ते राजन् सर्वभूतस्य सर्वदा ।
सहिता वरयामासु सर्वलोकपितामहम् ॥ २२५ ॥
तानब्रवीत्तदा देवो लोकानां प्रभुरीश्वर• ।
नास्ति सर्वामरत्वं वै निवर्तध्वमितोऽसुराः ॥ २२६ ॥
ततस्ते सहिता राजन् संप्रधार्यासकृत्प्रभुम् ।
सर्वलोकेश्वरं वाक्यं प्रणम्येदमथाब्रुवन् ॥ २२७ ॥
अस्मभ्यं त्वं वरं देव सम्प्रयच्छ पितामह ।
वयं पुराणि त्रीण्येव समास्थाय महीमिमाम् ।
विचरिष्याम लोकेऽस्मिंस्त्वत्प्रसादपुरस्कृता ॥ २२८ ॥
ततो वर्षसहस्रे तु समेष्यामः परस्परम् ।
एकीभावं गमिष्यन्ति पुराण्येतानि चानघ ॥ २२९ ॥
समागतानि चैतानि यो हन्याद्भगवंस्तदा ।
एकेषुणा देववरः स नो मृत्युर्भविष्यति ॥ २३० ॥
एवमस्त्विति तान् देवः प्रत्युक्त्वा प्राविशद्दिवम् ॥ २३१ ॥
ते तु लब्धवरा प्रीताः संप्रधार्य परस्परम् ।
पुरत्रयविसृष्ट्यर्थं मयं वव्रुर्महासुरम् ॥ २३२ ॥
ततो मय• स्वतपसा चक्रे धीमान् पुराणि च ।
त्रीणि काञ्चनमेकं वै रौप्यं कार्ष्णायसं तथा ॥ २३३ ॥
काञ्चन तारकाक्षस्य चित्रमासीन्महात्मनः ।
राजतं कमलाक्षस्य विद्युन्मालिन आयसम् ॥ २३४ ॥
त्रयस्ते दैत्यराजानस्त्रीँल्लोकानस्त्रतेजसा ।
आक्राम्य तस्थुरूचुश्च कश्च नाम प्रजापतिः ॥ २३५ ॥
ततस्ते लोभमोहाभ्यामभिभूता विचेतसः ।
विद्राव्य सगणान् देवांस्तत्र तत्र तदा तदा ।
विचेरुः स्वेन कामेन वरदानेन दर्पिता• ॥ २३६ ॥

ऋषीणामाश्रमान् पुण्यान् रम्याञ्जनपदांस्तथा ।
व्यनाशयन्नमर्यादा दानवा दुष्टचारिणः ॥ २३७ ॥

पीड्यमानेषु लोकेषु देवाः शक्रपुरोगमाः ।
ब्रह्माणमग्रतः कृत्वा वृषाङ्कं शरणं ययुः ॥ २३८ ॥

सर्वभूतमयं दृष्ट्वा तमजं जगतः पतिम् ।
देवा ब्रह्मर्षयश्चैव शिरोभिर्धरणीं गताः ॥ २३९ ॥

ततः प्रसन्नो भगवान् स्वागतेनाभिनन्द्य च ।
प्रोवाच व्येतु वस्त्रासो ब्रूत किं करवाणि वः ॥ २४० ॥

(अ. ३४) पितृदेवर्षिसंघेभ्योऽभये दत्ते महात्मना ।
सत्कृत्य शङ्करं प्राह ब्रह्मा लोकहितं वचः ॥ २४१ ॥

तवातिसर्गाद्देवेश प्राजापत्यमिदं पदम् ।
मयाऽधितिष्ठता दत्तो दानवेभ्यो महान् वरः ॥ २४२ ॥

तानतिक्रान्तमर्यादान् नान्यः संहर्तुमर्हति ।
त्वामृते भूतभव्येश त्वं ह्येषां प्रत्यरिर्वधे ॥ २४३ ॥

स त्वं देव प्रपन्नानां याचतां च दिवौकसाम् ।
कुरु प्रसादं देवेश दानवाञ्जहि शङ्कर ॥ २४४ ॥

स्थाणु०–हन्तव्याः शत्रवः सर्वे युष्माकमिति मे मतिः ।
न त्वेक उत्सहे हन्तुं बलस्था हि सुरद्विषः ॥ २४५ ॥

अहमेतान् हनिष्यामि युष्मत्तेजोर्धबृंहित ॥ २४६ ॥

ततस्तथेति देवेशस्तैरुक्तो राजसत्तम ।
अर्धमादाय सर्वेषां तेजसाऽभ्यधिकोऽभवत् ॥ २४७ ॥

स तु देवो बलेनासीत्सर्वेभ्यो बलवत्तरः ।
महादेव इति ख्यातस्ततःप्रभृति शङ्करः ॥ २४८ ॥

ततोऽब्रवीन्महादेवो धनुर्बाणधरो ह्यहम् ।
हनिष्यामि रथेनाजौ तान् रिपून्वो दिवौकसः ॥ २४९ ॥

ते यूयं मे रथं चैव धनुर्बाणं तथैव च।
पश्यध्वं यावदद्यैतान् पातयामि महीतले ॥ २५० ॥

ततो विबुधशार्दूलास्तस्येषुं समकल्पयन्।
शृंगमग्निर्बभूवास्य भल्लः सोमो विशांपते।
कुड्मलश्चाभवद्विष्णुस्तस्मिन्निषुवरे तदा ॥ २५१ ॥

रथं वसुन्धरां देवीं विशालपुरमालिनीम्।
सपर्वतवनद्वीपां चक्रुर्भूतधरां तदा ॥ २५२ ॥

वषट्कारः प्रतोदोऽभूद्गायत्री शीर्षबन्धना।
संवत्सरो धनुस्तद्वै सावित्री ज्या महास्वना ॥ २५३ ॥

ततः स भगवान् देवो लोकस्रष्टा पितामहः।
सारथ्ये कल्पितो देवैरीशानस्य महात्मनः ॥ २५४ ॥

तस्मिन्नारोहति क्षिप्रं स्यन्दने लोकपूजिते।
आरुरोह तदा स्थाणुर्धनुषा कम्पयन् परान् ॥ २५५ ॥

अथाधिज्यं धनुः कृत्वा शर्वः सन्धाय तं शरम्।
युक्त्वा पाशुपतास्त्रेण त्रिपुरं समचिन्तयत् ॥ २५६ ॥

तस्मिन् स्थिते महाराज रुद्रे विधृतकार्मुके।
पुराणि तानि कालेन जग्मुरेवैकतां तदा ॥ २५७ ॥

स तद्विकृष्य भगवान् दिव्यं लोकेश्वरो धनुः।
त्रैलोक्यसारं तमिषुं मुमोच त्रिपुरं प्रति ॥ २५८ ॥

उत्सृष्टे वै महाभाग तस्मिन्निषुवरे तदा।
महानार्तस्वरोह्यासीत्पुराणां पततां भुवि ॥ २५९ ॥
तान् सोऽसुरगणान् दग्ध्वा प्राक्षिपत्पश्चिमार्णवे ॥ २६० ॥

ततः प्रकृतिमापन्ना देवा लोकास्त्वथर्षयः।
तुष्टुवुर्वाग्भिरग्र्याभिः स्थाणुमप्रतिमौजसम् ॥ २६१ ॥

तेऽनुज्ञाता भगवता जग्मुः सर्वे यथागतम्।
कृतकामाः प्रयत्नेन प्रजापतिमुखाः सुराः ॥ २६२ ॥

यथैव भगवान् ब्रह्मा लोकधाता पितामहः।
सारथ्यमकरोत्तत्र रुद्रस्य परमोऽव्ययः॥ २६३॥

तथा भवानपि क्षिप्रं रुद्रस्येव पितामहः।
संयच्छतु हयानस्य राधेयस्य महात्मनः॥ २६४॥

त्वं हि कृष्णाच्च कर्णाच्च फाल्गुनाच्च विशेषतः।
विशिष्टो राजशार्दूल नास्ति तत्र विचारणा॥ २६५॥

(अ. ३५) त्वं च सर्वास्त्रविद्वीरः सर्वविद्यास्त्रपारगः।
बाहुवीर्येण ते तुल्यः पृथिव्यां नास्ति कश्चन॥ २६६॥

त्वत्कृते पदवीं गन्तुमिच्छेयं युधि मारिष।
सोदराणां च वीराणां सर्वेषां च महीक्षिताम्॥ २६७॥

## शल्यस्य कर्णसारथ्यम्, शल्यकृतः कर्णतेजोभङ्गः

शल्य०—यन्मां ब्रवीषि गान्धारे अग्रे सैन्यस्य मानद।
विशिष्टं देवकीपुत्रात् प्रीतिमानस्म्यहं त्वयि॥ २६८॥

एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः।
युध्यतः पाण्डवाग्र्येण यथा त्वं वीर मन्यसे॥ २६९॥

समयश्च हि मे वीर कश्चिद्वैकर्तनं प्रति।
उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य सन्निधौ॥ २७०॥

तथेति राजन् पुत्रस्ते सह कर्णेन मारिष।
अब्रवीन्मद्रराजानं सर्वक्षत्रस्य सन्निधौ॥ २७१॥

सारथ्यस्याभ्युपगमाच्छल्येनाश्वासितस्तदा।
दुर्योधनस्तदा हृष्टः कर्णं तमभिषस्वजे॥ २७२॥

अब्रवीच्च पुनः कर्णं स्तूयमानः सुतस्तव।
जहि पार्थान्रणे सर्वान् महेन्द्रो दानवानिव॥ २७३॥

(अ. ३६) यथा हरिहयैर्युक्तं संगृह्णाति स मातलिः।
शल्यस्तथा तवाद्यायं संयन्ता रथवाजिनाम्॥ २७४॥

ततो दुर्योधनो भूयो मद्रराजं तरस्विनम्।
उवाच राजन् सग्रामेऽभ्युषिते पर्युपस्थिते ॥ २७५ ॥

कर्णस्य यच्छ संग्रामे मद्रराज हयोत्तमान्।
त्वयाऽभिगुप्तो राधेयो विजेष्यति धनञ्जयम् ॥ २७६ ॥

ततः कर्णस्य दुर्धर्ष स्यन्दनप्रवरं महत्।
आरुरोह महातेजा. शल्य. सिंह इवाचलम् ॥ २७७ ॥

ततः शल्याश्रित दृष्ट्वा कर्णः स्वं रथमुत्तमम्।
अध्यतिष्ठद्यथाऽम्भोद विद्युत्वन्तं दिवाकर. ॥ २७८ ॥

तं रथस्थं महाबाहुं युद्धायामिततेजसम्।
दुर्योधनस्तु राधेयमिदं वचनमब्रवीत् ॥ २७९ ॥

मनोगतं मम ह्यासीद्भीष्मद्रोणौ महारथौ।
अर्जुनं भीमसेनं च निहन्ताराविति ध्रुवम् ॥ २८० ॥

ताभ्यां यदकृतं वीर वीरकर्म महामृधे।
तत् कर्म कुरु राधेय वज्रपाणिरिवापर. ॥ २८१ ॥

गृहाण धर्मराजं वा जहि वा त्व धनञ्जयम् ॥ २८२ ॥

प्रतिगृह्य तु तद्वाक्यं रथस्थो रथसत्तम.।
अभ्यभाषत राधेय. शल्य युद्धविशारदम् ॥ २८३ ॥

चोदयाश्वान् महाबाहो यावद्धन्मि धनञ्जयम्।
भीमसेन यमौ चोभौ राजान च युधिष्ठिरम् ॥ २८४ ॥

शल्य०— सूतपुत्र कथं नु त्व पाण्डवानवमन्यसे।
अपि सन्तनयेयुर्ये भय साक्षाच्छतक्रतो ॥ २८५ ॥

यदा श्रोष्यसि निर्घोषं विस्फूर्जितमिवाशनेः।
राधेय गाण्डिवस्याजौ तदा नैवं वदिष्यसि ॥ २८६ ॥

यदा द्रक्ष्यसि भीमेन कुञ्जरानीकमाहवे।
विशीर्णदन्तं निहतं तदा नैव वदिष्यसि ॥ २८७ ॥

अनादृत्य तु तद्वाक्यं मद्रराजेन भाषितम् ।
याहीत्येवाब्रवीत्कर्णो मद्रराजं तरस्विनम् ॥ २८८ ॥

(अ.३७) दृष्ट्वा कर्णं महेष्वासं युयुत्सुं समवस्थितम् ।
चुक्रुशु कुरव सर्वे हृष्टरूपा समन्ततः ॥ २८९ ॥

प्रस्थितं सूतपुत्रं च जयेत्यूचुर्नराधिपा ।
निर्जितान्पाण्डवांश्चैव मेनिरे तत्र कौरवाः ॥ २९० ॥

ततः प्रायात् प्रीतिमान् वै रथेन
वैयाघ्रेण श्वेतयुजाऽथ कर्णः ।
स चालोक्य ध्वजिनीं पाण्डवानां
धनञ्जयं त्वरया पर्यपृच्छत् ॥ २९१ ॥

(अ ३८) यो मामद्य महात्मानं दर्शयेच्छ्वेतवाहनम् ।
तस्मै दद्यामभिप्रेतं धनं यन्मनसेच्छति ॥ २९२ ॥

अन्यं वाऽस्मै पुनर्दद्यां सौवर्णं हस्तिषड्गवम् ॥ २९३ ॥

न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यं तस्मै वरं दद्यां यमसौ कामयेत् स्वयम् ॥ २९४ ॥

हत्वा च सहितौ कृष्णौ तयोर्वित्तानि सर्वशः ।
तस्मै दद्यामहं यो मे प्रब्रूयात् केशवार्जुनौ ॥ २९५ ॥

विकत्थमानं च तदा राधेयमरिकर्षणम् ।
मद्रराजः प्रहस्येदं वचनं प्रत्यभाषत ॥ २९६ ॥

(अ.३९) मा सूतपुत्र दानेन सौवर्णं हस्तिषड्गवम् ।
शल्य०– प्रयच्छ पुरुषायाद्य द्रक्ष्यसि त्वं धनञ्जयम् ॥ २९७ ॥

परान् सृजसि यद्वित्तं किञ्चित्त्वं बहु मूढवत् ।
अपात्रदाने ये दोषास्तान् मोहान्नावबुध्यसे ॥ २९८ ॥

यच्च प्रार्थयसे हन्तुं कृष्णौ मोहाद्वृथैव तत् ।
न हि शुश्रुम संमर्दे क्रोष्ट्रा सिंहौ निपातितौ ॥ २९९ ॥

अप्रार्थितं प्रार्थयसे सुहृदो न हि सन्ति ते ।
ये त्वा निवारयन्त्याशु प्रपतन्तं हुताशने ॥ ३०० ॥

कार्याकार्यं न जानीषे कालपक्वोऽस्यसंशयम् ।
बह्वबद्धमकर्णीयं को हि ब्रूयाज्जिजीविषुः ॥ ३०१ ॥

समुद्रतरणं दोर्भ्यां कण्ठे बद्ध्वा यथा शिलाम् ।
गिर्यग्राद्वा निपतनं तादृक् तव चिकीर्षितम् ॥ ३०२ ॥

बालश्चन्द्रं मातुरङ्के शयानो
यथा कश्चित् प्रार्थयतेऽपहर्तुम् ।
तद्वन्मोहात् द्योतमानं रथस्थं
संप्रार्थयस्यर्जुनं जेतुमद्य ॥ ३०३ ॥

ईषादन्तं महानागं प्रभिन्नकरटामुखम् ।
शशको ह्वयसे युद्धे कर्ण पार्थं धनञ्जयम् ॥ ३०४ ॥

बिलस्थं कृष्णसर्पं त्वं बाल्यात् काष्ठेन विध्यसि ।
महाविषं पूर्णकोपं यत् पार्थं योद्धुमिच्छसि ॥ ३०५ ॥

सिंहं केसरिणं क्रुद्धमतिक्रम्याभिनर्दसे ।
शृगाल इव मूढस्त्वं नृसिंहं कर्ण पाण्डवम् ॥ ३०६ ॥

सुपर्णं पतगश्रेष्ठं वैनतेयं तरस्विनम् ।
भोगीवाह्वयसे पाते कर्ण पार्थं धनञ्जयम् ॥ ३०७ ॥

सर्वाम्भसां निधिं भीम मूर्तिमन्त झषायुतम् ।
चन्द्रोदये विवर्धन्तमप्लवः सन् तितीर्षसि ॥ ३०८ ॥

ऋषभं दुन्दुभिग्रीवं तीक्ष्णशृङ्गं प्रहारिणम् ।
वत्स आह्वयसे युद्धे कर्ण पार्थं धनञ्जयम् ॥ ३०९ ॥

महामेघं महाघोर दर्दुरः प्रतिनर्दसि ।
कामतोयप्रदं लोके नरपर्जन्यमर्जुनम् ॥ ३१० ॥

यथा च स्वगृहस्थः श्वा व्याघ्रं वनगतं भषेत् ।
तथा त्वं भषसे कर्ण नरव्याघ्रं धनञ्जयम् ॥ ३११ ॥

शृगालोऽपि वने कर्ण शशैः परिवृतो वसन् ।
मन्यते सिंहमात्मानं यावत् सिंहं न पश्यति ॥ ३१२ ॥

नित्यमेव शृगालस्त्वं नित्यं सिंहो धनञ्जयः ।
वीरप्रद्वेषणान्मूढ तस्मात् क्रोष्टेव लक्ष्यसे ॥ ३१३ ॥

यथाखुः स्याद्विडालश्च श्वा व्याघ्रश्च बलाबले ।
यथा शृगालः सिंहश्च यथा च शशकुञ्जरौ ॥ ३१४ ॥

यथाऽनृतं च सत्यं च यथा चापि विषामृते ।
तथा त्वमपि पार्थश्च प्रख्यातावात्मकर्मभि ॥ ३१५ ॥

(अ.४०) अधिक्षिप्तस्तु राधेयः शल्येनामिततेजसा ।
शल्यमाह सुसंक्रुद्धो वाक्शल्यमवधारयन् ॥ ३१६ ॥

गुणान् गुणवतां शल्य गुणवान्वेत्ति नागुणः ।
त्वं तु शल्य गुणैर्हीनः किं ज्ञास्यसि गुणागुणम् ॥ ३१७ ॥

अर्जुनस्य महास्त्राणि क्रोधं वीर्यं धनुः शरान् ।
यथाऽहं शल्य जानामि न त्वं जानासि तत्तथा ॥ ३१८ ॥

एवमेवात्मनो वीर्यमहं वीर्यं च पाण्डवे ।
जानन्नेवाह्वये युद्धे शल्य गाण्डीवधारिणम् ॥ ३१९ ॥

अस्ति वाऽयमिषुः शल्य सुपुङ्खो रक्तभोजन ।
शेते चन्दनचूर्णेषु पूजितो बहुलाः समाः ॥ ३२० ॥

आहेयो विषवानुग्रो नराश्व-द्विपसंघहा ।
तमहं जातु नास्येयमन्यस्मिन् फाल्गुनादृते ।
कृष्णाद्वा देवकीपुत्रात् सत्यं चापि शृणुष्व मे ॥ ३२१ ॥

अर्जुने गाण्डिवं कृष्णे चक्रं तार्क्ष्यकपिध्वजौ ।
भीरूणां त्रासजननं शल्य हर्षकरं मम ॥ ३२२ ॥

त्वं तु दुष्प्रकृतिर्मूढो महायुद्धेष्वकोविदः ।
भयावदीर्णः संत्रासादबद्धं बहु भाषसे ॥ ३२३ ॥

संस्तौषि तौ तु केनापि हेतुना त्वं कुदेशज।
तौ हत्वा समरे हन्ता त्वामद्य सहबान्धवम् ॥ ३२४ ॥

पापदेशज दुर्बुद्धे क्षुद्र क्षत्रियपांसन।
नाहं बिभेमि कृष्णाभ्यां विजानन्नात्मनो बलम् ॥ ३२५ ॥

वासुदेवसहस्रं वा फाल्गुनानां शतानि वा।
अहमेको हनिष्यामि जोषमास्व कुदेशज ॥ ३२६ ॥

व्यक्तं त्वमप्युपहितः पाण्डवैः पापदेशज।
यथा चामित्रवत्सर्वं त्वमस्मासु प्रवर्तसे ॥ ३२७ ॥

कामं न खलु शक्योऽहं त्वद्विधानां शतैरपि।
संग्रामाद्विमुखः कर्तुं धर्मज्ञ इव नास्तिकैः ॥ ३२८ ॥

पुनश्चेदीदृशं वाक्यं मद्रराज वदिष्यसि।
शिरस्ते पातयिष्यामि गदया वज्रकल्पया ॥ ३२९ ॥

श्रोतारस्त्विदमद्येह द्रष्टारो वा कुदेशज।
कर्णं वा जघ्नतुः कृष्णौ कर्णो वा निजघान तौ ॥ ३३० ॥

## हंसकाकीयोपाख्यानम्, कर्णकृता शल्यनिन्दा

(अ.४१) मारिषाधिरथेः श्रुत्वा वाचो युद्धाभिनन्दिनः।
शल्योऽब्रवीत्पुनः कर्णं निदर्शनमिदं वचः ॥ ३३१ ॥

जातोऽहं यज्वनां वंशे संग्रामेष्वनिवर्तिनाम्।
राज्ञां मूर्धाभिषिक्तानां स्वयं धर्मपरायणः ॥ ३३२ ॥

यथैव मत्तो मद्येन त्वं तथा लक्ष्यसे वृषः।
तथाऽद्य त्वां प्रमाद्यन्तं चिकित्सेयं सुहृत्तया ॥ ३३३ ॥

इमां काकोपमां कर्ण प्रोच्यमानां निबोध मे।
श्रुत्वा यथेष्टं कुर्यास्त्वं निहीन कुलपांसन ॥ ३३४ ॥

अवश्यं तु मया वाच्यं बुद्ध्यता त्वद्धिताहितम्।
विशेषतो रथस्थेन राज्ञश्चैव हितैषिणा ॥ ३३५ ॥

अतस्त्वां कथये कर्ण निदर्शनमिदं पुनः ॥ ३३६ ॥

वैश्य॰ किल समुद्रान्ते प्रभूतधनधान्यवान्।
यज्वा दानपतिः क्षान्त॰ स्वकर्मस्थोऽभवच्छुचिः ॥ ३३७ ॥
पुत्राणां तस्य बालानां कुमाराणां यशस्विनाम्।
काको बहूनामभवदुच्छिष्टकृतभोजन॰ ॥ ३३८ ॥
तस्मै सदा प्रयच्छन्ति वैश्यपुत्रा॰ कुमारकाः।
मांसोदनं दधि क्षीरं पायसं मधुसर्पिषी ॥ ३३९ ॥
स चोच्छिष्टभृत॰ काको वैश्यपुत्रैः कुमारकै॰।
सदृशान्पक्षिणो दृप्तः श्रेयसश्चाधिचिक्षिपे ॥ ३४० ॥
अथ हंसा समुद्रान्ते कदाचिदतिपातिनः।
गरुडस्य गतौ तुल्याश्चक्राङ्गा हृष्टचेतस॰ ॥ ३४१ ॥
कुमारकास्तदा हंसान् दृष्ट्वा काकमथाब्रुवन्।
भवानेव विशिष्टो हि पतत्रिभ्यो विहंगम ॥ ३४२ ॥
प्रतार्यमाणस्तैः सर्वैरल्पबुद्धिभिरण्डजः।
तद्वच सत्यमित्येव मौर्ख्याद्दर्पाच्च मन्यते ॥ ३४३ ॥
तान् सोऽभिपत्य जिज्ञासुः क एषां श्रेष्ठभागिति।
उच्छिष्टदर्पितः काको बहूना दूरपातिनाम् ॥ ३४४ ॥
तेषां यं प्रवरं मेने हंसानां दूरपातिनाम्।
तमाह्वयत दुर्बुद्धिः पताव इति पक्षिणम् ॥ ३४५ ॥
तच्छ्रुत्वा प्राहसन् हंसा ये तत्रासन्समागता॰।
भाषतो बहु काकस्य बलिन पतता वराः ॥ ३४६ ॥
इदमूचु॰ स्म चक्राङ्गा वचः काकं विहङ्गमाः ॥ ३४७ ॥
कथं हंसं नु बलिनं चक्राङ्गं दूरपातिनम्।
काको भूत्वा निपतने समाह्वयसि दुर्मते।
कथं त्वं पतिता काक सहास्माभिर्ब्रवीहि तत् ॥ ३४८ ॥

काक०– शतमेकं च पातानां पतितास्मि न संशयः।
शतयोजनमेकैकं विचित्रं विविधं तथा।
तेषामन्यतमेनाहं पतिष्यामि विहायसम् ॥ ३४९ ॥

एवमुक्ते तु काकेन प्रहस्यैको विहङ्गमः।
उवाच काकं राधेय वचनं तन्निबोध मे ॥ ३५० ॥

शतमेकं च पाताना त्वं काक पतिता ध्रुवम् ॥ ३५१ ॥

एकमेव तु यं पातं विदुः सर्वे विहङ्गमा.।
तमहं पतिता काक नान्यं जानामि कञ्चन ॥ ३५२ ॥

अथ काका. प्रजहसुर्ये तत्रासन् समागता ।
कथमेकेन पातेन हंस. पातशतं जयेत् ॥ ३५३ ॥

एकेनैव शतस्यैष पातेनाभिपतिष्यति ।
हंसस्य पतितं काको बलवानाशुविक्रम. ॥ ३५४ ॥

प्रपेततु स्पर्धया च ततस्तौ हंसवायसौ ॥ ३५५ ॥

अथ काकस्य चित्राणि पतितानि मुहुर्मुहुः।
दृष्ट्वा प्रमुदिता. काका विनेदुरधिकै. स्वरैः।
हंसांश्चावहसन्ति स्म प्रावदन्नप्रियाणि च ॥ ३५६ ॥

अथ हंसः स तच्छ्रुत्वा प्रापतत् पश्चिमां दिशम्।
उपर्युपरि वेगेन सागरं मकरालयम् ॥ ३५७ ॥

ततो भीः प्राविशत् काकं तदा तत्र विचेतसम्।
द्वीपद्रुमानपश्यन्तं निपातार्थे श्रमान्वितम्।
निपतेयं क्व नु श्रान्त इति तस्मिञ्जलार्णवे ॥ ३५८ ॥

अथ हंसोऽप्यतिक्रम्य मुहूर्तमिति चेति च।
अवेक्षमाणस्तं काकं नाशकद्व्यपसर्पितुम् ॥ ३५९ ॥

तं तथा हीयमानं तु हंसो दृष्ट्वाऽब्रवीदिदम्।
उज्जिहीर्षुर्निमज्जन्तं स्मरन् सत्पुरुषव्रतम् ॥ ३६० ॥

बहूनि पतितानि त्वमाचक्षाणो मुहुर्मुहुः।
पातस्य व्याहरंश्चेदं न नो गुह्यं प्रभाषसे ॥ ३६१ ॥

किं नाम पतितं काक यत्त्वं पतसि साम्प्रतम्।
जलं स्पृशसि पक्षाभ्यां तुण्डेन च पुनः पुनः।
प्रब्रूहि कतमे तत्र पाते वर्तसि वायस ॥ ३६२ ॥

एह्येहि काक शीघ्रं त्वमेष त्वां प्रतिपालये ॥ ३६३ ॥

स पक्षाभ्यां स्पृशन्नार्तस्तुण्डेन च जलं तदा।
घातवेगप्रमथितो हंसं काकोऽब्रवीदिदम् ॥ ३६४ ॥

उच्छिष्टदर्पितो हंस मन्येऽऽत्मान सुपर्णवत्।
अवमन्य बहूंश्चाहं काकानन्यांश्च पक्षिणः ॥ ३६५ ॥

प्राणैर्हंस प्रपद्ये त्वां द्वीपान्तं प्रापयस्व माम्।
यद्यहं स्वस्तिमान् हंस स्वं देशं प्राप्नुया विभो।
न कञ्चिदवमन्येऽहमापदो मां समुद्धर ॥ ३६६ ॥

तमेवंवादिनं दीन विलपन्तमचेतनम्।
काक काकेति वाशन्तं निमज्जन्तं महार्णवे ॥ ३६७ ॥

कृपयाऽऽदाय हंसस्तं जलक्लिन्नं सुदुर्दशम्।
पद्भ्यामुत्क्षिप्य वेगेन पृष्ठमारोपयच्छनैः ॥ ३६८ ॥

आरोप्य पृष्ठं हंसस्तं काकं तूर्णं विचेतनम्।
आजगाम पुनर्द्वीपं स्पर्धया पेततुर्यतः ॥ ३६९ ॥

संस्थाप्य तं चापि पुनः समाश्वास्य च खेचरम्।
गतो यथेप्सितं देशं हंसो मन इवाशुगः ॥ ३७० ॥

एवमुच्छिष्टपुष्टः स काको हंसपराजितः।
बलं वीर्यं महत् कर्ण त्यक्त्वा क्षान्तिमुपागतः ॥ ३७१ ॥

उच्छिष्टभोजन काको यथा वैश्यकुले पुरा।
एवं त्वमुच्छिष्टभृतो धार्तराष्ट्रैर्न संशयः।
सदृशान् श्रेयसश्चापि सर्वान् कर्णावमन्यसे ॥ ३७२ ॥

द्रोणद्रौणिकृपैर्गुप्तो भीष्मेणान्यैश्च कौरवैः।
विराटनगरे पार्थमेकं किं नावधीस्तदा ॥ ३७३ ॥

यत्र व्यस्ताः समस्ताश्च निर्जिताः स्थ किरीटिना ।
शृगाला इव सिंहेन क्व ते वीर्यमभूत्तदा ॥ ३७४ ॥
तथा द्वैतवने कर्ण गन्धर्वैः समभिद्रुत ।
कुरून् समग्रानुत्सृज्य प्रथमं त्वं पलायित. ॥ ३७५ ॥
हत्वा जित्वा च गन्धर्वांश्चित्रसेनमुखान् रणे ।
कर्ण दुर्योधनं पार्थः सभार्यं सममोक्षयत् ॥ ३७६ ॥
कियत्तत्तत्प्रवक्ष्यामि येन येन धनञ्जयः ।
त्वत्तोऽतिरिक्त. सर्वेभ्यो भूतेभ्यो ब्राह्मणो यथा ॥ ३७७ ॥
यथाश्रयत चक्राङ्गं वायसो बुद्धिमास्थित. ।
तथाश्रयस्व वार्ष्णेयं पाण्डवं च धनञ्जयम् ॥ ३७८ ॥
यदा शरशतै पार्थो दर्पं तव वधिष्यति ।
तदा त्वमन्तरं द्रष्टा आत्मनश्चार्जुनस्य च ॥ ३७९ ॥
सूर्याचन्द्रमसौ यद्वत्तद्वदर्जुनकेशवौ ।
प्राकाश्येनाभिविख्यातौ त्वं तु खद्योतवन्नृषु ॥ ३८० ॥
एवं विद्वन् मावमंस्थाः सूतपुत्राच्युतार्जुनौ ।
नृसिंहौ तौ महात्मानौ जोषमास्स्व विकत्थने ॥ ३८१ ॥
(अ. ४३) ततः पुनर्महाराज मद्रराजमरिन्दमः ।
अभ्यभाषत राधेयः सन्निवार्योत्तरं वचः ॥ ३८२ ॥
यत्त्वं निदर्शनार्थं मां शल्य जल्पितवानसि ।
नाहं शक्यस्त्वया वाचा बिभीषयितुमाहवे ॥ ३८३ ॥
यदि मां देवताः सर्वा योधयेयुः सवासवाः ।
तथापि मे भयं न स्यात् किमु पार्थात्सकेशवात् ॥ ३८४ ॥
नाहं भीषयितुं शक्यो वाङ्मात्रेण कथञ्चन ।
अन्यं जानीहि य शक्यस्त्वया भीषयितुं रणे ॥ ३८५ ॥
नीचस्य बलमेतावत्पारुष्यं यत्त्वमात्थ माम् ।
अशक्तो मद्गुणान् वक्तुं वल्गसे बहु दुर्मते ॥ ३८६ ॥

न हि कर्ण. समुद्‌भूतो भयार्थमिह मद्रक।
विक्रमार्थमहं जातो यशोर्थं च तथाऽऽत्मन. ॥ ३८७ ॥

सखिभावेन सौहार्दान्मित्रभावेन चैव हि।
कारणैस्त्रिभिरेतैस्त्वं शल्य जीवसि साम्प्रतम् ॥ ३८८ ॥

राज्ञश्च धार्तराष्ट्रस्य कार्यं सुमहदुद्यतम्।
मयि तच्चाहितं शल्य तेन जीवसि मे क्षणम् ॥ ३८९ ॥

कृतश्च समय. पूर्वं क्षन्तव्यं विप्रियं तव ॥ ३९० ॥

ऋते शल्यसहस्रेण विजयेयमहं परान्।
मित्रद्रोहस्तु पापीयानिति जीवसि साम्प्रतम् ॥ ३९१ ॥

(अ. ४४) ननु प्रलापाः कर्णैते यान् ब्रवीषि परान् प्रति।
शल्य०– ऋते कर्णसहस्रेण शक्या जेतुं परे युधि ॥ ३९२ ॥

तथा ब्रुवन्तं परुषं कर्णो मद्राधिपं तदा।
परुषं द्विगुणं भूयः प्रोवाचाप्रियदर्शनम् ॥ ३९३ ॥

इदं तु ते त्वमेकाग्रः शृणु मद्रजनाधिप।
ब्राह्मणाः कथयन्ति स्म धृतराष्ट्रनिवेशने ॥ ३९४ ॥

बहिष्कृता हिमवता गङ्गया च बहिष्कृता.।
सरस्वत्या यमुनया कुरुक्षेत्रेण चापि ये ॥ ३९५ ॥

पञ्चानां सिन्धुषष्ठानां नदीनां येऽन्तराश्रिताः।
तान् धर्मबाह्यानशुचीन् वाहीकानपि वर्जयेत् ॥ ३९६ ॥

शाकलं नाम नगरमापगा नाम निम्नगा।
जर्तिका नाम वाहीकास्तेषां वृत्तं सुनिन्दितम् ॥ ३९७ ॥

धाना गौड्यासवं पीत्वा गोमांसं लशुनैः सह।
अपूपमासवाट्यानामाशिन शीलवर्जिताः ॥ ३९८ ॥

गायन्त्यथ च नृत्यन्ति स्त्रियो मत्ता विवाससः।
नगरागारवप्रेषु बहिर्माल्यानुलेपनाः ॥ ३९९ ॥

पञ्च नद्यो वहन्त्येता यत्र पीलुवनान्युत ।
शतद्रुश्च विपाशा च तृतीयैरावती तथा ।
चन्द्रभागा वितस्ता च सिन्धुषष्ठा बहिर्गिरः ॥ ४०० ॥

आरट्टा नाम ते देशा नष्टधर्मा न तान् व्रजेत् ॥ ४०१ ॥

व्रात्यानां दासमीयानां वाहीकानामयज्वनाम् ।
न देवाः प्रतिगृह्णन्ति पितरो ब्राह्मणास्तथा ॥ ४०२ ॥

काष्ठकुण्डेषु वाहीका मृण्मयेषु च भुञ्जते ।
सक्तुमद्यावलितेषु श्वावलीढेषु निर्घृणाः ॥ ४०३ ॥

आविकं चौष्ट्रिकं चैव क्षीरं गार्दभमेव च ।
तद्विकारांश्च वाहीकाः खादन्ति च पिबन्ति च ॥ ४०४ ॥

बहिश्च नाम हीकश्च विपाशायां पिशाचकौ ।
तयोरपत्यं वाहीका नैषा सृष्टिः प्रजापतेः ॥ ४०५ ॥

ते कथं विविधान् धर्मान् ज्ञास्यन्ते हीनयोनयः ॥ ४०६ ॥

वेदा न तेषा वेद्यश्च यज्ञा यजनमेव च ।
व्रात्यानां दासमीयानामन्नं देवा न भुञ्जते ॥ ४०७ ॥

प्रस्थला मद्रगान्धारा आरट्टा नामतः खशाः ।
वसातिसिन्धुसौवीरा इति प्रायोऽतिकुत्सिताः ॥ ४०८ ॥

(अ. ४५) तत्र वै ब्राह्मणो भूत्वा ततो भवति क्षत्रियः ।
वैश्यः शूद्रश्च वाहीकस्ततो भवति नापितः ॥ ४०९ ॥

नापितश्च ततो भूत्वा पुनर्भवति ब्राह्मणः ।
द्विजो भूत्वा च तत्रैव पुनर्दासोऽभिजायते ॥ ४१० ॥

भवन्त्येककुले विप्राः प्रसृष्टाः कामचारिणः ।
गान्धारा मद्रकाश्चैव वाहीकाश्चाल्पचेतसः ॥ ४११ ॥

सती पुरा हृता काचिदारट्टात्किल दस्युभिः ।
अधर्मतश्चोपयाता सा तानभ्यशपत्ततः ॥ ४१२ ॥

बालां बन्धुमतीं यन्मामधर्मेणोपगच्छथ।
तस्मान्नार्यो भविष्यन्ति बन्धक्यो वै कुलस्य च ॥ ४१३ ॥

न चैवास्मात्प्रमोक्षध्वं घोरात्पापान्नराधमा ।
तस्मात्तेषां भागहरा भागिनेया न सूनवः ॥ ४१४ ॥

पूज्यमाने पुरा धर्मे सर्वदेशेषु शाश्वते।
धर्मं पाञ्चनदं दृष्ट्वा धिगित्याह पितामहः ॥ ४१५ ॥

व्रात्यानां दासमीयानां कृतेऽप्यशुभकर्मणाम्।
ब्रह्मणा निन्दिते धर्मे स त्वं लोके किमब्रवीः ॥ ४१६ ॥

क्षत्रियस्य मलं भैक्ष्यं ब्राह्मणस्याश्रुतं मलम्।
मलं पृथिव्यां वाहीकाः स्त्रीणां मद्रस्त्रियो मलम् ॥ ४१७ ॥

ब्राह्मं पाञ्चालाः कौरवेयास्तु धर्म्यं
सत्यं मत्स्याः शूरसेनाश्च यज्ञम्।
प्राच्या दासा वृषला दाक्षिणात्याः
स्तेना वाहीकाः सङ्करा वै सुराष्ट्राः ॥ ४१८ ॥

कृतघ्नता परवित्तापहारो
मद्यपानं गुरुदारावमर्दः ।
वाक्पारुष्यं गोवधो रात्रिचर्या
बहिर्गेहं परवस्त्रोपभोगः।
येषां धर्मस्तान्प्रति नास्त्यधर्मो
ह्यारट्टानां पञ्चनदान् धिगस्तु ॥ ४१९ ॥

स त्वमेतादृशः शल्य नोत्तरं वक्तुमर्हसि।
पृथिव्यां सर्वदेशानां मद्रको मलमुच्यते ॥ ४२० ॥

एतज्ज्ञात्वा जोषमास्व प्रतीपं मा स्म वै कृथाः।
मा त्वां पूर्वमहं हत्वा हनिष्ये केशवार्जुनौ ॥ ४२१ ॥

शल्य०– आतुराणां परित्यागः स्वदारसुतविक्रयः।
अङ्गे प्रवर्तते कर्ण येषामधिपतिर्भवान् ॥ ४२२ ॥

सर्वत्र ब्राह्मणाः सन्ति सन्ति सर्वत्र क्षत्रियाः।
वैश्या॰ शूद्रास्तथा कर्ण स्त्रिय साध्व्यश्च सुव्रताः ॥ ४२३ ॥

परवाच्येषु निपुणः सर्वो भवति सर्वदा।
आत्मवाच्य न जानीते जानन्नपि च मुह्यति ॥ ४२४ ॥

सर्वत्र सन्ति राजान॰ स्वं स्वं धर्ममनुव्रताः।
दुर्मनुष्यान्निगृह्णन्ति सन्ति सर्वत्र धार्मिकाः ॥ ४२५ ॥

न कर्ण देशसामान्यात् सर्वः पापं निषेवते।
यादृशाः स्वस्वभावेन देवा अपि न तादृशाः ॥ ४२६ ॥

ततो दुर्योधनो राजा कर्णशल्याववारयत्।
सखिभावेन राधेयं शल्यं स्वाञ्जल्यकेन च।
ततः प्रहस्य राधेय॰ पुनर्याहीत्यचोदयत् ॥ ४२७ ॥

(अ ४६) तत॰ सेनामुखे कर्ण दृष्ट्वा राजा युधिष्ठिरः।
धनञ्जयममित्रघ्नमेकवीरमुवाच ह ॥ ४२८ ॥

पश्यार्जुन महाव्यूहं कर्णेन विहितं रणे।
युक्तं पक्षैः प्रपक्षैश्च परानीकं प्रकाशते ॥ ४२९ ॥

तदेतद्वै समालोक्य प्रत्यमित्रं महद्बलम्।
यथानाभिभवत्यस्मांस्तथा नीतिर्विधीयताम् ॥ ४३० ॥

इत्युक्तो धर्मराजेन तथेत्युक्त्वा धनञ्जयः।
व्यादिदेश स्वसैन्यानि स्वयं चागाच्चमूमुखम् ॥ ४३१ ॥

ब्रह्मेशानेन्द्रवरुणान् क्रमशो योऽवहत्पुरा।
तमाद्यं रथमास्थाय प्रयातौ केशवार्जुनौ ॥ ४३२ ॥

अथ तं रथमायान्तं दृष्ट्वाऽत्यद्भुतदर्शनम्।
उवाचाधिरथिं शल्यः पुनस्तं युद्धदुर्मदम् ॥ ४३३ ॥

अयं स रथ आयात॰ श्वेताश्वः कृष्णसारथिः।
दुर्वारः सर्वसैन्यानां विपाकः कर्मणामिव ॥ ४३४ ॥

अद्य द्रक्ष्यसि तं वीर श्वेताश्वं कृष्णसारथिम्।
निघ्नन्तं शात्रवान् सङ्ख्ये यं कर्ण परिपृच्छसि ॥ ४३५ ॥
वरुणं कोऽम्भसा हन्यादिन्धनेन च पावकम्।
को वाऽनिलं निगृह्णीयात् पिबेद्वा को महार्णवम् ॥ ४३६ ॥
ईदृग्रूपमहं मन्ये पार्थस्य युधि विग्रहम्।
न हि शक्योऽर्जुनो जेतुं युधि सेन्द्रैः सुरासुरैः ॥ ४३७ ॥
अथवा परितोषस्ते वाचोक्त्वा सुमना भव।
न स शक्यो युधा जेतुमन्यं कुरु मनोरथम् ॥ ४३८ ॥
बाहुभ्यामुद्धरेद्भूमिं दहेत् क्रुद्ध इमाः प्रजाः।
पातयेत्त्रिदिवाद्देवान्योऽर्जुनं समरे जयेत् ॥ ४३९ ॥
इति संवदतोरेव तयोः पुरुषसिंहयोः।
ते सेने समसज्जेतां गङ्गायमुनवद् भृशम् ॥ ४४० ॥

## सप्तदशदिनयुद्धम्

(अ. ४७) अथ व्यूढेष्वनीकेषु प्रेक्ष्य संशप्तकान् रणे।
क्रुद्धोऽर्जुनोऽभिदुद्राव व्याक्षिपन् गाण्डिवं धनुः ॥ ४४१ ॥
अथ संशप्तकाः पार्थमभ्यधावन् वधेषिणः ॥ ४४२ ॥
स सम्प्रहारस्तुमुलस्तेषामासीत्किरीटिना।
तस्यैव नः श्रुतो यादृङ्निवातकवचैः सह ॥ ४४३ ॥
रथानश्वान् ध्वजान्नागान् पत्तीन्रणगतानपि।
इषून् धनूंषि खड्गांश्च चक्राणि च परश्वधान् ॥ ४४४ ॥
सायुधानुद्यतान्बाहून् विविधान्यायुधानि च।
चिच्छेद द्विषतां पार्थः शिरांसि च सहस्रशः ॥ ४४५ ॥
स पुनस्तानरीन् हत्वा पुनरुत्तरतोऽवधीत्।
दक्षिणेन च पश्चाच्च क्रुद्धो रुद्रः पशूनिव ॥ ४४६ ॥
(अ. ४८) धृष्टद्युम्नमुखान् पार्थान् दृष्ट्वा कर्णो व्यवस्थितान्।
समभ्यधावत्त्वरितः पञ्चालाञ्छत्रुकर्षिणः ॥ ४४७ ॥

तं तूर्णमभिधावन्तं पञ्चाला जितकाशिनः।
प्रत्युद्ययुर्महात्मानं हंसा इव महार्णवम् ॥ ४४८ ॥

ततः सुपुङ्खैर्निशितै रथश्रेष्ठो रथेषुभिः।
अवधीत् पञ्चविंशत्या पञ्चालान् पञ्चविंशतिम् ॥ ४४९ ॥

पञ्चालेषु च शूरेषु वध्यमानेषु सायकैः।
हाहाकारो महानासीत् पञ्चालानां महाहवे ॥ ४५० ॥

स रथांस्त्रिशतं हत्वा चेदीनामनिवर्तिनाम्।
राधेयो निशितैर्बाणैस्ततोऽभ्याच्छैद्युधिष्ठिरम् ॥ ४५१ ॥

(अ. ४९) अथ वैकर्तनं कर्णं रणे क्रुद्धमिवान्तकम्।
रुरुधुः पाण्डुपञ्चाला व्याधिं मन्त्रौषधैरिव ॥ ४५२ ॥

स तान्प्रमृद्याभ्यपतत् पुनरेव युधिष्ठिरम्।
मन्त्रौषधिक्रियातीतो व्याधिरत्युल्बणो यथा ॥ ४५३ ॥

स राजगृद्धिभी रुद्धः पाण्डुपञ्चालकेकयैः।
नाशकत्तानतिक्रान्तुं मृत्युर्ब्रह्मविदो यथा ॥ ४५४ ॥

ततो युधिष्ठिरः कर्णमदूरस्थं निवारितम्।
अब्रवीत् परवीरघ्नं क्रोधसंरक्तलोचनः ॥ ४५५ ॥

कर्ण कर्ण वृथादृष्टे सूतपुत्र वचः शृणु।
सदा स्पर्धसि सङ्ग्रामे फाल्गुनेन तरस्विना।
तथास्मान्बाधसे नित्यं धार्तराष्ट्रमते स्थितः ॥ ४५६ ॥

यद्बलं यच्च ते वीर्यं प्रद्वेषो यस्तु पाण्डुषु।
तत्सर्वं दर्शयस्वाद्य पौरुषं महदास्थितः ॥ ४५७ ॥

युद्धश्रद्धां च तेऽद्याहं विनेष्यामि महाहवे ॥ ४५८ ॥

एवमुक्त्वा महाराज कर्णं पाण्डुसुतस्तदा।
सुवर्णपुङ्खैर्दशभिर्विव्याधायस्मयैः शरैः ॥ ४५९ ॥

तं सूतपुत्रो दशभिः प्रत्यविद्ध्यदरिन्दमः।
वत्सदन्तैर्महेष्वासः प्रहसन्निव भारत ॥ ४६० ॥

सोऽवज्ञाय तु निर्विद्धः सूतपुत्रेण मारिष।
प्रजज्वाल ततः क्रोधाद्धविषेव हुताशनः॥ ४६१ ॥

ततो विस्फार्य सुमहच्चापं हेमपरिष्कृतम्।
समाधत्त शितं बाणं गिरीणामपि दारणम्॥ ४६२ ॥

स तु वेगवता मुक्तो बाणो वज्राशनिस्वनः।
विवेश सहसा कर्णं सव्ये पार्श्वे महारथम्॥ ४६३ ॥

स तु तेन प्रहारेण पीडितः प्रमुमोह वै।
राजापि भूयो नाजघ्ने कर्णं पार्थहितेप्सया॥ ४६४ ॥

ततो हाहाकृतं सर्वं धार्तराष्ट्रबलं महत्।
विवर्णमुखभूयिष्ठं कर्णं दृष्ट्वा तथागतम्॥ ४६५ ॥

प्रतिलभ्य तु राधेयः संज्ञां नातिचिरादिव।
दध्रे राजविनाशाय मनः क्रूरपराक्रमः॥ ४६६ ॥

स हेमविकृत चापं विस्फार्य विजयं महत्।
अवाकिरदमेयात्मा पाण्डवं निशितैः शरैः॥ ४६७ ॥

ततो बाह्वोर्ललाटे च हृदि चैव युधिष्ठिरः।
चतुर्भिस्तोमरैः कर्णं ताडयित्वानदन्मुदा॥ ४६८ ॥

उद्भिन्नरुधिरः कर्णः क्रुद्धः सर्प इव श्वसन्।
ध्वजं चिच्छेद भल्लेन त्रिभिर्विव्याध पाण्डवम्॥ ४६९ ॥

कालवालास्तु ये पार्थं दन्तवर्णाऽवहन्हयाः।
तैर्युक्तं रथमास्थाय प्रायाद्राजा पराङ्मुखः॥ ४७० ॥

अभिद्रुत्य तु राधेयः पाण्डुपुत्रं युधिष्ठिरम्।
ग्रहीतुमिच्छन् स बलात् कुन्तीवाक्यं च सोऽस्मरत्॥४७१॥

अब्रवीत्प्रहसन्राजन् कुत्सयन्निव पाण्डवम्।
कथं नाम कुले जातः क्षत्रधर्मे व्यवस्थितः॥ ४७२ ॥

प्रजह्यात्समरं भीतः प्राणान् रक्षन् महाहवे।
न भवान् क्षत्रधर्मेषु कुशलो हीति मे मतिः॥ ४७३ ॥

ब्राह्मे बले भवान् युक्तः स्वाध्याये यज्ञकर्मणि ।
मा स्म युद्धयस्व कौन्तेय मा स्म वीरान्समासदः ॥ ४७४ ॥

मादृशान्विब्रुवन्युद्धे एतदन्यच्च लप्स्यसे ।
स्वगृहं गच्छ कौन्तेय यत्र तौ केशवार्जुनौ ।
नहि त्वां समरे राजन् हन्यात्कर्णः कथञ्चन ॥ ४७५ ॥

एवमुक्त्वा ततः पार्थं विसृज्य च महाबलः ।
न्यहनत् पाण्डवीं सेनां वज्रहस्त इवासुरीम् ॥ ४७६ ॥

ततोऽपायाद्द्रुतं राजन् व्रीडन्निव नरेश्वरः ॥ ४७७ ॥

ततो युधिष्ठिरानीकं दृष्ट्वा कर्णः पराङ्मुखम् ।
कुरुभिः सहितो वीरः प्रहृष्टः पृष्ठतोऽन्वगात् ॥ ४७८ ॥

काल्यमानं बलं दृष्ट्वा धर्मराजो युधिष्ठिरः ।
स्वान् योधानब्रवीत्क्रुद्धो निघ्नतैतान् किमासत ॥ ४७९ ॥

ततो राज्ञाऽभ्यनुज्ञाता पाण्डवानां महारथाः ।
भीमसेनमुखाः सर्वे पुत्रांस्ते प्रत्युपाद्रवन् ॥ ४८० ॥

तेषामापततां वेगमविषह्यं निरीक्ष्य च ।
व्यद्रवत्तावकं सैन्यं लोड्यमानं समन्ततः ।
सिंहार्दितमिवारण्ये यथा गजकुलं तथा ॥ ४८१ ॥

(अ. ५०) कर्णोऽपि दृष्ट्वा द्रवतो धार्तराष्ट्रान्सराजकान् ।
मद्रराजमुवाचेदं याहि भीमरथं प्रति ॥ ४८२ ॥

ततः प्रायाद्रथेनाशु शल्यस्तत्र विशां पते ।
यत्र भीमो महेष्वासो व्यद्रावयत वाहिनीम् ॥ ४८३ ॥

भीमसेनोऽथ संक्रुद्धस्तस्य सैन्यं दुरासदम् ।
नाराचैर्विमलैस्तीक्ष्णैर्दिशः प्राद्रावयद्बली ॥ ४८४ ॥

ततो मुहूर्ताद्राजेन्द्र पाण्डवः कर्णमाद्रवत् ।
तस्य कर्णो धनुर्मध्ये द्विधा चिच्छेद पत्रिभिः ॥ ४८५ ॥
अथैनं छिन्नधन्वानं प्रत्यविध्यत् स्तनान्तरे ॥ ४८६ ॥

यस्य यद्धि रणे व्यङ्गं पितृतो मातृतोऽपि वा।
कर्मतः शीलतो वाऽपि स तच्छ्रावयते युधि ॥ ५०० ॥

तान्दृष्ट्वा समरे शूरांस्तर्जमानान् परस्परम्।
अभवन्मे मती राजन्नैषामस्तीति जीवितम् ॥ ५०१ ॥

तेषां दृष्ट्वा तु क्रुद्धानां वपूंष्यमिततेजसाम्।
अभवन्मे भयं तीव्रं कथमेतद्भविष्यति ॥ ५०२ ॥

ततस्ते पाण्डवा राजन् कौरवाश्च महारथा ।
ततक्षुः सायकैस्तीक्ष्णैर्निघ्नन्तो हि परस्परम् ॥ ५०३ ॥

(अ. ५२) वध्यतां तत्र शूराणां क्रोशतां च परस्परम्।
घोरमायोधनं जज्ञे पशूनां वैशसं यथा ॥ ५०४ ॥

रुधिरेण समास्तीर्णा भाति भारत मेदिनी।
शक्रगोपगणाकीर्णा प्रावृषीव यथा धरा ॥ ५०५ ॥

यथा वा वाससी शुक्ले महारञ्जनरञ्जिते।
बिभृयाद्युवती श्यामा तद्वदासीद्वसुन्धरा ॥ ५०६ ॥

वर्तमाने तथा युद्धे घोररूपे सुदारुणे।
व्यषीदत्कौरवी सेना भिन्ना नौरिव सागरे ॥ ५०७ ॥

(अ. ५६) ततस्तु चेदिकारूषान् सृञ्जयांश्च महारथान्।
कर्णो जघान समरे भीमसेनस्य पश्यतः ॥ ५०८ ॥

भीमसेनस्ततः कर्णं विहाय रथसत्तमम्।
प्रययौ कौरवं सैन्यं कक्षमग्निरिव ज्वलन् ॥ ५०९ ॥

सूतपुत्रोऽपि समरे पञ्चालान् केकयांस्तथा।
सृञ्जयांश्च महेष्वासान्निजघान सहस्रशः ॥ ५१० ॥

संशप्तकेषु पार्थश्च कौरवेषु वृकोदरः।
पञ्चालेषु तथा कर्णः क्षयं चक्रुर्महारथाः ॥ ४११ ॥

ते क्षत्रिया दह्यमानास्त्रिभिस्तैः पावकोपमैः।
जग्मुर्विनाशं समरे राजन् दुर्मन्त्रिते तव ॥ ५१२ ॥

वर्तमाने तथा रौद्रे सङ्ग्रामेऽद्भुतदर्शने।
निहत्य पृतनामध्ये संशप्तकगणान् बहून् ॥ ५१३ ॥

विगाह्य तु रथानीकमश्वसङ्घांश्च फाल्गुनः।
व्यचरत्पृतनामध्ये पाशहस्त इवान्तकः ॥ ५१४ ॥

तं दृष्ट्वा युधि विक्रान्तं सेनाया तव भारत।
संशप्तकगणान् भूयः पुत्रस्ते समचूचुदत् ॥ ५१५ ॥

ततो रथसहस्रेण द्विरदानां त्रिभिः शतैः।
चतुर्दशसहस्रैस्तु तुरगाणां महाहवे।
अभ्यवर्तन्त कौन्तेयं छादयन्तो महारथाः ॥ ५१६ ॥

स च्छाद्यमानः समरे शरैः परबलार्दनः।
हत्वा दशसहस्राणि पार्थिवाना महारथः।
संशप्तकानां कौन्तेयः प्रत्यक्षं त्वरितोऽभ्ययात् ॥ ५१७ ॥

प्रत्यक्षं च समासाद्य पार्थः काम्बोजरक्षितम्।
प्रममाथ बलं बाणैर्दानवानिव वासवः ॥ ५१८ ॥

तस्मिन्प्रपक्षे पक्षे च निहते सव्यसाचिना।
अर्जुनं जयतां श्रेष्ठं त्वरितो द्रौणिरभ्ययात् ॥ ५१९ ॥

ततः प्रासृजदुग्राणि शरवर्षाणि सङ्घशः ॥ ५२० ॥

तैः पतद्भिर्महाराज द्रौणिमुक्तैः समन्ततः।
सञ्छादितौ रथस्थौ तावुभौ कृष्णधनञ्जयौ ॥ ५२१ ॥

वर्धमाने च राजेन्द्र द्रोणपुत्रे महाबले।
हीयमाने च कौन्तेये कृष्णे रोषः समाविशत् ॥ ५२२ ॥

ततः क्रुद्धोऽब्रवीत्कृष्णः पार्थं सप्रणयं तदा।
कच्चित्ते गाण्डिवं हस्ते रथे तिष्ठसि चार्जुन ॥ ५२३ ॥

कच्चित्कुशलिनौ बाहू मुष्टिर्वा न व्यशीर्यत।
उदीर्यमाणं हि रणे पश्यामि द्रौणिमाहवे ॥ ५२४ ॥

गुरुपुत्र इति ह्येनं मानयन् भरतर्षभ ।
उपेक्षां कुरु मा पार्थ नायं काल उपेक्षितुम् ॥ ५२५ ॥
एवमुक्तस्तु कृष्णेन गृह्य भल्लांश्चतुर्दश ।
त्वरमाणस्त्वराकाले द्रौणेर्धनुरथाच्छिनत् ॥ ५२६ ॥
ध्वजं छत्रं पताकाञ्च रथं शक्तिं गदां तथा ।
जत्रुदेशे च सुभृशं वत्सदन्तैरताडयत् ॥ ५२७ ॥
स मूर्च्छां परमां गत्वा ध्वजयष्टिं समाश्रितः ॥ ५२८ ॥
तं विसंज्ञं महाराज शत्रुणा भृशपीडितम् ।
अपोवाह रणात्सूतो रक्षमाणो धनञ्जयात् ॥ ५२९ ॥

## कर्णबाणैः क्षतविक्षतस्य युधिष्ठिरस्य अपयानम्

(अ.६२) दुर्योधनस्तव सुतः प्रमत्ते श्वेतवाहने ।
अभ्येत्य सहसा क्रुद्धः सैन्यार्धेनाभिसंवृतः ।
पर्यवारयदायान्तं युधिष्ठिरममर्षणम् ॥ ५३० ॥
क्षुरप्राणां त्रिसप्तत्या ततोऽविध्यत पाण्डवम् ॥ ५३१ ॥
अक्रुध्यत भृशं तत्र कुन्तीपुत्रो युधिष्ठिरः ।
स भल्लांस्त्रिंशतस्तूर्णं तव पुत्रे न्यवेशयत् ॥ ५३२ ॥
दृष्ट्वा तव सुतं तत्र गाढविद्धं सुतेजनैः ।
अभ्यधावद् दृढं क्रुद्धो राधेयो रथिनां वरः ॥ ५३३ ॥
ततः सर्वा दिशो राजन् सायकैर्विप्रमोहयन् ।
अपीडयद् भृशं कर्णो धर्मराजं युधिष्ठिरम् ॥ ५३४ ॥
(अ.६३) तथैव राजा राधेयं प्रत्यविध्यत् स्तनान्तरे ।
शरैस्त्रिभिश्च यन्तारं चतुर्भिश्चतुरो हयान् ॥ ५३५ ॥
चक्ररक्षौ तु पार्थस्य माद्रीपुत्रौ परन्तपौ ।
तावप्यधावतां कर्णं राजानं मा वधीरिति ॥ ५३६ ॥
दन्तवर्णांस्तु राधेयो निजघान मनोजवान् ।
युधिष्ठिरस्य सङ्ग्रामे कालवालान् हयोत्तमान् ॥ ५३७ ॥

ततोऽपरेण भल्लेन शिरस्त्राणमपातयत् ।
कौन्तेयस्य महेष्वास प्रहसन्निव सूतजः ॥ ५३८ ॥

तथैव नकुलस्यापि हयान्हत्वा प्रतापवान् ।
ईषां धनुश्च चिच्छेद माद्रीपुत्रस्य धीमतः ॥ ५३९ ॥

तौ हताश्वौ हतरथौ पाण्डवौ भृशविक्षतौ ।
भ्रातरावारुरुहतुः सहदेवरथं तदा ॥ ५४० ॥

तौ दृष्ट्वा मातुलस्तत्र विरथौ परवीरहा ।
अभ्यभाषत राधेयं मद्रराजोऽनुकम्पया ॥ ५४१ ॥

योद्धव्यमद्य पार्थेन फाल्गुनेन त्वया सह ।
किमर्थं धर्मराजेन युध्यसे भृशरोषितः ॥ ५४२ ॥

यदर्थं धार्तराष्ट्रेण सततं मानितो भवान् ।
तं पार्थं जहि राधेय किं ते हत्वा युधिष्ठिरम् ॥ ५४३ ॥

शङ्खयोर्ध्मायतोः शब्दः सुमहानेष कृष्णयोः ।
श्रूयते चापघोषोऽयं प्रावृषीवाम्बुदस्य ह ॥ ५४४ ॥

असौ निघ्नन्रथोदारानर्जुनः शरवृष्टिभिः ।
सर्वां ग्रसति नः सेनां कर्ण पश्यैनमाहवे ॥ ५४५ ॥

भीमसेनश्च वै राज्ञा धार्तराष्ट्रेण युध्यते ।
यथा न हन्यात्तं भीमः सर्वेषां नोऽद्य पश्यताम् ।
तथा राधेय क्रियतां राजा मुच्येत नो यथा ॥ ५४६ ॥

इति शल्यवचः श्रुत्वा राधेयः पृथिवीपते ।
दृष्ट्वा दुर्योधनं चैव भीमग्रस्तं महाहवे ॥ ५४७ ॥

अजातशत्रुमुत्सृज्य माद्रीपुत्रौ च पाण्डवौ ।
तव पुत्रं परित्रातुमभ्यधावत वीर्यवान् ॥ ५४८ ॥

गते कर्णे तु कौन्तेयः पाण्डुपुत्रो युधिष्ठिरः ।
अपायाज्जवनैरश्वैः सहदेवश्च मारिष ॥ ५४९ ॥

ताभ्यां स सहितस्तूर्णं व्रीडन्निव नरेश्वरः ।
प्राप्य सेनानिवेशं च मार्गणैः क्षतविक्षत. ।
अवतीर्णो रथात्तूर्णमाविशच्छयनं शुभम् ॥ ५५० ॥

(अ.६४) द्रौणिस्तु रथवंशेन महता परिवारित. ।
अपतत्सहसा राजन् यत्र पार्थो व्यवस्थितः ॥ ५५१ ॥

तमापतन्तं सहसा शूरः शौरिसहायवान् ।
दधार सहसा पार्थो वेलेव मकरालयम् ॥ ५५२ ॥

ततः क्रुद्धो महाराज द्रोणपुत्रः प्रतापवान् ।
अर्जुनं वासुदेवं च च्छादयामास सायकैः ॥ ५५३ ॥

अर्जुनस्तु ततो दिव्यमस्त्रं चक्रे हसन्निव ।
तदस्त्रं वारयामास ब्राह्मणो युधि भारत ॥ ५५४ ॥

यद्यद्धि व्याक्षिपद्युद्धे पाण्डवोऽस्त्रं जिघांसया ।
तत्तदस्त्रं महेष्वासो द्रोणपुत्रो व्यशातयत् ॥ ५५५ ॥

तत प्रहस्य बीभत्सुर्द्रोणपुत्रस्य संयुगे ।
क्षिप्रं रश्मीनथाश्वानां क्षुरप्रैश्चिच्छिदे जय. ॥ ५५६ ॥

प्राद्रवंस्तुरगास्ते तु शरवेगप्रपीडिता. ।
ततोऽभून्निनदो घोरस्तव सैन्यस्य भारत ॥ ५५७ ॥

पाण्डवास्तु जयं लब्ध्वा तव सैन्यं समाद्रवन् ।
समन्तान्निशितान् बाणान् विमुञ्चन्तो जयैषिणः ॥ ५५८ ॥

पाण्डवैस्तु महाराज धार्तराष्ट्री महाचमू. ।
न चातिष्ठत सङ्ग्रामे पीड्यमाना समन्तत. ॥ ५५९ ॥

तिष्ठ तिष्ठेति च तत. सूतपुत्रस्य जल्पत. ।
नावतिष्ठति सा सेना वध्यमाना महात्मभि. ॥ ५६० ॥

कर्णस्त्वेको युधां श्रेष्ठो विधूम इव पावकः ।
दहन् शत्रून्नरव्याघ्र शुशुभे स परंतपः ॥ ५६१ ॥

ते वध्यमानाः समरे सूतपुत्रेण सृञ्जयाः ।
अर्जुनं वासुदेवं च क्रोशन्ति च मुहुर्मुहुः ॥ ५६२ ॥

श्रुत्वा तु निनदं तेषां वध्यतां कर्णसायकैः ।
अथाब्रवीद्वासुदेवं कुन्तीपुत्रो धनञ्जयः ।
भार्गवास्त्रं महाघोरं दृष्ट्वा तत्र समीरितम् ॥ ५६३ ॥

पश्य कृष्ण महाबाहो भार्गवास्त्रस्य विक्रमम् ।
नैतदस्त्रं हि समरे शक्यं हन्तुं कथञ्चन ॥ ५६४ ॥

सूतपुत्रं च संरब्धं पश्य कृष्ण महारणे ।
अन्तकप्रतिमं वीर्यं कुर्वाणं कर्म दारुणम् ॥ ५६५ ॥

अभीक्ष्णं चोदयन्नश्वान् प्रेक्षते मां मुहुर्मुहुः ।
न च पश्यामि समरे कर्णं प्रति पलायितुम् ॥ ५६६ ॥

जीवन्प्राप्नोति पुरुषः सङ्ख्ये जयपराजयौ ।
मृतस्य तु हृषीकेश भङ्ग एव कुतो जयः ॥ ५६७ ॥

एवमुक्तस्तु पार्थेन कृष्णो मतिमतां वरम् ।
धनञ्जयमुवाचेदं प्राप्तकालमरिंदमम् ॥ ५६८ ॥

कर्णेन हि दृढं राजा कुन्तीपुत्रः परिक्षतः ।
तं दृष्ट्वाश्वास्य च पुनः कर्णं पार्थ वधिष्यसि ॥ ५६९ ॥

एवमुक्त्वा पुनः प्रायाद्द्रष्टुमिच्छन् युधिष्ठिरम् ।
श्रमेण ग्राहयिष्यंश्च युद्धे कर्णं विशां पते ॥ ५७० ॥

ततो धनञ्जयो द्रष्टुं राजानं बाणपीडितम् ।
रथेन प्रययौ क्षिप्रं सङ्ग्रामात् केशवाज्ञया ॥ ५७१ ॥

## युधिष्ठिरं द्रष्टुं कृष्णार्जुनागमनम्

(अ.६५) द्रौणिं पराजित्य ततोऽग्रधन्वा
कृत्वा महद्दुष्करं शूरकर्म ।
आलोकयामास ततः स्वसैन्यं
धनञ्जयः शत्रुभिरप्रधृष्यः ॥ ५७२ ॥

अपश्यमानस्तु किरीटमाली
युधिष्ठिरं भ्रातरमाजमीढम्।
उवाच भीमं तरसाऽभ्युपेत्य
राज्ञ प्रवृत्तिं त्विह कुत्र राजा॥ ५७३॥

भीम०– अपयात इतो राजा धर्मपुत्रो युधिष्ठिर।
कर्णबाणाभितप्ताङ्गो यदि जीवेत् कथञ्चन॥ ५७४॥

अर्जुन०– तस्माद्भवान् शीघ्रमितः प्रयातु
राज्ञ प्रवृत्त्यै कुरुसत्तमस्य।
नूनं स विद्धोऽतिभृश पृषत्कैः
कर्णेन राजा शिबिरं गतोऽसौ॥ ५७५॥

भीम०– त्वमेव जानीहि महानुभाव
राज्ञः प्रवृत्तिं भरतर्षभस्य।
अहं हि यद्यर्जुन यास्यमित्रा
वदन्ति मां भीत इति प्रवीराः॥ ५७६॥

ततस्तु गत्वा पुरुषप्रवीरौ
राजानमासाद्य शयानमेकम्।
रथादुभौ प्रत्यवरुह्य तस्मा-
द्ववन्दतुर्धर्मराजस्य पादौ॥ ५७७॥

महासत्त्वौ हि तौ दृष्ट्वा सहितौ केशवार्जुनौ।
हतमाधिरथिं मेने सङ्ख्ये गाण्डीवधन्वना॥ ५७८॥

तावभ्यनन्दत् कौन्तेयः साम्ना परमवल्गुना।
स्मितपूर्वममित्रघ्नं पूजयन् भरतर्षभ॥ ५७९॥

(अ.६६) स्वागतं देवकीमातः स्वागतं ते धनञ्जय।
युधि०– प्रियं मे दर्शनं गाढं युवयोरच्युतार्जुनौ॥ ५८०॥
अक्षताभ्यामरिष्टाभ्यां हतः कर्णो महारथः॥ ५८१॥

त्रातारं धार्तराष्ट्राणां गन्तारं वाहिनीमुखे।
हन्तारं परसैन्यानाममित्रगणमर्दनम्॥ ५८२॥

दुर्योधनहिते युक्तमस्मद्दुःखाय चोद्यतम्।
अप्रधृष्यं महायुद्धे देवैरपि सवासवैः॥ ५८३॥

अन्तकं मम मित्राणां हत्वा कर्णं महामृधे।
दिष्ट्या युवामनुप्राप्तौ जित्वाऽसुरमिवामरौ॥ ५८४॥

त्रयोदशाहं वर्षाणि यस्माद्भीतो धनञ्जय।
न स्म निद्रां लभे रात्रौ न चाहनि सुखं क्वचित्॥ ५८५॥

यत्र यत्र हि गच्छामि कर्णाद्भीतो धनञ्जय।
तत्र तत्र हि पश्यामि कर्णमेवाग्रतः स्थितम्॥ ५८६॥

सोऽहं तेनैव वीरेण समरेष्वपलायिना।
सहयः सरथः पार्थ जित्वा जीवन् विसर्जितः॥ ५८७॥

को नु मे जीवितेनार्थो राज्येनार्थो भवेत् पुनः।
ममैवं धिक्कृतस्याद्य कर्णेनाहवशोभिना॥ ५८८॥

न प्राप्तपूर्वं यद्भीष्मात् कृपाद्द्रोणाच्च संयुगे।
तत् प्राप्तमद्य मे युद्धे सूतपुत्रान्महारथात्॥ ५८९॥

स त्वां पृच्छामि कौन्तेय यथाऽद्य कुशलं तथा।
तन्ममाचक्ष्व कार्त्स्न्येन यथा कर्णो हतस्त्वया॥ ५९०॥

यत्तन्मया बाणसमर्पितेन
ध्यातोऽसि कर्णस्य वधाय वीर।
तन्मे त्वया कच्चिदमोघमद्य
ध्यानं कृतं कर्णनिपातनेन॥ ५९१॥

यद्दर्पपूर्णः स सुयोधनोऽस्मा-
नुदीक्षते कर्णसमाश्रयेण।
कच्चित्त्वया सोऽद्य समाश्रयोऽस्य
भग्नः पराक्रम्य सुयोधनस्य॥ ५९२॥

योऽनः पुरा षण्ढतिलानवोच-
त्सभामध्ये कौरवाणां समक्षम्।
स दुर्मतिः कच्चिदुपेत्य सङ्ख्ये
त्वया हतः सूतपुत्रो ह्यमर्षी ॥ ५९३ ॥

(अ. ६७) अर्जुन०- संशप्तकैर्युध्यमानस्य मेऽद्य
सेनाग्रयायी कुरुसैन्येषु राजन्।
आशीविषाभान् खगमान् प्रमुञ्चन्
द्रौणिः पुरस्तात् सहसाऽभ्यतिष्ठत् ॥ ५९४ ॥

अहं हि तं त्रिंशता वज्रकल्पैः
समार्दयं निमिषस्यान्तरेण।
स विक्षरन्रुधिरं सर्वगात्रै
रथानीकं सूतसूनोर्विवेश ॥ ५९५ ॥

ततोऽभिभूतं युधि वीक्ष्य सैन्यं
वित्रस्तयोधं द्रुतवाजिनागम्।
पञ्चाशता रथमुख्यैः समेत्य
कर्णस्त्वरन् मामुपायात् प्रमाथी ॥ ५९६ ॥

तान् सूदयित्वाऽहमपास्य कर्णं
द्रष्टुं भवन्तं त्वरयाऽभियातः।
श्रुत्वा तु त्वां तेन दृष्टं समेत-
मश्वत्थाम्ना पूर्वतरं क्षतं च ॥ ५९७ ॥

मन्ये कालमपयानस्य राजन्
क्रूरात्कर्णात्तेऽहमचिन्त्यकर्मन्।
आयाहि पश्याद्य युयुत्समानं
मां सूतपुत्रस्य जये रणाय ॥ ५९८ ॥

कर्णं न चेदद्य निहन्मि राजन्
सबान्धवं युध्यमानं प्रसह्य।

प्रतिश्रुत्याकुर्वतो वै गतिर्या
कष्टा याता तामह राजसिंह ॥ ५९९ ॥

आमन्त्रये त्वा ब्रूहि जयं रणे मे
पुरा भीम धार्तराष्ट्रा ग्रसन्ते ।
सौतिं हनिष्यामि नरेन्द्रसिंह
सैन्यं तथा शत्रुगणांश्च सर्वान् ॥ ६०० ॥

## युधिष्ठिरकृतः अर्जुनधिक्कारः, अर्जुनाय श्रीकृष्णस्योपदेशः

(अ.६८) श्रुत्वा कर्ण कल्पमुदारवीर्यं
क्रुद्धः पार्थः फाल्गुनस्यामितौजाः ।
धनञ्जयं वाक्यमुवाच चेदं
युधिष्ठिरः कर्णशराभितप्तः ॥ ६०१ ॥

विप्रद्रुता तात चमूस्त्वदीया
तिरस्कृता चाद्य यथा न साधु ।
भीतो भीम त्यज्य चायास्तथा त्वं
यन्नाशकः कर्णमथो निहन्तुम् ॥ ६०२ ॥

यत्तद्वाक्यं द्वैतवने त्वयोक्तं
कर्णं हन्ताऽस्म्येकरथेन सत्यम् ।
त्यक्त्वा तं वै कथमद्यापयातः
कर्णाद्भीतो भीमसेनं विहाय ॥ ६०३ ॥

इदं यदि द्वैतवनेऽप्यवक्षः
कर्णं योद्धुं न प्रशक्ष्ये नृपेति ।
वयं ततः प्राप्तकालं च सर्वे
कृत्यान्युपैष्याम तथैव पार्थ ॥ ६०४ ॥

मयि प्रतिश्रुत्य वधं हि तस्य
न वै कृतं तच्च तथैव वीर ।

आनीय नः शत्रुमध्यं स कस्मा-
त्समुत्क्षिप्य स्थण्डिले प्रत्यर्पिष्ठा ॥ ६०५ ॥

त्वष्ट्रा कृतं वाहमकूजनाक्षं
शुभं समास्थाय कपिध्वजं तम्।
खङ्गं गृहीत्वा हेमपट्टानुबद्धं
धनुश्चेदं गाण्डिवं तालमात्रम्।
स केशवेनोह्यमानः कथं त्वं
कर्णाद्भीतो व्यपयातोऽसि पार्थ ॥ ६०६ ॥

धनुश्च तत् केशवाय प्रयच्छ
यन्ता भविष्यस्त्वं रणे केशवस्य ।
तदा हनिष्यत् केशवः कर्णमुग्रं
मरुत्पतिर्वृत्रमिवात्तवज्रः ॥ ६०७ ॥

राधेयमेतं यदि नाद्य शक्त-
श्चरन्तमुग्रं प्रतिबाधनाय ।
प्रयच्छान्यस्मै गाण्डिवमेतदद्य
त्वत्तो योऽस्त्रैरभ्यधिको वा नरेन्द्रः ॥ ६०८ ॥

मासेऽपतिष्यः पञ्चमे त्वं सुकृच्छ्रे
नवा गर्भे आभविष्यः पृथायाः।
तत्ते श्रेयो राजपुत्राभविष्य-
न्न चेत्सङ्ग्रामादपयानं दुरात्मन् ॥ ६०९ ॥

धिग्गाण्डीवं धिक् च ते बाहुवीर्य-
मसङ्ख्येयान् बाणगणांश्च धिक् ते ।
धिक् ते केतुं केसरिणः सुतस्य
कृशानुदत्तं च रथं च धिक्ते ॥ ६१० ॥

(अ. ६९) युधिष्ठिरेणैवमुक्तः कौन्तेयः श्वेतवाहनः।
असिं जग्राह सङ्क्रुद्धो जिघांसुर्भरतर्षभम् ॥ ६११ ॥

तस्य कोपं समुद्वीक्ष्य चित्तज्ञः केशवस्तदा।
उवाच किमिदं पार्थ गृहीत खड्ग इत्युत ॥ ६१२ ॥

अपयातोऽसि कौन्तेय राजा द्रष्टव्य इत्यपि।
स राजा भवता दृष्टः कुशली च युधिष्ठिरः ॥ ६१३ ॥

हर्षकाले च सम्प्राप्ते किमिदं मोहकारितम्।
प्रहर्तुमिच्छसे कस्मात्किं वा ते चित्तविभ्रमः ॥ ६१४ ॥

एवमुक्तस्तु कृष्णेन प्रेक्षमाणो युधिष्ठिरम्।
अर्जुनः प्राह गोविन्दं क्रुद्धः सर्प इव श्वसन् ॥ ६१५ ॥

अन्यस्मै देहि गाण्डीवमिति मां योऽभिचोदयेत्।
भिन्द्यामहं तस्य शिर इत्युपांशुव्रतं मम ॥ ६१६ ॥

तदुक्तं मम चानेन राज्ञाऽमितपराक्रम।
समक्षं तव गोविन्द न तत् क्षन्तुमिहोत्सहे ॥ ६१७ ॥

तस्मादेनं वधिष्यामि राजानं धर्मभीरुकम्।
प्रतिज्ञां पालयिष्यामि हत्वैनं नरसत्तमम्।
एतदर्थं मया खड्गो गृहीतो यदुनन्दन ॥ ६१८ ॥

कृष्ण०— इदानीं पार्थ जानामि न वृद्धाः सेवितास्त्वया।
कालेन पुरुषव्याघ्र संरम्भं यद्भवानगात् ॥ ६१९ ॥

नहि धर्मविभागज्ञः कुर्यादेवं धनञ्जय।
यथा त्वं पाण्डवाद्येह धर्मभीरुरपण्डितः ॥ ६२० ॥

अकार्याणां क्रियाणां च संयोगं यः करोति वै।
कार्याणामक्रियाणां च स पार्थ पुरुषाधमः ॥ ६२१ ॥

अनुसृत्य तु ये धर्मं कथयेयुरुपस्थिताः।
समासविस्तरविदां न तेषां वेत्सि निश्चयम् ॥ ६२२ ॥

अनिश्चयज्ञो हि नरः कार्याकार्यविनिश्चये।
अवशो मुह्यते पार्थ यथा त्वं मूढ एव तु ॥ ६२३ ॥

न हि कार्यमकार्यं वा सुखं ज्ञातु कथञ्चन।
श्रुतेन ज्ञायते सर्व तच्च त्व नावबुध्यसे ॥ ६२४ ॥
अविज्ञानाद्भवान्यच्च धर्म रक्षति धर्मवित्।
प्राणिनां त्व वधं पार्थ धार्मिको नावबुध्यसे ॥ ६२५ ॥
प्राणिनामवधस्तात सर्वज्यायान्मतो मम।
अनृतां वा वदेद्वाचं न तु हिंस्यात्कथञ्चन ॥ ६२६ ॥
स कथं भ्रातर ज्येष्ठं राजानं धर्मकोविदम्।
हन्याद्भवान्नरश्रेष्ठ प्राकृतोऽन्य· पुमानिव ॥ ६२७ ॥
त्वया चैवं व्रतं पार्थ बालेनेव कृतं पुरा।
तस्मादधर्मसयुक्तं मौर्ख्यात् कर्म व्यवस्यसि ॥ ६२८ ॥
इदं धर्मरहस्यं च तव वक्ष्यामि पाण्डव।
यद्ब्रूयात्तव भीष्मो हि पाण्डवो वा युधिष्ठिरः ॥ ६२९ ॥
सत्यस्य वदिता साधुर्न सत्याद्विद्यते परम्।
तत्त्वेनैव सुदुर्ज्ञेयं पश्य सत्यमनुष्ठितम् ॥ ६३० ॥
भवेत्सत्यमवक्तव्यं वक्तव्यमनृतं भवेत्।
यत्रानृतं भवेत्सत्यं सत्यं चाप्यनृतं भवेत् ॥ ६३१ ॥
भवेत् सत्यमवक्तव्यं न वक्तव्यमनुष्ठितम्।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ॥ ६३२ ॥

विवाहकाले रतिसम्प्रयोगे
प्राणात्यये सर्वधनापहारे।
विप्रस्य चार्थे ह्यनृतं वदेत
पञ्चानृतान्याहुरपातकानि ॥ ६३३ ॥

किमाश्चर्यं कृतप्रज्ञः पुरुषोऽपि सुदारुणः।
सुमहत् प्राप्नुयात् पुण्यं बलाकोऽन्धवधादिव ॥ ६३४ ॥
किमाश्चर्यं पुनर्मूढो धर्मकामो ह्यपण्डितः।
सुमहत्प्राप्नुयात्पापमापगास्विव कौशिकः ॥ ६३५ ॥
अर्जुन०—आचक्ष्व भगवन्नेतद्यथा विन्दाम्यहं तथा।
बलाकस्यानुसम्बन्धं नदीनां कौशिकस्य च ॥ ६३६ ॥

## व्याधब्राह्मणकथा, सत्यासत्यनिर्णयः

वासु०- पुरा व्याधोऽभवत्कश्चिद्बलाको नाम भारत।
यात्रार्थं पुत्रदारस्य मृगान् हन्ति न कामतः ॥ ६२७ ॥

स कदाचिन्मृग लिप्सुर्नाभ्यविन्दन्मृगं क्वचित् ॥ ६३८ ॥

अप. पिबन्तं ददृशे श्वापदं घ्राणचक्षुषम्।
अदृष्टपूर्वमपि तत् सत्त्वं तेन हतं तदा ॥ ६३९ ॥

अन्धे हते ततो व्योम्नः पुष्पवर्षं पपात च ॥ ६४० ॥

तद्भूत सर्वभूतानामभावाय किलार्जुन।
तपस्तप्त्वा वरं प्राप्तं कृतमन्धं स्वयंभुवा ॥ ६४१ ॥

तद्धत्वा सर्वभूतानामभावकृतनिश्चयम्।
ततो बलाक. स्वरगादेवं धर्म' सुदुर्विदः ॥ ६४२ ॥

कौशिकोऽप्यभवद्विप्रस्तपस्वीनो बहुश्रुतः।
नदीनां सङ्गमे ग्रामाददूरात् स किलावसत् ॥ ६४३ ॥

सत्यं मया सदा वाच्यमिति तस्याभवद्व्रतम्।
सत्यवादीति विख्यात. स तदाऽसीद्धनञ्जय ॥ ६४४ ॥

अथ दस्युभयात् केचित्तदा तद्वनमाविशन्।
तत्रापि दस्यव. क्रुद्धास्तानमार्गन्त यत्नत. ॥ ६४५ ॥

अथ कौशिकमभ्येत्य प्राहुस्ते सत्यवादिनम्।
कतमेन पथा याता भगवन् बहवो जनाः।
सत्येन पृष्ट. प्रब्रूहि यदि तान् वेत्थ शंस नः ॥ ६४६ ॥

स पृष्ट. कौशिकः सत्यं वचनं तानुवाच ह।
बहुवृक्षलतागुल्ममेतद्वनमुपाश्रिता. ॥ ६४७ ॥

ततस्ते तान्समासाद्य क्रूरा जघ्नुरिति श्रुतिः ॥ ६४८ ॥

तेनाधर्मेण महता वाग्दुरुक्तेन कौशिकः।
गतः स कष्टं नरकं सूक्ष्मधर्मेष्वकोविदः ॥ ६४९ ॥

श्रुतेर्धर्म इति ह्येके वदन्ति बहवो जनाः।
तत्ते न प्रत्यसूयामि न च सर्वं विधीयते ॥ ६५० ॥

प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम्।
यत्स्यादहिंसासंयुक्तं स धर्म इति निश्चयः ॥ ६५१ ॥

अहिंसार्थाय हिंस्राणां धर्मप्रवचनं कृतम् ॥ ६५२ ॥

धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः।
यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः ॥ ६५३ ॥

येऽन्यायेन जिहीर्षन्तो धर्ममिच्छन्ति कर्हिचित्।
अकूजनेन मोक्षं वा नानुकूजेत् कथञ्चन ॥ ६५४ ॥

अवश्यं कूजितव्ये वा शङ्केरन्नप्यकूजतः।
श्रेयस्तत्रानृतं वक्तुं तत्सत्यमविचारितम् ॥ ६५५ ॥

यः कार्येभ्यो व्रतं कृत्वा तस्य नानोपपादयेत्।
न तत्फलमवाप्नोति एवमाहुर्मनीषिणः ॥ ६५६ ॥

यः स्तेनैः सह सम्बन्धान्मुच्यते शपथैरपि।
श्रेयस्तत्रानृतं वक्तुं तत्सत्यमविचारितम् ॥ ६५७ ॥

न च तेभ्यो धनं देयं शक्ये सति कथञ्चन।
पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत् ॥ ६५८ ॥

तस्माद्धर्मार्थमनृतमुक्त्वा नानृतभाग् भवेत् ॥ ६५९ ॥

एष ते लक्षणोद्देशो मयोद्दिष्टो यथाविधि।
एतच्छ्रुत्वा ब्रूहि पार्थ यदि वध्यो युधिष्ठिरः ॥ ६६० ॥

अर्जुन०– यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयान्महामतिः।
हितं चैव यथाऽस्माकं तथैतद्वचनं तव ॥ ६६१ ॥

अवध्यं पाण्डवं मन्ये धर्मराजं युधिष्ठिरम्।
अस्मिंस्तु मम संकल्पे ब्रूहि किञ्चिदनुग्रहम् ॥ ६६२ ॥

यथा प्रतिज्ञा मम लोकबुद्धौ
भवेत् सत्या धर्मभृतां वरिष्ठ।
यथा जीवेत् पाण्डवोऽहं च कृष्ण
तथा बुद्धिं दातुमप्यर्हसि त्वम् ॥ ६६३ ॥

वासु०- राजा श्रान्तो विक्षतो दुःखितश्च
कर्णेन सङ्ख्ये निशितैर्बाणसङ्घैः।
अतस्त्वमेतेन सरोषमुक्तो
दुःखान्वितेनेदमयुक्तरूपम् ॥ ६६४ ॥

अकोपितो ह्येष यदि स्म सङ्ख्ये
कर्णं न हन्यादिति चाब्रवीत् सः।
ततो वधं नार्हति धर्मपुत्र-
स्त्वया प्रतिज्ञाऽर्जुन पालनीया ॥ ६६५ ॥

जीवन्नयं येन मृतो भवेद्धि
तन्मे निबोधेह तवानुरूपम् ॥ ६६६ ॥

यदा मानं लभते माननार्ह-
स्तदा स वै जीवति जीवलोके।
यदाऽवमानं लभते महान्तं
तदा जीवन्मृत इत्युच्यते सः॥ ६६७ ॥

त्वमित्यत्रभवन्तं हि ब्रूहि पार्थ युधिष्ठिरम्।
त्वमित्युक्तो हि निहतो गुरुर्भवति भारत ॥ ६६८ ॥

अथर्वाङ्गिरसी ह्येषा श्रुतीनामुत्तमा श्रुतिः।
अविचार्यैव कार्यैषा श्रेयस्कामैर्नरैः सदा ॥ ६६९ ॥

अवधेन वधः प्रोक्तो यद्गुरुस्त्वमिति प्रभुः।
तद्ब्रूहि त्वं यन्मयोक्तं धर्मराजस्य धर्मवित् ॥ ६७० ॥

## अर्जुनकृता युधिष्ठिरनिन्दा आत्मप्रशंसा च

(अ. ७०) इत्येवमुक्तस्तु जनार्दनेन
पार्थः प्रशस्याथ सुहृद्वचस्तत् ।
ततोऽब्रवीदर्जुनो धर्मराज-
मनुक्तपूर्वं परुषं प्रसह्य ॥ ६७१ ॥

मा त्वं राजन् व्याहर व्याहरस्व
यस्तिष्ठसे क्रोशमात्रे रणाद्वै ।
भीमस्तु मामर्हति गर्हणाय
यो युध्यते सर्वलोकप्रवीरैः ॥ ६७२ ॥

बलं तु वाचि द्विजसत्तमानां
क्षात्रं बुधा बाहुबलं वदन्ति ।
त्वं वाग्बलो भारत निष्ठुरश्च
त्वमेव मा वेत्थ यथाऽबलोऽहम् ॥ ६७३ ॥

यते ह नित्यं तव कर्तुमिष्टं
दारैः सुतैर्जीवितेनात्मना च ।
एवं यन्मां वाग्विशिखेन हंसि
त्वत्तः सुखं न वयं विद्म किञ्चित् ॥ ६७४ ॥

मां मावमंस्था द्रौपदीतल्पसंस्थो
महारथान् प्रतिहन्मि त्वदर्थे ।
तेनाभिशङ्की भारत निष्ठुरोऽसि
त्वत्तः सुखं नाभिजानामि किञ्चित् ॥ ६७५ ॥

त्वं देविता त्वत्कृते राज्यनाश-
स्त्वत्सम्भवं नो व्यसनं नरेन्द्र ।
माऽस्मान् क्रूरैर्वाक्प्रतोदैस्तुदंस्त्वं
भूयो राजन् कोपयेस्त्वल्पभाग्यः ॥ ६७६ ॥

सञ्जय०– एता वाचः परुषाः सव्यसाची
स्थिरप्रज्ञः श्रावयित्वा तु रूक्षाः ।
तदानुतेपे सुरराजपुत्रो
विनिःश्वसंश्चास्त्रिमथोद्ववर्ह ॥ ६७७ ॥

तमाह कृष्णः किमिदं पुनर्भवा-
न्विकोशमाकाशनिभं करोत्यसिम् ।
ब्रवीहि मां त्वं पुनरुत्तरं वच-
स्तथा प्रवक्ष्याम्यहमर्थसिद्धये ॥ ६७८ ॥

इत्येवमुक्तः पुरुषोत्तमेन
सुदुःखितः केशवमर्जुनोऽब्रवीत् ।
अहं हनिष्ये स्वशरीरमेव
प्रसह्य येनाहितमाचरं वै ॥ ६७९ ॥

निशम्य तत् पार्थवचोऽब्रवीदिदं
धनञ्जयं धर्मभृतां वरिष्ठः ।
सूक्ष्मो धर्मो दुर्विदश्चापि पार्थ
विशेषतोऽज्ञैः प्रोच्यमानं निबोध ॥ ६८० ॥

हत्वाऽऽत्मानमात्मना प्राप्नुयास्त्वं
वधाद्भ्रातुर्नरकं चातिघोरम् ।
ब्रवीहि वाचाऽद्य गुणानिहात्मन-
स्तथा हतात्मा भवितासि पार्थ ॥ ६८१ ॥

तथास्तु कृष्णेत्यभिनन्द्य तद्वचो
धनञ्जयः प्राह धनुर्विनाम्य ।
युधिष्ठिरं धर्मभृतां वरिष्ठं
शृणुष्व राजन्निति शक्रसूनुः ॥ ६८२ ॥

न मादृशोऽन्यो नरदेव विद्यते
धनुर्धरो देवमृते पिनाकिनम् ॥ ६८३ ॥

हता उदीच्या निहताः प्रतीच्याः
प्राच्या निरस्ता दाक्षिणात्या विशस्ताः।
संशप्तकानां किञ्चिदेवास्ति शिष्टं
सर्वस्य सैन्यस्य हतं मयार्धम् ॥ ६८४ ॥

एतच्छ्रुत्वा पाण्डवो धर्मराजो
भ्रातुर्वाक्यं परुषं फाल्गुनस्य।
उत्थाय तस्माच्छयनादुवाच
पार्थं ततो दुःखपरीतचेताः ॥ ६८५ ॥

कृतं मया पार्थ यथा न साधु
येन प्राप्तं व्यसनं वः सुघोरम्।
तस्माच्छिरश्छिन्धि ममेदमद्य
कुलान्तकस्याधमपूरुषस्य ॥ ६८६ ॥

वृद्धावमन्तुः पुरुषस्य चैव
किं ते चिरं मे ह्यनुसृत्य रूक्षम्।
गच्छाम्यहं वनमेवाद्य पाप-
सुखं भवान् वर्ततां मद्विहीनः ॥ ६८७ ॥

योग्यो राजा भीमसेनो महात्मा
क्लीबस्य वा मम किं राज्यकृत्यम्।
न चापि शक्तः परुषाणि सोढुं
पुनस्तवेमानि रुषान्वितस्य ॥ ६८८ ॥

इत्येवमुक्त्वा सहसोत्पपात
राजा ततस्तच्छयनं विहाय।
इयेष निर्गन्तुमथो वनाय
तं वासुदेवः प्रणतोऽभ्युवाच ॥ ६८९ ॥

राजन् विदितमेतत्ते यथा गाण्डीवधन्वनः।
प्रतिज्ञा सत्यसन्धस्य गाण्डीवं प्रति विश्रुता ॥ ६९० ॥

ब्रूयाद्य एवं गाण्डीवमन्यस्मै देयमित्युत।
वध्योऽस्य स पुमाँल्लोके त्वया चोक्तोऽयमीदृशम्॥ ६९१॥

ततः सत्यां प्रतिज्ञां तां पार्थेन प्रतिरक्षता।
मच्छन्दादवमानोऽयं कृतस्तव महीपते॥ ६९२॥

गुरूणामवमानो हि वध इत्यभिधीयते॥ ६९३॥

तस्मात्त्वं वै महाबाहो मम पार्थस्य चोभयोः।
व्यतिक्रममिमं राजन् सत्यसंरक्षणं प्रति॥ ६९४॥

शरणं त्वां महाराज प्रपन्नौ स्व उभावपि।
क्षन्तुमर्हसि मे राजन् प्रणतस्याभियाचतः॥ ६९५॥

राधेयस्याद्य पापस्य भूमिः पास्यति शोणितम्।
सत्यं ते प्रतिजानामि हतं विद्ध्यद्य सूतजम्॥ ६९६॥

इति कृष्णवचः श्रुत्वा धर्मराजो युधिष्ठिरः।
ससम्भ्रमं हृषीकेशमुत्थाप्य प्रणतं तदा॥ ६९७॥

कृताञ्जलिस्ततो वाक्यमुवाचानन्तरं वचः।
एवमेव यथाऽऽत्थ त्वमस्त्येषोऽतिक्रमो मम॥ ६९८॥

अनुनीतोऽस्मि गोविन्द तारितश्चास्मि माधव।
मोचिता व्यसनाद्घोराद्वयमद्य त्वयाऽच्युत॥ ६९९॥

भवन्तं नाथमासाद्य ह्यावां व्यसनसागरात्।
घोरादद्य समुत्तीर्णावुभावज्ञानमोहितौ॥ ७००॥

त्वद्बुद्धिप्लवमासाद्य दुःखशोकार्णवाद्वयम्।
समुत्तीर्णाः सहामात्याः सनाथाः स्म त्वयाऽच्युत॥ ७०१॥

(अ. ७१) ततो धनञ्जयो राजञ्छिरसा प्रणतस्तदा।
पादौ जग्राह पाणिभ्यां भ्रातुर्ज्येष्ठस्य मारिष॥ ७०२॥

तमुत्थाप्य ततो राजा परिष्वज्य च पीडितम्।
मूर्ध्न्युपाघ्राय चैवैनमिदं पुनरुवाच ह॥ ७०३॥

धनञ्जय महाबाहो मानितोऽस्मि दृढं त्वया।
माहात्म्यं विजयं चैव भूयः प्राप्नुहि शाश्वतम् ॥ ७०४ ॥

अर्जुन०– अद्य तं पापकर्माणं सानुबन्धं रणे शरैः।
नयाम्यन्तं समासाद्य राधेयं बलगर्वितम् ॥ ७०५ ॥

येन त्वं पीडितो बाणैर्दृढमायम्य कार्मुकम्।
तस्याद्य कर्मणः कर्णः फलमाप्स्यति दारुणम् ॥ ७०६ ॥

नाहत्वा विनिवर्तिष्ये कर्णमद्य रणाजिरात्।
इति सत्येन ते पादौ स्पृशामि जगतीपते ॥ ७०७ ॥

इति ब्रुवाणं सुमनाः किरीटिनं
युधिष्ठिरः प्राह वचो बृहत्तरम्।
प्रयाहि शीघ्रं जहि कर्णमाहवे
पुरन्दरो वृत्रमिवात्मवृद्धये ॥ ७०८ ॥

## कृष्णार्जुनयोः युद्धभूमौ पुनरागमनम्

(अ. ७७) ततः स पुरुषव्याघ्रस्तव सैन्यमरिन्दमः।
प्रविवेश महाबाहुर्मकरः सागरं यथा ॥ ७०९ ॥

तं दृष्ट्वास्तावका राजन्रथपत्तिसमन्विताः।
गजाश्वसादिबहुलाः पाण्डवं समुपाद्रवन् ॥ ७१० ॥

तेषामापततां तत्र शरवर्षाणि मुञ्चताम्।
अर्जुनो व्यधमत् सैन्यं महावातो घनानिव ॥ ७११ ॥

तां तु सेनां भृशं विद्ध्वा द्रावयित्वाऽर्जुनः शरैः।
प्रायादभिमुखः पार्थः सूतानीकं हि मारिष ॥ ७१२ ॥

श्रुत्वैव पार्थमायान्तं भीमसेनः प्रतापवान्।
त्यक्त्वा प्राणान् महाराज सेनां तव ममर्द ह ॥ ७१३ ॥

हत्वा दशसहस्राणि गजानामनिवर्तिनाम्।
नृणां शतसहस्रे द्वे द्वे शते चैव भारत ॥ ७१४ ॥

पञ्च चाश्वसहस्राणि रथानां शतमेव च।
हत्वा प्रास्यन्दयद्भीमो नदीं शोणितवाहिनीम् ॥ ७१५ ॥

ते वध्यमाना भीमेन धार्तराष्ट्राः पराङ्मुखाः।
कर्णमासाद्य समरे स्थिता राजन् समन्ततः ॥ ७१६ ॥

(अ. ७८) ततः कर्णो महाराज ददाह रिपुवाहिनीम्।
कक्षमिद्धो यथा वह्निर्निदाघे ज्वलितो महान् ॥ ७१७ ॥

तत्र भारत कर्णेन पञ्चाला विंशती रथाः।
निहताः सायकैः क्रोधाच्चेदयश्च परंशताः ॥ ७१८ ॥

कृत्वा शून्यान् रथोपस्थान्वाजिपृष्ठांश्च भारत।
निर्मनुष्यान् गजस्कन्धान् पादातांश्चैव विद्रुतान् ॥ ७१९ ॥

आदित्य इव मध्याह्ने दुर्निरीक्ष्यः परन्तपः।
कालान्तकवपुः शूरः सूतपुत्रोऽभ्यराजत ॥ ७२० ॥

(अ ७९) अर्जुनस्तु महाराज हत्वा सैन्यं चतुर्विधम्।
सूतपुत्रं च सङ्क्रुद्धं दृष्ट्वा चैव महारणे ॥ ७२१ ॥
शोणितोदां महीं कृत्वा मांसमज्जास्थिपङ्किलाम्।
नदीं प्रावर्तयित्वा च बीभत्सुः परवीरहा।
वासुदेवमिदं वाक्यमब्रवीत् पुरुषर्षभः ॥ ७२२ ॥

एते द्रवन्ति पञ्चालाः कर्णत्रस्ता जनार्दन।
तत्र मे बुद्धिरुत्पन्ना वाहयात्र महारथम् ॥ ७२३ ॥
नाहत्वा समरे कर्णं निवर्तिष्ये कथञ्चन ॥ ७२४ ॥

राधेयो ह्यन्यथा पार्थान् सृञ्जयांश्च महारथान्।
निःशेषान् समरे कुर्यात् पश्यता नो जनार्दन ॥ ७२५ ॥

ततः प्रायाद्रथेनाशु केशवस्तव वाहिनीम्।
आश्वासयन् रथेनैव पाण्डुसैन्यानि सर्वशः ॥ ७२६ ॥

तमायान्तं समीक्ष्यैव श्वेताश्वं कृष्णसारथिम्।
मद्रराजोऽब्रवीत् कर्णं केतुं दृष्ट्वा महात्मनः ॥ ७२७ ॥

अयं स रथ आयाति श्वेताश्वः कृष्णसारथि.।
निघ्नन्नमित्रान् समरे यं कर्ण परिपृच्छसि ॥ ७२८ ॥

न तं पश्मामि लोकेऽस्मिंस्त्वत्तो ह्यन्यं धनुर्धरम्।
अर्जुनं समरे क्रुद्धं यो वेलामिव धारयेत् ॥ ७२९ ॥

न चास्य रक्षां पश्यामि पार्श्वतो न च पृष्ठत ।
एक एवाभियाति त्वां पश्य साफल्यमात्मन ॥ ७३० ॥

त्वं हि कृष्णौ रणे शक्त संसाधयितुमाहवे।
तवैव भारो राधेय प्रत्युद्याहि धनञ्जयम् ॥ ७३१ ॥

समानो ह्यसि भीष्मेण द्रोणद्रौणिकृपेण च।
सव्यसाचिनमायान्तं निवारय महारणे ॥ ७३२ ॥

कर्ण०- प्रकृतिस्थोऽसि मे शल्य इदानीं संमतस्तथा।
प्रतिभासि महाबाहो मा भैषीस्त्वं धनञ्जयात् ॥ ७३३ ॥

पश्य बाह्वोर्बलं मेऽद्य शिक्षितस्य च पश्य मे।
एकोऽद्य निहनिष्यामि पाण्डवानां महाचमूम् ॥ ७३४ ॥

कृष्णौ च पुरुषव्याघ्र तत सत्यं ब्रवीमि ते।
नाहत्वा युधि तौ वीरौ व्यपयास्ये कथञ्चन ॥ ७३५ ॥

एतौ च हत्वा युधि पातयिष्ये
मां वापि कृष्णौ निहनिष्यतोऽद्य।
इति ब्रुवञ्शल्यममित्रहन्ता
कर्णो रणे मेघ इवोन्ननाद ॥ ७३६ ॥

अभ्येत्य पुत्रेण तवाभिनन्दित
समेत्य चोवाच कुरुप्रवीरम्।
कृपं च भोजं च महाभुजावुभौ
तथैव गान्धारपतिं सहानुजम् ॥ ७३७ ॥

निरुध्यताभिद्रवताच्युतार्जुनौ
श्रमेण संयोजयताशु सर्वशः।

यथा भवद्भिर्भृशविक्षितावुभौ
सुखेन हन्यामहमद्य भूमिपाः ॥ ७३८ ॥
तथेति चोक्त्वा त्वरिता स्म तेऽर्जुनम्
जिघांसवो वीरतरा समाययु ।
शरैश्च जघ्नुर्युधि तं महारथा
धनञ्जयं कर्णनिदेशकारिण ॥ ७३९ ॥
नदीनदं भूरिजलो महार्णवो
यथा तथा तान् समरेऽर्जुनोऽग्रसत् ।
यथोग्ररश्मि· शुचिशुक्रमध्यगः
सुखं विवस्वान् हरते जलौघान् ॥ ७४० ॥
तथाऽर्जुनो बाणगणान्निरस्य
ददाह सेनां तव पार्थिवेन्द्र ।
तत· प्रकीर्ण सुमहद्बलं तव
प्रदारितं सेतुरिवाम्भसा यथा ॥ ७४१ ॥

(अ. ८०) तत कुरुषु भग्नेषु बीभत्सुरपराजित ।
भीमसेनं समासाद्य मुहूर्तं सोऽभ्यवर्तत ॥ ७४२ ॥
समागम्य च भीमेन मन्त्रयित्वा च फाल्गुन ।
विशल्यमरुजं चास्मै कथयित्वा युधिष्ठिरम् ॥ ७४३ ॥
भीमसेनाभ्यनुज्ञातस्ततः प्रायाद्धनञ्जयः ।
नादयन् रथघोषेण पृथिवीं द्यां च भारत ॥ ७४४ ॥
ततः परिवृतो वीरैर्दशभिर्योधपुङ्गवैः ।
दुःशासनादवरजैस्तव पुत्रैर्धनञ्जयः ॥ ७४५ ॥
ते तमभ्यर्दयन् बाणैरुल्काभिरिव कुञ्जरम् ।
आततेष्वसनाः शूरा नृत्यन्त इव भारत ॥ ७४६ ॥
तेषामापततां केतूनश्वांश्चापानि सायकान् ।
नाराचैरर्धचन्द्रैश्च क्षिप्रं पार्थो न्यपातयत् ।
अथान्यैर्दशभिर्भल्लैः शिरांस्येषामपातयत् ॥ ७४७ ॥

तांस्तु भल्लैर्महावेगैर्दशभिर्दश कौरवान् ।
रुक्माङ्गदान् रुक्मपुङ्खैर्हत्वा प्रायादमित्रहा ॥ ७४८ ॥

(अ. ८१) तं प्रयान्तं महावेगैरश्वैः कपिवरध्वजम् ।
युद्धायाभ्यद्रवन् वीराः कुरूणां नवती रथाः ॥ ७४९ ॥

कृत्वा संशप्तका घोरं शपथं पारलौकिकम् ।
परिवव्रुर्नरव्याघ्रा नरव्याघ्रं रणेऽर्जुनम् ॥ ७५० ॥

त्वरमाणांस्तु तान्सर्वान्ससूतेष्वसनध्वजान् ।
जघान नवतिं वीरानर्जुनो निशितैः शरैः ॥ ७५१ ॥

ततः सरथनागाश्वाः कुरवः कुरुसत्तमम् ।
निर्भया भरतश्रेष्ठमभ्यवर्तन्त फाल्गुनम् ॥ ७५२ ॥

ततस्त्र्यङ्गेण महता बलेन भरतर्षभ ।
दृष्ट्वा परिवृत राजन् भीमसेनः किरीटिनम् ॥ ७५३ ॥

हतावशेषानुत्सृज्य त्वदीयान् कतिचिद्रथान् ।
जवेनाभ्यद्रवद्राजन् धनञ्जयरथं प्रति ॥ ७५४ ॥

हतावशिष्टांस्तुरगानर्जुनेन महाबलान् ।
भीमो व्यधमदश्रान्तो गदापाणिर्महाहवे ॥ ७५५ ॥

सहस्राणि दशाश्वानां हत्वा पत्तींश्च भूयसा ।
भीमोऽभ्यधावत् सक्रुद्धो गदापाणिरितस्ततः ॥ ७५६ ॥

विगाह्य च गजानीकं प्रगृह्य महतीं गदाम् ।
क्षणेन भीमः सक्रुद्धस्तन्निन्ये यमसादनम् ॥ ७५७ ॥

## दुःशासनवधः

(अ. ८२) तथागतं भीममभीस्तवात्मजः
ससार राजावरजः किरञ्शरैः ।
तमभ्यधावत्त्वरितो वृकोदरो
महारुरुं सिंह इवाभिपेदिवान् ॥ ७५८ ॥

ततस्तयोर्युद्धमतीव दारुणं
प्रदीव्यतोः प्राणदुरोदरं द्वयोः ।
परस्परेणाभिनिविष्टरोषयो-
रुदग्रयो शम्बरशक्रयोर्यथा ॥ ७५९ ॥

शरैः शरीरार्तिकरैः सुतेजनै-
र्निजघ्नतुस्ताावितरेतरं भृशम् ।
सकृत्प्रभिन्नाविव वासितान्तरे
महागजौ मन्मथसक्तचेतसौ ॥ ७६० ॥

तवात्मजस्याथ वृकोदरस्त्वरन्
धनुः क्षुराभ्यां ध्वजमेव चाच्छिनत् ।
स राजपुत्रोऽन्यदवाप्य कार्मुकम्
वृकोदरं द्वादशभिः पराभिनत् ॥ ७६१ ॥

स तेन निर्विद्धतनुर्वृकोदरो
निपातितः स्रस्ततनुर्गतासुवत् ।
प्रसार्य बाहू रथवर्यमाश्रितः
पुनः स संज्ञामुपलभ्य चानदत् ॥ ७६२ ॥

(अ. ८३) स तत्कृत्वा राजपुत्रस्तरस्वी
विव्याध भीमं नवभिः पृषत्कैः ।
चुक्रोध भीमः पुनराशु तस्मै
भृशं प्रजज्वाल रुषाऽभिवीक्ष्य ॥ ७६३ ॥

विद्धोऽस्मि वीराशु भृशं त्वयाद्य
सहस्व भूयोऽपि गदाप्रहारम् ।
उक्त्वैवमुच्चैः कुपितोऽथ भीमो
जग्राह तां भीमगदां वधाय ॥ ७६४ ॥

स विक्षरन्नाग इव प्रभिन्नो
गदामस्मै तुमुले प्राहिणोद्वै ।

तयाऽहरद्दश धन्वन्तराणि
दुःशासनं भीमसेन प्रसह्य ॥ ७६५ ॥
तया हत पतितो वेपमानो
दुःशासनो गदया वेगवत्या ।
विध्वस्तवर्माभरणाम्बरस्रक्
विचेष्टमानो भृशवेदनातुरः ॥ ७६६ ॥
भीमोऽपि वेगादवतीर्य यानाद्
दुःशासनं वेगवानभ्यधावत् ॥ ७६७ ॥
स्मृत्वाऽथ केशग्रहणं च देव्या
वस्त्रापहारं च रजस्वलाया. ।
जज्वाल क्रोधादथ भीमसेन
आज्यप्रसिक्तो हि यथा हुताशः ॥ ७६८ ॥
तत्राह कर्णं च सुयोधनं च
कृपं द्रौणिं कृतवर्माणमेव ।
निहन्मि दुःशासनमद्य पापं
संरक्ष्यतामद्य समस्तयोधाः ॥ ७६९ ॥
तथा तु विक्रम्य रणे वृकोदरो
महागजं केसरिको यथैव ।
निगृह्य दुःशासनमेकवीरः
सुयोधनस्याधिरथेः समक्षम् ॥ ७७० ॥
असिं समुद्यम्य सितं सुधारं
कण्ठेपदाऽऽक्रम्य च वेपमानम् ।
उवाच तद्गौरिति यद्ब्रुवाणो
हृष्टो वदेः कर्णसुयोधनाभ्याम् ॥ ७७१ ॥
ये राजसूयावभृथे पवित्रा
जाताः कचा याज्ञसेन्या दुरात्मन् ।

ते पाणिना कतरेणावकृष्टा-
स्तद्ब्रूहि त्वा पृच्छति भीमसेन. ॥ ७७२ ॥
श्रुत्वा तु तद्भीमवचः सुघोरं
दुःशासनो भीमसेनं निरीक्ष्य ।
उक्तस्तदाजौ स तथा सरोषं
जगाद भीमं परिवर्तनेत्र. ॥ ७७३ ॥

अयं करिकराकारः पीनस्तनविमर्दनः ।
गोसहस्रप्रदाता च क्षत्रियान्तकरः करः ॥ ७७४ ॥

अनेन याज्ञसेन्या मे भीम केशा विकर्षिताः ।
पश्यतां कुरुमुख्यानां युष्माकं च सभासदाम् ॥ ७७५ ॥

एवं त्वसौ राजसुतं निशम्य
ब्रुवन्तमाजौ विनिपीड्य वक्ष. ।
भीमो बलात्तं प्रतिगृह्य दोर्भ्या-
मुच्चैर्ननादाथ समस्तयोधान् ॥ ७७६ ॥
उवाच यस्यास्ति बलं स रक्ष-
त्वसौ भवेदद्य निरस्तबाहुः ।
एवं क्रुद्धो भीमसेनः करेण
उत्पाटयामास भुजं महात्मा ॥ ७७७ ॥
दु.शासनं तेन स वीरमध्ये
जघान वज्राशनिसन्निभेन ।
उत्कृत्य वक्षः पतितस्य भूमा-
वथापिबच्छोणितमस्य कोष्णम् ॥ ७७८ ॥
ततो निपात्यास्य शिरोऽपकृत्य
तेनासिना तव पुत्रस्य राजन् ।
सत्यां चिकीर्षुर्मतिमान् प्रतिज्ञां
भीमोऽपिबच्छोणितमस्य कोष्णम् ॥ ७७९ ॥

आस्वाद्य चास्वाद्य च वीक्षमाणः
क्रुद्धो हि चैनं निजगाद वाक्यम् ॥ ७८० ॥

स्तन्यस्य मातुर्मधुसर्पिषोर्वा
माध्वीकपानस्य च सत्कृतस्य।
दिव्यस्य वा तोयरसस्य पाना-
त्पयोदधिभ्यां मथिताच्च मुख्यात् ॥ ७८१ ॥

अन्यानि पानानि च यानि लोके
सुधामृतस्वादुरसानि तेभ्य.।
सर्वेभ्य एवाभ्यधिको रसोऽयं
ममाद्य चास्याहितलोहितस्य ॥ ७८२ ॥

अथाह भीमः पुनरुग्रकर्मा
दुःशासनं क्रोधपरीतचेताः।
गतासुमालोक्य विहस्य सुस्वरं
किं वा कुर्यां मृत्युना रक्षितोऽसि ॥ ७८३ ॥

तं तत्र भीमं ददृशु. समन्ता-
द्दौःशासनं तद्रुधिरं पिबन्तम्।
सर्वेऽपलायन्त भयाभिपन्ना
न वै मनुष्योऽयमिति ब्रुवाणाः ॥ ७८४ ॥

भीमोऽपि हत्वा तत्रैव दुःशासनममर्षणम्।
पूरयित्वाऽञ्जलिं भूयो रुधिरस्योग्रनिःस्वनः।
शृण्वतां लोकवीराणामिदं वचनमब्रवीत् ॥ ७८५ ॥

एष ते रुधिरं कण्ठात् पिबामि पुरुषाधम।
ब्रूहीदानीं तु संहृष्टः पुनर्गौरिति गौरिति ॥ ७८६ ॥

ये तदाऽस्मान्प्रनृत्यन्ति पुनर्गौरिति गौरिति।
तान् वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति ॥ ७८७ ॥

इत्युक्त्वा वचनं राजञ्जयं प्राप्य वृकोदरः।
पुनराह महाराज स्मयंस्तौ केशवार्जुनौ ॥ ७८८ ॥

दुःशासने यद्रणे संश्रुतं मे
तद्वै सत्यं कृतमद्येह वीरौ।
अत्रैव दास्याम्यपरं द्वितीयं
दुर्योधनं यज्ञपशुं विशस्य ॥ ७८९ ॥
शिरो मृदित्वा च पदा दुरात्मनः
शान्तिं लप्स्ये कौरवाणां समक्षम्।
एतावदुक्त्वा वचनं प्रहृष्टो
ननाद चोच्चै रुधिरार्द्रगात्रः ॥ ७९० ॥

(अ.६४) दुःशासने तु निहते तव पुत्रा महारथाः।
दश राजन् महावीर्या भीमं प्राच्छादयञ्शरैः ॥ ७९१ ॥
तांस्तु भल्लैर्महावेगैर्दशभिर्दश भारतान्।
रुक्माङ्गदान् रुक्मपुङ्खैः पार्थो निन्ये यमक्षयम् ॥ ७९२ ॥
हतेषु तेषु वीरेषु प्रदुद्राव बलं तव।
पश्यतः सूतपुत्रस्य पाण्डवस्य भयार्दितम् ॥ ७९३ ॥
ततः कर्णो महाराज प्रविवेश महद्भयम्।
दृष्ट्वा भीमस्य विक्रान्तमन्तकस्य प्रजास्विव ॥ ७९४ ॥
तस्य त्वाकारभावज्ञः शल्यः समितिशोभनः।
उवाच वचनं कर्णं प्राप्तकालमरिन्दमम् ॥ ७९५ ॥
मा व्यथां कुरु राधेय नैव त्वय्युपपद्यते।
एते द्रवन्ति राजानो भीमसेनभयार्दिताः ॥ ७९६ ॥
दुर्योधनश्च सम्मूढो भ्रातृव्यसनकर्शितः।
दुःशासनस्य रुधिरे पीयमाने महात्मना ॥ ७९७ ॥
व्यापन्नचेतसश्चैव शोकोपहतचेतसः।
दुर्योधनमुपासन्ते परिवार्य समन्ततः।
कृपप्रभृतयश्चैते हतशेषाः सहोदराः ॥ ७९८ ॥

पाण्डवा लब्धलक्षाश्च धनञ्जयपुरोगमाः।
त्वामेवाभिमुखाः शूरा युद्धाय समुपस्थिताः ॥ ७९९ ॥
स त्वं पुरुषशार्दूल पौरुषेण समास्थितः।
क्षत्रधर्मं पुरस्कृत्य प्रत्युद्याहि धनञ्जयम् ॥ ८०० ॥
भारो हि धार्तराष्ट्रेण त्वयि सर्वः समाहितः।
तमुद्वह महाबाहो यथाशक्ति यथाबलम् ॥ ८०१ ॥
जये स्याद्विपुला कीर्तिर्ध्रुवः स्वर्गः पराजये ॥ ८०२ ॥
वृषसेनश्च राधेय सङ्क्रुद्धस्तनयस्तव।
त्वयि मोहं समापन्ने पाण्डवानभिधावति ॥ ८०३ ॥
एतच्छ्रुत्वा तु वचनं शल्यस्यामिततेजसः।
हृदि चावश्यकं भावं चक्रे युद्धाय सुस्थिरम् ॥ ८०४ ॥

## वृषसेनवधः, कर्णार्जुनयुद्धम्

(अ.८५) ततो द्रुतं चैकशरेण पार्थं
शितेन विद्ध्वा युधि कर्णपुत्रः।
ननाद नादं सुमहानुभावो
विद्ध्वेव शक्रं नमुचिः स वीरः ॥ ८०५ ॥
ततः किरीटी रणमूर्ध्नि कोपात्
कृत्वा त्रिशाखां भ्रुकुटिं ललाटे।
आरक्तनेत्रोऽन्तकशत्रुहन्ता
उवाच कर्णं भृशमुत्स्मयंस्तदा ॥ ८०६ ॥
दुर्योधनं द्रौणिमुखांश्च सर्वा-
नहं रणे वृषसेनं तमुग्रम्।
सम्पश्यतः कर्ण तवाद्य सङ्ख्ये
नयामि लोकं निशितैः पृषत्कैः ॥ ८०७ ॥
ऊनं च तावद्धि जना वदन्ति
सर्वैर्भवद्भिर्मम सूनुर्हतोऽसौ।

एको रथो मद्विहीनस्तरस्वी
अहं हनिष्ये भवतां समक्षम् ॥ ८०८ ॥

स एवमुक्त्वा विनिमृज्य चापं
लक्ष्यं हि कृत्वा वृषसेनमाजौ ।
विव्याध चैनं दशभिः पृषत्कै-
र्मर्मस्वशङ्कं प्रहसन् किरीटी ॥ ८०९ ॥

चिच्छेद चास्येष्वसनं भुजौ च
क्षुरैश्चतुर्भिर्निशितैः शिरश्च ।
स पार्थबाणाभिहतः पपात
रथाद्विबाहुर्विशिरा धरायाम् ॥ ८१० ॥

(अ.८७) वृषसेनं हतं दृष्ट्वा शोकामर्षसमन्वितः ।
पुत्रशोकोद्भवं वारि नेत्राभ्यां समवासृजत् ॥ ८११ ॥

रथेन कर्णस्तेजस्वी जगामाभिमुखो रिपून् ।
युद्धायामर्षताम्राक्षः समाहूय धनञ्जम् ॥ ८१२ ॥

तौ रथौ सूर्यसङ्काशौ वैयाघ्रपरिवारितौ ।
समेतौ ददृशुस्तत्र द्वाविवार्कौ समुद्गतौ ॥ ८१३ ॥

आजघ्नुः कुरवस्तत्र वादित्राणि समन्ततः ।
कर्णं प्रहर्षयिष्यन्तः शङ्खान् दध्मुश्च सर्वशः ॥ ८१४ ॥

तथैव पाण्डवाः सर्वे हर्षयन्तो धनञ्जयम् ।
तूर्यशङ्खनिनादेन दिशः सर्वा व्यनादयन् ॥ ८१५ ॥

तव पुत्रास्ततः कर्णं सबला भरतर्षभ ।
परिवव्रुर्महात्मानं क्षिप्रमाहवशोभिनम् ॥ ८१६ ॥

तथैव पाण्डवा हृष्टा धृष्टद्युम्नपुरोगमाः ।
परिवव्रुर्महात्मानं पार्थमप्रतिमं युधि ॥ ८१७ ॥

देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ।
प्रतिपक्षग्रहं चक्रुः कर्णार्जुनसमागमे ॥ ८१८ ॥

हत्वाऽर्जुनं मम सुतः कर्णो जयतु संयुगे।
हत्वा कर्णं जयत्वद्य मम पुत्रो धनञ्जयः॥ ८१९॥

इति सूर्यस्य चैवासीद्विवादो वासवस्य च।
पक्षसंस्थितयोस्तत्र तयोर्विबुधसिंहयोः॥ ८२०॥

द्वैपक्ष्यमासीद्देवानामसुराणां च भारत।
यतः पार्थस्ततो देवा यतः कर्णस्ततोऽसुराः॥ ८२१॥

(अ. ८८) ततः प्रहृष्टाः कुरुपाण्डुयोधा
वादित्रशङ्खस्वनसिंहनादैः।
विनादयन्तो वसुधां दिशश्च
स्वनेन सर्वान् द्विषतो निजघ्नुः॥ ८२२॥

नराश्वमातङ्गरथैः समाकुलं
शरासिशक्त्यृष्टिनिपातदुःसहम्।
अभीरुजुष्टं हतदेहसङ्कुलं
रणाजिरं लोहितमाबभौ तदा॥ ८२३॥

बभूव युद्धं कुरुपाण्डवानां
यथा सुराणामसुरैः सहाभवत्॥ ८२४॥

तथा प्रवृत्ते तुमुले सुदारुणे
धनञ्जयस्याधिरथेश्च सायकैः।
दिशश्च सैन्यं च शितैरजिह्मगैः
परस्परं प्रावृणुतां सुदंशितैः॥ ८२५॥

ततस्त्वदीयाश्च परे च सायकैः
कृतेऽन्धकारे ददृशुर्न किञ्चन।
भयातुरा एकरथौ समाश्रयं-
स्ततोऽभवत्त्वद्भुतमेव सर्वतः॥ ८२६॥

अथाब्रवीद्द्रोणसुतस्तवात्मजं
करं करेण प्रतिपीड्य सान्त्वयन्।

प्रसीद दुर्योधन शाम्य पाण्डवै-
रलं विरोधेन धिगस्तु विग्रहम् ॥ ८२७ ॥

हतो गुरुर्ब्रह्मसमो महास्त्रवि-
त्तथैव भीष्मप्रमुखा महारथाः ।
अहं त्ववध्यो मम चापि मातुलः
प्रशाधि राज्यं सह पाण्डवैश्चिरम् ॥ ८२८ ॥

धनञ्जयः शाम्यति वारितो मया
जनार्दनो नैव विरोधमिच्छति ।
युधिष्ठिरो भूतहिते रतः सदा
वृकोदरस्तद्वशगस्तथा यमौ ॥ ८२९ ॥

व्रजन्तु शेषाः स्वपुराणि बान्धवा
निवृत्तयुद्धाश्च भवन्तु सैनिकाः ।
न चेद्वचः श्रोष्यसि मे नराधिप
ध्रुवं प्रतप्तासि हतोऽरिभिर्युधि ॥ ८३० ॥

इदं च दृष्टं जगता सह त्वया
कृतं यदेकेन किरीटमालिना ।
यथा न कुर्याद्बलभिन्न चान्तको
न चापि धाता भगवान्न यक्षराट् ॥ ८३१ ॥

निवारयिष्यामि च कर्णमप्यहं
यदा भवान् सप्रणयो भविष्यति ।
वदन्ति मित्रं सहजं विचक्षणा-
स्तथैव साम्ना च धनेन चार्जितम् ॥ ८३२ ॥

प्रतापतश्चोपनतं चतुर्विधं
तदस्ति सर्वं तव पाण्डवेषु ।
निसर्गतस्ते तव वीर बान्धवाः
पुनश्च साम्ना समवाप्नुहि प्रभो ॥ ८३३ ॥

त्वयि प्रसन्ने यदि मित्रतां गते
हितं कृतं स्याज्जगतस्त्वयाऽतुलम् ।
स एवमुक्तः सुहृदा वचो हितं
विचिन्त्य निःश्वस्य च दुर्मनाऽब्रवीत् ॥ ८३४ ॥

यथा भवानाह सखे तथैव त-
न्ममापि विज्ञापयतो वचः शृणु ॥ ८३५ ॥

निहत्य दुःशासनमुक्तवान् वचः
प्रसह्य शार्दूलवदेष दुर्मतिः ।
वृकोदरस्तद्धृदये मम स्थितं
न तत्परोक्षं भवतः कुतः शमः ॥ ८३६ ॥

न चापि कर्णं प्रसहेद्रणेऽर्जुनो
महागिरिं मेरुमिवोग्रमारुतः ।
न चाश्वसिष्यन्ति पृथात्मजा मयि
प्रसह्य वैरं बहुशो विचिन्त्य ॥ ८३७ ॥

न चापि कर्णं गुरुपुत्र संयुगा-
दुपारमेत्यर्हसि वक्तुमच्युत ।
श्रमेण युक्तो महताऽद्य फाल्गुन-
स्तमेष कर्णः प्रसभं हनिष्यति ॥ ८३८ ॥

तमेवमुक्त्वाऽप्यनुनीय चासकृ-
त्तवात्मजः स्वाननुशास्ति सैनिकान् ।
समाहिताभिद्रवताहितान्मम
सबाणहस्ताः किमु जोषमासत ॥ ८३९ ॥

(अ. ८९) तौ शङ्खभेरीनिनदे समृद्धे
समीयतुः श्वेतहयौ नराग्र्यौ ।
वैकर्तनः सूतपुत्रोऽर्जुनश्च
दुर्मन्त्रिते तव पुत्रस्य राजन् ॥ ८४० ॥

यथा गजौ हैमवतौ प्रभिन्नौ
प्रवृद्धदन्ताविव वासितार्थे।
तथा समाजग्मतुरुग्रवीर्यौ
धनञ्जयश्चाधिरथिश्च वीरौ ॥ ८४१ ॥

बलाहकेनेव महाबलाहको
यदृच्छया वा गिरिणा यथा गिरिः।
तथा धनुर्ज्यातलनेमिनिःस्वनैः
समीयतुस्ताविषुवर्षवर्षिणौ ॥ ८४२ ॥

प्रवृद्धशृङ्गद्रुमवीरुदोषधी
प्रवृद्धनानाविधनिर्झरौकसौ।
यथाऽचलौ वा चलितौ महाबलौ
तथा महास्त्रैरितरेतरं हतः ॥ ८४३ ॥

अथोपयातस्त्वरितो दिदृक्षु-
र्मन्त्रौषधीभिर्निरुजो विशल्यः।
कृतः सुहृद्भिर्भिषजां वरिष्ठै-
र्युधिष्ठिरस्तत्र सुवर्णवर्मा ॥ ८४४ ॥

तथोपयातं युधि धर्मराजं
दृष्ट्वा मुदा सर्वभूतान्यनन्दन्।
राहोर्विमुक्तं विमलं समग्रं
चन्द्रं यथैवाभ्युदितं तथैव ॥ ८४५ ॥

तस्मिन् क्षणे पाण्डवं सूतपुत्रः
समाचिनोत् क्षुद्रकाणां शतेन।
ततो धनुर्ज्यामवनाम्य शीघ्रं
शरानस्तानाधिरथेर्विधम्य ॥ ८४६ ॥

सुसंरब्धः कर्णशरक्षताङ्गो
रणे पार्थः कौरवान् प्रत्यगृह्णात्।

ज्यां चानुमृज्याभ्यहनत्तलत्रे
बाणान्धकारं सहसा च चक्रे ॥ ८४७ ॥

ततः शरौघैः प्रदिशो दिशश्च
रवेः प्रभा कर्णरथश्च राजन् ।
अदृश्यमासीत् कुपिते धनञ्जये
तुषारनीहारवृतं यथा नभः ॥ ८४८ ॥

स चक्ररक्षानथ पादरक्षान्
पुरःसरान् पृष्ठगोपांश्च सर्वान् ।
दुर्योधनेनानुमतानरिघ्नः
समुद्यतान् सरथान् सारभूतान् ॥ ८४९ ॥

द्विसाहस्रान् समरे सव्यसाची
कुरुप्रवीरानृषभः कुरूणाम् ।
क्षणेन सर्वान् सरथाश्वसूता-
न्निनाय राजन् क्षयमेकवीरः ॥ ८५० ॥

ततोऽपलायन्त विहाय कर्णं
तवात्मजाः कुरवो येऽवशिष्टाः ।
न विव्यथे भारत तत्र कर्णः
प्रहृष्ट एवार्जुनमभ्यधावत् ॥ ८५१ ॥

(अ. ९०) तयोरेवं युद्ध्यतोराजिमध्ये
सूतात्मजोऽभूदधिकः कदाचित् ।
पार्थः कदाचित् त्वधिकः किरीटी
वीर्यास्त्रमायाबलपौरुषेण ॥ ८५२ ॥

ततो भूतान्यन्तरिक्षस्थितानि
तौ कर्णपार्थौ प्रशशंसुर्नरेन्द्र ।
भोः कर्ण साध्वर्जुन साधु चेति
वियत्सु वाणी श्रूयते सर्वतोऽपि ॥ ८५३ ॥

ज्यां चानुमृज्याभ्यहनत्तलत्रे
बाणान्धकारं सहसा च चक्रे ॥ ८४७ ॥
ततः शरौघैः प्रदिशो दिशश्च
रवेः प्रभा कर्णरथश्च राजन् ।
अदृश्यमासीत् कुपिते धनञ्जये
तुषारनीहारवृतं यथा नभः ॥ ८४८ ॥
स चक्ररक्षानथ पादरक्षान्
पुरःसरान् पृष्ठगोपांश्च सर्वान् ।
दुर्योधनेनानुमतानरिघ्नः
समुद्यतान् सरथान् सारभूतान् ॥ ८४९ ॥
द्विसाहस्रान् समरे सव्यसाची
कुरुप्रवीरानृषभः कुरूणाम् ।
क्षणेन सर्वान् सरथाश्वसूता-
न्निनाय राजन् क्षयमेकवीरः ॥ ८५० ॥
ततोऽपलायन्त विहाय कर्णं
तवात्मजाः कुरवो येऽवशिष्टाः ।
न विव्यथे भारत तत्र कर्णः
प्रहृष्ट एवार्जुनमभ्यधावत् ॥ ८५१ ॥
(अ. ९०) तयोरेवं युद्ध्यतोराजिमध्ये
सूतात्मजोऽभूदधिकः कदाचित् ।
पार्थः कदाचित् त्वधिकः किरीटी
वीर्यास्त्रमायाबलपौरुषेण ॥ ८५२ ॥
ततो भूतान्यन्तरिक्षस्थितानि
तौ कर्णपार्थौ प्रशशंसुर्नरेन्द्र ।
भोः कर्ण साध्वर्जुन साधु चेति
वियत्सु वाणी श्रूयते सर्वतोऽपि ॥ ८५३ ॥

ततस्तु पातालतले शयानो
नागोऽश्वसेन• कृतवैरोऽर्जुनेन।
राजंस्तदा खाण्डवदाहमुक्तो
विवेश कोपाद्वसुधातले यः ॥ ८५४ ॥
अथोत्पपातोर्ध्वगतिर्जवेन
सन्दृश्य कर्णार्जुनयोर्विमर्दम् ॥ ८५५ ॥
अयं हि कालोऽस्य दुरात्मनो वै
पार्थस्य वैरप्रतियातनाय।
सञ्चिन्त्य तूर्णं प्रविवेश चैव
कर्णस्य राजञ्शररूपधारी ॥ ८५६ ॥
कर्णोऽथ पार्थं न विशेषयद्यदा
भृशं च पार्थेन शराभितप्तः।
ततो रिपुघ्नं समधत्त कर्ण•
सुसञ्चितं सर्पमुखं ज्वलन्तम्।
रौद्रं शरं सन्नतमुग्रधौतं
पार्थार्थमत्यर्थचिराभिगुप्तम् ॥ ८५७ ॥
सदार्चितं चन्दनचूर्णशायितं
सुवर्णतूणीरशयं महार्चिषम्।
आकर्णपूर्णं च विकृष्य कर्ण•
पार्थोन्मुखः सन्दधे चोत्तमौजाः ॥ ८५८ ॥
ततोऽब्रवीन्मद्रराजो महात्मा
दृष्ट्वा कर्ण प्रहितेषु तमुग्रम्।
न कर्ण ग्रीवामिषुरेष लप्स्यते
समीक्ष्य सन्धत्स्व शरं शिरोघ्नम् ॥ ८५९ ॥
अथाब्रवीत् क्रोधसंरक्तनेत्रो
मद्राधिपं सूतपुत्रस्तरस्वी।

न सन्धत्ते द्विः शरं शल्य कर्णो
न मादृशा जिह्मयुद्धा भवन्ति ॥ ८६० ॥

इतीदमुक्त्वा विससर्ज तं शरं
प्रयत्नतो वर्षगणाभिपूजितम् ।
हतोऽसि वै फाल्गुन इत्यधिक्षिप-
न्नुवाच चोच्चैर्गिरमूर्जितां वृषः ॥ ८६१ ॥

स सायकः कर्णभुजप्रसृष्टो
हुताशनार्कप्रतिमः सुघोरः ।
गुणच्युतः कर्णधनुःप्रमुक्तो
वियद्गतः प्राज्वलदन्तरिक्षे ॥ ८६२ ॥

तं प्रेक्ष्य दीप्तं युधि माधवस्तु
त्वरान्वितं सत्वरयैव लीलया ।
पदा विनिष्पिष्य रथोत्तमं स
प्रावेशयत् पृथिवीं किञ्चिदेव ॥ ८६३ ॥

क्षितिं गता जानुभिस्तेऽथ वाहा
हेमच्छन्नाश्चन्द्रमरीचिवर्णाः ॥ ८६४ ॥

तस्मिंस्तथा वै धरणीं निमग्ने
रथे प्रयत्नान्मधुसूदनस्य ।
ततः शरः सोऽभ्यहनत् किरीटं
तस्येन्द्रदत्तं सुदृढं च धीमतः ॥ ८६५ ॥

स वै किरीटं बहुरत्नभूषितं
जहार नागोऽर्जुनमूर्धतो बलात् ।
गिरेः सुजाताङ्कुरपुष्पितद्रुमं
महेन्द्रवज्रः शिखरोत्तमं यथा ॥ ८६६ ॥

ततः समुद्ग्रथ्य सितेन वाससा
स्वमूर्धजानव्यथितस्तदाऽर्जुन ।

विभासितः सूर्यमरीचिना दृढं
शिरोगतेनोदयपर्वतो यथा ॥ ८६७ ॥

महोरगः कृतवैरोऽर्जुनेन
किरीटमाहत्य तनो व्यतीयात्।
इयेष गन्तुं पुनरेव तूर्णं
दृष्टश्च कर्णेन ततोऽब्रवीत्तम् ॥ ८६८ ॥

मुक्तस्त्वयाऽहं त्वसमीक्ष्य कर्ण
शिरो हृतं यन्न मयाऽर्जुनस्य।
समीक्ष्य मां मुञ्च रणे त्वमाशु
हन्ताऽस्मि शत्रुं तव चात्मनश्च ॥ ८६९ ॥

स एवमुक्तो युधि सूतपुत्र-
स्तमब्रवीत् को भवानुग्ररूप.।
नागोऽब्रवीद्विद्धि कृतागसं मां
पार्थेन मातुर्वधजातवैरम् ॥ ८७० ॥

क.र्ण०— न नाग कर्णोऽद्य रणे परस्य
बलं समास्थाय जयं बुभूषेत्।
व्यालास्त्रसर्गोत्तमयत्नमन्युभि-
र्हन्तास्मि पार्थं सुसुखी व्रज त्वम् ॥ ८७१ ॥

इत्येवमुक्तो युधि नागराजः
कर्णेन रोषादसहंस्तस्य वाक्यम्।
स्वयं प्रायात् पार्थवधाय राजन्
कृत्वा स्वरूपं विजिघांसुरुग्रः ॥ ८७२ ॥

तत. कृष्णः पार्थमुवाच सङ्ख्ये
महोरगं कृतवैरं जहि त्वम् ॥ ८७३ ॥

ततः स जिष्णु परिवृत्य रोषा-
च्चिच्छेद षड्भिर्निशितैः सुधारै.।

नागं वियत्तिर्यगिवोत्पतन्तं
स च्छिन्नगात्रो निपपात भूमौ ॥ ८७४ ॥

गते च तस्मिन् भुजगे किरीटिना
स्वयं विभुः पार्थिव भूतलादथ ।
समुज्जहाराशु पुनः पतन्तं
रथं भुजाभ्यां पुरुषोत्तमस्ततः ॥ ८७५ ॥

तस्मिन् मुहूर्ते दशभिः पृषत्कैः
शिलाशितैर्बर्हिणबर्हवाजितैः ।
विव्याध कर्णः पुरुषप्रवीरो
धनञ्जयं तिर्यगवेक्षमाणः ॥ ८७६ ॥

ततोऽर्जुनो द्वादशभिः सुमुक्तै-
र्वराहकर्णैर्निशितैः समर्प्य ।
नाराचमाशीविषतुल्यवेग-
माकर्णपूर्णायतमुत्ससर्ज ॥ ८७७ ॥

स चित्रवर्मेषुवरो विदार्य
प्राणान्निरस्यन्निव साधु मुक्तः ।
कर्णस्य पीत्वा रुधिरं विवेश
वसुन्धरां शोणितदिग्धवाजः ॥ ८७८ ॥

ततो वृषो बाणनिपातकोपितो
महोरगो दण्डविघट्टितो यथा ।
तदाशुकारी व्यसृजच्छरोत्तमान्
महाविषः सर्प इवोत्तमं विषम् ॥ ८७९ ॥

जनार्दनं द्वादशभिः पराभिन-
न्नवैर्नवत्या च शरैस्तथाऽर्जुनम् ।
शरेण घोरेण पुनश्च पाण्डवं
विदार्य कर्णो व्यनदज्जहास च ॥ ८८० ॥

तमस्य हर्षं ममृषे न पाण्डवो
विभेद मर्माणि ततोऽस्य मर्मवित्।
परःशतैः पत्रिभिरिन्द्रविक्रम-
स्तथा यथेन्द्रो बलमोजसा रणे ॥ ८८१ ॥

मणिप्रवेकोत्तमवज्रहाटकै-
रलङ्कृतं चाऽस्य वराङ्गभूषणम्।
प्रविद्धमुर्व्यां निपपात पत्रिभि-
र्धनञ्जयेनोत्तमकुण्डलेऽपि च ॥ ८८२ ॥

दृढाहतः पत्रिभिरुग्रवेगैः
पार्थेन कर्णो विविधैः शिताग्रैः।
बभौ गिरिर्गैरिकधातुरक्तः
क्षरन् प्रपातैरिव रक्तमम्भः ॥ ८८३ ॥

कर्णरथचक्रग्रसनम्, श्रीकृष्णवाक्यम्, कर्णवधः

ततस्तदस्त्रं मनसः प्रनष्टं
यद्भार्गवोऽस्मै प्रददौ महात्मा।
चक्रं च वामं ग्रसते भूमिरस्य
प्राप्ते तस्मिन् वधकाले नृवीर ॥ ८८४ ॥

घूर्णे रथे ब्राह्मणस्याभिशापा-
द्रामादुपात्ते त्वविभाति चास्त्रे।
छिन्ने शरे सर्पमुखे च घोरे
पार्थेन तस्मिन् विषसाद कर्णः ॥ ८८५ ॥

अमृष्यमाणो व्यसनानि तानि
हस्तौ विधुन्वन् स विगर्हमाणः।
धर्मप्रधानं किल पाति धर्म
इत्यब्रुवन् धर्मविदः सदैव ॥ ८८६ ॥

वयं च धर्मे प्रयताम नित्यं
चर्तुं यथाशक्ति यथाश्रुतं च ।
स चापि निघ्नाति न पाति भक्तान्
मन्ये न नित्यं परिपाति धर्मः ॥ ८८७ ॥

एवं ब्रुवन् प्रस्खलिताश्वसूतो
विचाल्यमानोऽर्जुनबाणपातैः ।
मर्माभिघाताच्छिथिलः क्रियासु
पुनः पुनर्धर्ममसौ जगर्ह ॥ ८८८ ॥

ततोऽवतीर्य राधेयो रथादाशु समुद्यतः ।
चक्रं भुजाभ्यामालम्ब्य समुत्क्षेप्तुमियेष सः ॥ ८८९ ॥

शीर्णचक्रा समुत्क्षिप्ता कर्णेन चतुरङ्गुलम् ।
सप्तद्वीपा वसुमती सशैलवनकानना ॥ ८९० ॥

ग्रस्तचक्रस्तु राधेयः क्रोधादश्रूण्यवर्तयत् ।
अर्जुनं वीक्ष्य संरब्धमिदं वचनमब्रवीत् ॥ ८९१ ॥

भो भोः पार्थ महेष्वास मुहूर्तं परिपालय ।
यावच्चक्रमिदं ग्रस्तमुद्धरामि महीतलात् ॥ ८९२ ॥

सव्यं चक्रं महीग्रस्तं दृष्ट्वा दैवादिदं मम ।
पार्थ कापुरुषाचीर्णमभिसन्धिं विसर्जय ।
न त्वं कापुरुषाचीर्णं मार्गमास्थातुमर्हसि ॥ ८९३ ॥

ख्यातस्त्वमसि कौन्तेय विशिष्टो रणकर्मसु ।
दिव्यास्त्रविदमेयात्मा कार्तवीर्यसमो युधि ॥ ८९४ ॥

यावच्चक्रमिदं ग्रस्तमुद्धरामि महाभुज ।
न मां रथस्थो भूमिष्ठं विकलं हन्तुमर्हसि ।
न वासुदेवात्त्वत्तो वा पाण्डवेय बिभेम्यहम् ॥ ८९५ ॥

त्वं हि क्षत्रियदायादो महाकुलविवर्धन ।
अतस्त्वां प्रब्रवीम्येष मुहूर्तं क्षम पाण्डव ॥ ८९६ ॥

(अ. ९१) तमब्रवीद्वासुदेवो रथस्थो
राधेय दिष्ट्या स्मरसीह धर्मम्।
प्रायेण नीचा व्यसनेषु मग्ना
निन्दन्ति दैवं कुकृतं न तु स्वम्॥ ८९७॥

यद्द्रौपदीमेकवस्त्रां सभाया-
मानाययेस्त्वं च सुयोधनश्च।
दुःशासनः शकुनिः सौबलश्च
न ते कर्ण प्रत्यभात्तत्र धर्मः॥ ८९८॥

यदा सभायां राजानमनक्षज्ञं युधिष्ठिरम्।
अजैषीच्छकुनिर्ज्ञानात् क्व ते धर्मस्तदा गतः॥ ८९९॥

वनवासे व्यतीते च कर्ण वर्षे त्रयोदशे।
न प्रयच्छसि यद्राज्यं क्व ते धर्मस्तदा गतः॥ ९००॥

यद्भीमसेनं सर्पैश्च विषयुक्तैश्च भोजनैः।
आचरस्त्वन्मते राजा क्व ते धर्मस्तदा गतः॥ ९०१॥

यद्वारणावते पार्थान् सुप्ताञ्जतुगृहे तदा।
आदीपयस्त्वं राधेय क्व ते धर्मस्तदा गतः॥ ९०२॥

यदा रजस्वलां कृष्णां दुःशासनवशे स्थिताम्।
सभायां प्राहसः कर्ण क्व ते धर्मस्तदा गतः॥ ९०३॥

यदनार्यैः पुरा कृष्णां क्लिश्यमानामनागसम्।
उपप्रेक्षसि राधेय क्व ते धर्मस्तदा गतः॥ ९०४॥

विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः।
पतिमन्यं वृणीष्वेति वदंस्त्वं गजगामिनीम्।
उपप्रेक्षसि राधेय क्व ते धर्मस्तदा गतः॥ ९०५॥

यदाऽभिमन्युं बहवो युद्धे जघ्नुर्महारथाः।
परिवार्य रणे बालं क्व ते धर्मस्तदा गतः॥ ९०६॥

यद्येष धर्मस्तत्र न विद्यते हि
किं सर्वथा तालुविशोषणेन ।
अद्येह धर्म्याणि विधत्स्व सूत
तथापि जीवन्न विमोक्ष्यसे हि ॥ ९०७ ॥

एवमुक्तस्तदा कर्णो वासुदेवेन भारत ।
लज्जयावनतो भूत्वा नोत्तरं किञ्चिदुक्तवान् ॥ ९०८ ॥

क्रोधात् प्रस्फुरमाणोष्ठो धनुरुद्यम्य भारत ।
योधयामास वै पार्थं महावेगपराक्रमः ॥ ९०९ ॥

ततोऽब्रवीद्वासुदेवः फाल्गुनं पुरुषर्षभम् ।
दिव्यास्त्रेणैव निर्भिद्य पातयस्व महाबल ॥ ९१० ॥

एवमुक्तस्तु देवेन क्रोधमागात्तदाऽर्जुनः ॥ ९११ ॥

अथ त्वरन् कर्णवधाय पार्थो
महेन्द्रवज्रानलदण्डसन्निभम् ।
आदत्त चाथाञ्जलिकं निषङ्गा-
त्सहस्ररश्मेरिव रश्मिमुत्तमम् ॥ ९१२ ॥

शरोत्तमेनाञ्जलिकेन राजं-
स्तदा महास्त्रप्रतिमन्त्रितेन ।
पार्थोऽपराह्णे शिर उच्चकर्त
वैकर्तनस्याथ महेन्द्रसूनुः ॥ ९१३ ॥

तत् प्रापतच्चाञ्जलिकेन च्छिन्न-
मपास्य कायो निपपात पश्चात् ।
देहाच्च कर्णस्य निपातितस्य
तेजः सूर्यं खं वितत्याविवेश ॥ ९१४ ॥

तदद्भुतं सर्वमनुष्ययोधाः
सन्दृष्टवन्तो निहते स्म कर्णे
ततः शङ्खान् पाण्डवा दध्मुरुच्चै-
र्दृष्ट्वा कर्णं पातितं फाल्गुनेन ॥ ९१५ ॥

तथैव कृष्णश्च धनञ्जयश्च
हृष्टौ यमौ दध्मतुर्वारिजातौ ।
तं सोमकाः प्रेक्ष्य हत शयानं
सैन्यै. सार्धं सिंहनादान् प्रचक्रुः ॥ ९१६ ॥
कर्णं तु शूरं पतितं पृथिव्यां
शराचितं शोणितदिग्धगात्रम् ।
दृष्ट्वा शयानं भुवि मद्रराज-
श्छिन्नध्वजेनाथ ययौ रथेन ॥ ९१७ ॥
(अ. ९३) यत्र कर्णे हते पार्थः सिंहनादमथाकरोत् ।
तदा तव सुतान् राजन्नाविवेश महद्भयम् ॥ ९१८ ॥
न सन्धातुमनीकानि न चैवाशु पराक्रमे ।
आसीद्बुद्धिर्हते कर्णे तव योधस्य कर्हिचित् ॥ ९१९ ॥
वणिजो नावि भिन्नायामगाधे विप्लवे यथा ।
अपारे पारमिच्छन्तो हते द्वीपे किरीटिना ॥ ९२० ॥
सूतपुत्रे हते राजन् वित्रस्ताः शस्त्रविक्षताः ।
अनाथा नाथमिच्छन्तो मृगाः सिंहैरिवार्दिताः ॥ ९२१ ॥
भग्नशृङ्गा वृषा यद्वद्भग्नदंष्ट्रा इवोरगाः ।
प्रत्यपायाम सायाह्ने निर्जिताः सव्यसाचिना ॥ ९२२ ॥
ततोऽवस्थाप्य राजेन्द्र कृतबुद्धिस्तवात्मजः ।
हर्षयन्निव तान् योधानिदं वचनमब्रवीत् ॥ ९२३ ॥
न तं देशं प्रपश्यामि यत्र याता भयार्दिताः ।
गतानां यत्र वै मोक्षः पाण्डवात् किं गतेन वः ॥ ९२४ ॥
अल्पं च बलमेतेषां कृष्णौ च भृशविक्षतौ ।
अद्य सर्वान् हनिष्यामि ध्रुवो हि विजयो भवेत् ॥ ९२५ ॥
विप्रयातांस्तु वो भिन्नान् पाण्डवाः कृतकिल्बिषान् ।
अनुसृत्य वधिष्यन्ति श्रेयान्नः समरे वधः ॥ ९२६ ॥

सुखं साङ्ग्रामिको मृत्युः क्षत्रधर्मेण युध्यताम्।
मृतो दुःखं न जानीते प्रेत्य चानन्त्यमश्नुते ॥ ९२७ ॥
एवं ब्रुवति पुत्रे ते सैनिका भृशविक्षता ।
अनवेक्ष्यैव तद्वाक्यं प्राद्रवन् सर्वतो दिशः ॥ ९२८ ॥
(अ.९५) कर्णं तु निहतं दृष्ट्वा शत्रुभिः परमाहवे ।
भीता दिशो व्यकीर्यन्त तावकाः क्षतविक्षताः ॥ ९२९ ॥
ततोऽवहारं चक्रुस्ते योधाः सर्वे समन्ततः ।
निवार्यमाणाश्चोद्विग्नास्तावका भृशदुःखिताः ॥ ९३० ॥
तेषां तन्मतमाज्ञाय पुत्रो दुर्योधनस्तव ।
अवहारं ततश्चक्रे शल्यस्यानुमते नृप ॥ ९३१ ॥
(अ.९६) तथा निपतिते कर्णे परसैन्ये च विद्रुते ।
आश्लिष्य पार्थं दाशार्हो हर्षाद्वचनमब्रवीत् ॥ ९३२ ॥
हतो वज्रभृता वृत्रस्त्वया कर्णो धनञ्जय ।
वृत्रकर्णवधं घोरं कथयिष्यन्ति मानवाः ॥ ९३३ ॥
तमिमं विक्रमं लोके प्रथितं ते यशस्करम् ।
निवेदयावः कौन्तेय कुरुराजस्य धीमतः ॥ ९३४ ॥
वर्तमाने महायुद्धे तव कर्णस्य चोभयोः ।
द्रष्टुमायोधनं पूर्वमागतो धर्मनन्दनः ॥ ९३५ ॥
भृशं तु गाढविद्धत्वान्नाशकत् स्थातुमाहवे ।
ततः स शिबिरं गत्वा स्थितवान् पुरुषर्षभः ॥ ९३६ ॥
तथेत्युक्तः केशवस्तु पार्थेन यदुपुङ्गव ।
पर्यावर्तयदव्यग्रो रथं रथवरस्य तम् ॥ ९३७ ॥
पार्थमादाय गोविन्दो ददर्श च युधिष्ठिरम् ।
शयानं राजशार्दूलं काञ्चने शयनोत्तमे ॥ ९३८ ॥
अगृह्णीतां च मुदितौ चरणौ पार्थिवस्य तौ ।
तयोः प्रहर्षमालक्ष्य हर्षादश्रूण्यवर्तयत ॥ ९३९ ॥

राधेयं निहतं मत्वा समुत्तस्थौ युधिष्ठिरः।
वासुदेवार्जुनौ प्रेम्णा तावुभौ परिषस्वजे॥ ९४० ॥
तत्तस्मै तद्यथावृत्तं वासुदेवः सहार्जुनः।
कथयामास कर्णस्य निधनं यदुपुङ्गव ॥ ९४१ ॥
ईषदुत्स्मयमानस्तु कृष्णो राजानमब्रवीत्।
हतो वैकर्तनो राजन् सूतपुत्रो महारथः।
दिष्ट्या जयसि राजेन्द्र दिष्ट्या वर्धसि भारत॥ ९४२ ॥
यस्तु द्यूतजितां कृष्णां प्राहसत् पुरुषाधमः।
तस्याद्य सूतपुत्रस्य भूमिः पिबति शोणितम्॥ ९४३ ॥
शेतेऽसौ शरपूर्णाङ्गः शत्रुस्ते कुरुपुङ्गव।
तं पश्य पुरुषव्याघ्र विभिन्नं बहुभिः शरैः॥ ९४४ ॥
हतामित्रामिमामुर्वीमनुशाधि महाभुज।
यत्तो भूत्वा सहास्माभिर्भुङ्क्ष्व भोगांश्च पुष्कलान्॥९४५॥
इति श्रुत्वा वचस्तस्य केशवस्य महात्मनः।
धर्मपुत्रः प्रहृष्टात्मा दाशार्हं वाक्यमब्रवीत्॥ ९४६ ॥
तव कृष्ण प्रसादेन पाण्डवोऽयं धनञ्जयः।
जिगायाभिमुखः शत्रून्न चासीद्विमुखः क्वचित्॥ ९४७ ॥
जयश्चैव ध्रुवोऽस्माकं न त्वस्माकं पराजयः।
यदा त्वं युधि पार्थस्य सारथ्यमुपजग्मिवान्॥ ९४८ ॥
इत्युक्त्वा धर्मराजस्तु रथं हेमविभूषितम्।
आस्थाय पुरुषव्याघ्रः स्वबलेनाभिसंवृतः॥ ९४९ ॥
प्रययौ स महाबाहुर्द्रष्टुमायोधनं तदा।
कृष्णार्जुनाभ्यां वीराभ्यामनुमन्त्र्य ततः प्रियम्॥ ९५० ॥
आभाषमाणस्तौ वीरावुभौ माधवफाल्गुनौ।
स ददर्श रणे कर्णं शयानं पुरुषर्षभम्॥ ९५१ ॥
यथा कदम्बकुसुमं केसरैः सर्वतोवृतम्।
चितं शरशतैः कर्णं धर्मराजो ददर्श सः॥ ९५२ ॥

गन्धतैलावसिक्ताभिः काञ्चनीभिः सहस्रश.।
दीपिकाभिः कृतोद्योतं पश्यन्ते वै वृषं तदा ॥ ९५३ ॥
संछिन्नभिन्नकवचं बाणैश्च विदलीकृतम्।
सपुत्रं निहतं दृष्ट्वा कर्णं राजा युधिष्ठिरः॥ ९५४॥
सञ्जातप्रत्ययोऽतीव वीक्ष्य चैवं पुन. पुन ।
प्रशशंस नरव्याघ्रावुभौ माधवपाण्डवौ॥ ९५५॥
अद्य राजास्मि गोविन्द पृथिव्यां भ्रातृभिः सह।
त्वया नाथेन वीरेण विदुषा परिपालित ॥ ९५६ ॥
दिष्ट्या जयसि गोविन्द दिष्ट्या शत्रुर्निपातितः।
दिष्ट्या गाण्डीवधन्वा च विजयी पाण्डुनन्दनः ॥ ९५७ ॥
त्रयोदश समास्तीर्णा जागरेण सुदुःखिता.।
स्वप्स्यामोऽद्य सुखं रात्रौ त्वत्प्रसादान्महाभुज ॥ ९५८ ॥
सञ्जय०— दृष्ट्वा च निहतं कर्णं सपुत्रं पार्थसायकैः।
पुनर्जातमिवात्मानं मेने च स महीपति ॥ ९५९॥
समेत्य च महाराज कुन्तीपुत्रं युधिष्ठिरम्।
हर्षयन्ति स्म राजानं हर्षयुक्ता महारथाः॥ ९६०॥
ते वर्धयित्वा नृपतिं धर्मात्मानं युधिष्ठिरम्।
स्तुवन्तः स्तवयुक्ताभिर्वाग्भि. कृष्णौ परंतपौ।
जग्मुः स्वशिबिरायैव मुदा युक्ता महारथा ॥ ९६१॥
एवमेष क्षयो वृत्तः सुमहाल्लोमहर्षणः।
तव दुर्मन्त्रिते राजन् किमर्थमनुशोचसि॥ ९६२॥

भीष्मपर्वत. श्लोकाः॥ ४६४२ ॥
आदिपर्वत श्लोकाः॥ ९६३७ ॥

इति श्रीमहाभारतसारे कर्णपर्व समाप्तम्॥

---

# महाभारतसारः

## ९. शल्यपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥

### दुर्योधनमृत्युं श्रुत्वा धृतराष्ट्रशोकः

(अ. १) ततः पूर्णाह्णसमये शिबिरादेत्य सञ्जयः ।
वैश०- प्रविवेश पुरीं दीनो दुःखशोकसमन्वितः ॥ १ ॥
वेपमानस्ततो राज्ञः प्रविवेश निकेतनम् ॥ २ ॥

ददर्श नृपतिश्रेष्ठं प्रज्ञाचक्षुषमीश्वरम् ।
तथा चासीनमनघं समन्तात् परिवारितम् ॥ ३ ॥

स्नुषाभिर्भरतश्रेष्ठ गान्धार्या विदुरेण च ।
तमेव चार्थं ध्यायन्तं कर्णस्य निधनं प्रति ॥ ४ ॥

रुदन्नेवाब्रवीद्वाक्यं राजानं जनमेजय ।
नातिहृष्टमनाः सूतो वाक्यसन्दिग्धया गिरा ॥ ५ ॥

सञ्जयोऽहं नरव्याघ्र नमस्ते भरतर्षभ ।
मद्राधिपो हतः शल्यः शकुनि सौबलस्तथा ॥ ६ ॥

राजानो राजपुत्राश्च सर्वे ते निहता नृप ।
दुर्योधनो हतो राजा यथोक्तं पाण्डवेन ह ।
भग्नसक्थो महाराज शेते पांसुषु रूषितः ॥ ७ ॥

पञ्चालाश्च नरव्याघ्र चेदयश्च निषूदिताः ।
तव पुत्रा हताः सर्वे द्रौपदेयाश्च भारत ॥ ८ ॥

कर्णपुत्रो हतः शूरो वृषसेनः प्रतापवान् ।
प्रायः स्त्रीशेषमभवज्जगत्कालेन मोहितम् ॥ ९ ॥

सप्त पाण्डवतः शेषा धार्तराष्ट्रास्त्रयो रथाः ॥ १० ॥

ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः।
कृपश्च कृतवर्मा च द्रौणिश्च जयता वरः॥ ११॥

एतच्छ्रुत्वा वचः क्रूरं धृतराष्ट्रो जनेश्वरः।
निपपात स राजेन्द्रो गतसत्वो महीतले॥ १२॥

गान्धारी च नृपश्रेष्ठ सर्वाश्च कुरुयोषितः।
पतिताः सहसा भूमौ श्रुत्वा क्रूरं वचस्तदा॥ १३॥

तं तथा पतितं दृष्ट्वा बान्धवा येऽस्य केचन।
शीतैस्ते सिषिचुस्तोयैर्विव्यजुर्व्यजनैरपि॥ १४॥

स तु दीर्घेण कालेन प्रत्याश्वस्तो नराधिपः।
तूष्णीं दध्यौ महीपाल पुत्रव्यसनकार्शितः॥ १५॥

ततो दीर्घेण कालेन विदुरं वाक्यमब्रवीत्॥ १६॥

गच्छन्तु योषितः सर्वा गान्धारी च यशस्विनी।
तथेमे सुहृदः सर्वे भ्राम्यते मे मनो भृशम्॥ १७॥

एवमुक्तस्ततः क्षत्ता ताः स्त्रियो भरतर्षभ।
विसर्जयामास शनैर्वेपमानः पुनः पुनः॥ १८॥

(अ. २) विसृष्टास्वथ नारीषु धृतराष्ट्रोऽम्बिकासुतः।
विललाप महाराज दुःखाद्दुःखान्तरं गतः॥ १९॥

धृत०— अहो बत महद्दुःखं यदहं पाण्डवान् रणे।
क्षेमिणश्चाव्ययांश्चैव त्वत्तः सूत शृणोमि वै॥ २०॥

वज्रसारमयं नूनं हृदयं सुदृढं मम।
यच्छ्रुत्वा निहतान् पुत्रान् दीर्यते न सहस्रधा॥ २१॥

चिन्तयित्वा वयस्तेषां बालक्रीडां च सञ्जय।
हतान् पुत्रानशेषेण दीर्यते मे भृशं मनः॥ २२॥

अनेत्रत्वाद्यदेतेषां न मे रूपनिदर्शनम्।
पुत्रस्नेहकृता प्रीतिर्नित्यमेतेषु धारिता॥ २३॥

बालभावमतिक्रम्य यौवनस्थांश्च तानहम्।
मध्यप्राप्तांस्तथा श्रुत्वा हृष्ट आसं तदानघ ॥ २४ ॥
तानद्य निहताञ्श्रुत्वा हतैश्वर्यान् हतौजसः।
न लभेयं क्वचिच्छान्तिं पुत्राधिभिरभिप्लुत. ॥ २५ ॥
एह्येहि पुत्र राजेन्द्र ममानाथस्य साम्प्रतम्।
त्वया हीनो महाबाहो कां नु यास्याम्यहं गतिम् ॥ २६ ॥
को नु मामुत्थितं वीर तात तातेति वक्ष्यति।
महाराजेति सततं लोकनाथेति चासकृत् ॥ २७ ॥
परिष्वज्य च मां कण्ठे स्नेहेन क्लिन्नलोचनः।
अनुशाधीति कौरव्य तत्साधु वद मे वचः ॥ २८ ॥
ननु नामाहमश्रौषं वचनं तव पुत्रक।
भूयसी मम पृथ्वीय यथा पार्थस्य नो तथा ॥ २९ ॥
कर्ण एको मया सार्धं निहनिष्यति पाण्डवान्।
ततो नृपतयो वीराः स्थास्यन्ति मम शासने ॥ ३० ॥
यश्च तेषां प्रणेता वै वासुदेवो महाबल.।
न स सन्नह्यते राजन्निति मामब्रवीद्वच. ॥ ३१ ॥
तस्याथ वदतः सूत बहुशो मम सन्निधौ।
शक्तितो ह्यनुपश्यामि निहतान् पाण्डवान् रणे ॥ ३२ ॥
तेषां मध्ये स्थिता यत्र हन्यन्ते मम पुत्रका.।
व्यायच्छमाना. समरे किमन्यद्भागधेयतः ॥ ३३ ॥
भीष्मश्च निहतो यत्र लोकनाथः प्रतापवान्।
शिखण्डिनं समासाद्य मृगेन्द्र इव जम्बुकम् ॥ ३४ ॥
द्रोणश्च ब्राह्मणो यत्र सर्वशस्त्रास्त्रपारग.।
निहतः पाण्डवैः सङ्ख्ये किमन्यद्भागधेयतः ॥ ३५ ॥
कर्णश्च निहतः सङ्ख्ये दिव्यास्त्रज्ञो महाबलः।
पुत्राश्च मे विनिहता पौत्राश्चैव महाबलाः।
वयस्या भ्रातरश्चैव किमन्यद्भागधेयत. ॥ ३६ ॥

भागधेयसमायुक्तो ध्रुवमुत्पद्यते नर।
यस्तु भाग्यसमायुक्त स शुभं प्राप्नुयान्नर ॥ ३७ ॥

अहं वियुक्तस्तैर्भाग्यैः पुत्रैश्चैवेह सञ्जय ।
कथमद्य भविष्यामि वृद्धः शत्रुवशं गतः ॥ ३८ ॥

न हि मेऽन्यद्भवेच्छ्रेयो वनाभ्युपगमादृते।
इमामवस्थां प्राप्तस्य लूनपक्षस्य सञ्जय ॥ ३९ ॥

कथं हि भीमसेनस्य श्रोष्येऽहं परुषा गिरः ॥ ४० ॥

वैश०- एवं वृद्धश्च सन्तप्त पार्थिवो हतबान्धवः।
विलप्य सुचिरं कालं धृतराष्ट्रोऽम्बिकासुतः।
पुनर्गावल्गणिं सूतं पर्यपृच्छद्यथातथम् ॥ ४१ ॥

धृत०- भीष्मद्रोणौ हतौ श्रुत्वा सूतपुत्रं च घातितम्।
सेनापतिं प्रणेतारं कमकुर्वत मामका ॥ ४२ ॥

यं यं सेनाप्रणेतारं युधि कुर्वन्ति मामकाः।
अचिरेणैव कालेन तं तं निघ्नन्ति पाण्डवा ॥ ४३ ॥

पूर्वमेवाहमुक्तो वै विदुरेण महात्मना।
दुर्योधनापराधेन प्रजेय विनशिष्यति ॥ ४४ ॥

तत्तथा समनुप्राप्तं वचनं सत्यवादिनः ॥ ४५ ॥

दैवोपहतचित्तेन यन्मया न कृतं पुरा।
अनयस्य फलं तस्य ब्रूहि गावल्गणे पुनः ॥ ४६ ॥

को वा मुखमनीकानामासीत् कर्णे निपातिते।
अर्जुनं वासुदेवं च को वा प्रत्युद्ययौ रथी ॥ ४७ ॥

यद्यथा यादृशं चैव युद्धं वृत्तं च साम्प्रतम्।
अखिलं श्रोतुमिच्छामि कुशलो ह्यसि सञ्जय ॥ ४८ ॥

## कृप-दुर्योधन-संवादः

(अ. ३) शृणु राजन्नवहितो यथावृत्तो महान् क्षयः।
सञ्जय०– कुरूणां पाण्डवानां च समासाद्य परस्परम् ॥ ४९ ॥

सूतपुत्रे हते राजन् पुत्रास्ते प्राद्रवंस्तत ॥ ५० ॥

विध्वस्तकवचाः सर्वे कांदिशीका विचेतसः।
अन्योन्यमभिनिघ्नन्तो वीक्ष्यमाणा भयाद्दिशः ॥ ५१ ॥

मामेव नूनं बीभत्सुर्मामेव च वृकोदरः।
अभियातीति मन्वानाः पेतुर्मम्लुश्च भारत ॥ ५२ ॥

व्यालतस्करसङ्कीर्णे सार्थहीना यथा वने।
तथा त्वदीया निहते सूतपुत्रे तदाऽभवन् ॥ ५३ ॥

सर्वं पार्थमयं लोकमपश्यन्वै भयार्दिताः ॥ ५४ ॥

(अ. ४) विमुखे तव पुत्रे तु शोकोपहतचेतसि।
कृपाविष्टः कृपो राजन् वयःशीलसमन्वितः ॥ ५५ ॥

अब्रवीत्तत्र तेजस्वी सोऽभिसृत्य जनाधिपम्।
दुर्योधनं मन्युवशाद्वाक्यं वाक्यविशारदः ॥ ५६ ॥

दुर्योधन निबोधेदं यत्त्वां वक्ष्यामि कौरव।
श्रुत्वा कुरु महाराज यदि ते रोचतेऽनघ ॥ ५७ ॥

अद्य सप्तदशाहानि वर्तमानस्य भारत।
सङ्ग्रामस्यातिघोरस्य वध्यतां चामितो युधि ॥ ५८ ॥

वायुनेव विधूतानि तव सैन्यानि सर्वतः।
शरदम्भोदजालानि व्यशीर्यन्त समन्ततः ॥ ५९ ॥

तां नावमिव पर्यस्तां वातधूतां महार्णवे।
तव सेनां महाराज सव्यसाची व्यकम्पयत् ॥ ६० ॥

क्व नु ते सूतपुत्रोऽभूत् क्व नु द्रोणः सहानुगः।
अहं क्व च क्व चात्मा ते हार्दिक्यश्च तथा क्व नु ॥ ६१ ॥

दुःशासनश्च ते भ्राता भ्रातृभिः सहितः क्व नु ।
को हीह स पुमानस्ति यो विजेष्यति पाण्डवम् ॥ ६२ ॥

आत्मनोऽर्थे त्वया लोको यत्नतः सर्व आहृतः ।
स ते संशयितस्तात आत्मा वै भरतर्षभ ॥ ६३ ॥

रक्ष दुर्योधनात्मानमात्मा सर्वस्य भाजनम् ।
भिन्ने हि भाजने तात दिशो गच्छति तद्गतम् ॥ ६४ ॥

हीयमानेन वै सन्धिः पर्येष्टव्यः समेन वा ।
विग्रहो वर्धमानेन मतिरेषा बृहस्पतेः ॥ ६५ ॥

ते वयं पाण्डुपुत्रेभ्यो हीनाः स्म बलशक्तितः ।
तदत्र पाण्डवैः सार्धं सन्धिं मन्ये क्षमं प्रभो ॥ ६६ ॥

न जानीते हि यः श्रेयः श्रेयसश्चावमन्यते ।
स क्षिप्रं भ्रश्यते राज्यान्न च श्रेयोऽनुविन्दते ॥ ६७ ॥

प्रणिपत्य हि राजानं राज्यं यदि लभेमहि ।
श्रेयः स्यान्न तु मौढ्येन राजन् गन्तुं पराभवम् ॥ ६८ ॥

वैचित्रवीर्यवचनात् कृपाशीलो युधिष्ठिरः ।
विनियुञ्जीत राज्ये त्वां गोविन्दवचनेन च ॥ ६९ ॥

एतत् क्षेममहं मन्ये न च पार्थैश्च विग्रहम् ॥ ७० ॥

न त्वां ब्रवीमि कार्पण्यान्न प्राणपरिरक्षणात् ।
पथ्यं राजन् ब्रवीमि त्वां तत् परासुः स्मरिष्यसि ॥ ७१ ॥

(अ. ५) एवमुक्तस्ततो राजा गौतमेन तपस्विना ।
निःश्वस्य दीर्घमुष्णं च तूष्णीमासीद्विशां पते ॥ ७२ ॥

ततो मुहूर्तं स ध्यात्वा धार्तराष्ट्रो महामनाः ।
कृपं शारद्वतं वाक्यमित्युवाच परंतपः ॥ ७३ ॥

हेतुकारणसंयुक्तं हितं वचनमुत्तमम् ।
उच्यमानं महाबाहो न मे विप्राग्र्य रोचते ॥ ७४ ॥

राज्याद्विनिकृतोऽस्माभिः कथं सोऽस्मासु विश्वसेत्।
अक्षद्यूते च नृपतिर्जितोऽस्माभिर्महाधनः।
स कथं मम वाक्यानि श्रद्दध्याद्भूय एव तु ॥ ७५ ॥

दुःशासनेन यत्कृष्णा एकवस्त्रा रजस्वला।
परिक्लिष्टा सभामध्ये सर्वलोकस्य पश्यतः ॥ ७६ ॥

तथा विवसनां दीनां स्मरन्त्यद्यापि पाण्डवाः।
न निवारयितुं शक्याः सङ्ग्रामात्ते परंतपाः ॥ ७७ ॥

यदा च द्रौपदी क्लिष्टा मद्विनाशाय दुःखिता।
स्थण्डिले नित्यदा शेते यावद्वैरस्य यातनम् ॥ ७८ ॥

इति सर्वं समुन्नद्धं न निर्वाति कथञ्चन।
अभिमन्योर्विनाशेन स सन्धेयः कथं मया ॥ ७९ ॥

कथं च राजा भुक्त्वेमां पृथिवीं सागराम्बराम्।
पाण्डवानां प्रसादेन भोक्ष्ये राज्यमहं कथम् ॥ ८० ॥

उपर्युपरि राज्ञां वै ज्वलित्वा भास्करो यथा।
युधिष्ठिरं कथं पश्चादनुयास्यामि दासवत् ॥ ८१ ॥

नाभ्यसूयामि ते वाक्यमुक्तं स्निग्धं हित त्वया।
न तु सन्धिमहं मन्ये प्राप्तकालं कथञ्चन ॥ ८२ ॥

नायं क्लीबयितुं कालः संयोद्धुं काल एव नः ॥ ८३ ॥

इष्टं मे बहुभिर्यज्ञैर्दत्ता विप्रेषु दक्षिणा।
प्राप्ताः कामा श्रुता वेदाः शत्रूणां मूर्ध्नि च स्थितम् ॥ ८४ ॥

भृत्या मे सुभृतास्तात दीनश्चाभ्युद्धृतो जनः।
नोत्सहेऽद्य द्विजश्रेष्ठ पाण्डवान् वक्तुमीदृशम् ॥ ८५ ॥

न ध्रुवं सुखमस्तीति कुतो राष्ट्रं कुतो यशः।
इह कीर्तिर्विधातव्या सा च युद्धेन नान्यथा ॥ ८६ ॥

गृहे यत्क्षत्रियस्यापि निधनं तद्विगर्हितम्।
अधर्मः सुमहानेष यच्छय्यामरणं गृहे ॥ ८७ ॥

अरण्ये यो विमुच्येत सङ्ग्रामे वा तनुं नर.।
क्रतूनाहृत्य महतो महिमानं स गच्छति ॥ ८८ ॥
कृपण विलपन्नार्तो जरयाऽभिपरिप्लुतः।
म्रियते रुदतां मध्ये ज्ञातीना न स पूरुषः ॥ ८९ ॥
ये मदर्थे हताः शूरास्तेषां कृतमनुस्मरन्।
ऋणं तत्प्रतियुञ्जानो न राज्ये मन आदधे ॥ ९० ॥
घातयित्वा वयस्यांश्च भ्रातॄनथ पितामहान्।
जीवितं यदि रक्षेयं लोको मा गर्हयेद्ध्रुवम् ॥ ९१ ॥
कीदृशं च भवेद्राज्यं मम हीनस्य बन्धुभि.।
सखिभिश्च विशेषेण प्रणिपत्य च पाण्डवम् ॥ ९२ ॥
सोऽहमेतादृशं कृत्वा जगतोऽस्य पराभवम्।
सुयुद्धेन तत स्वर्गं प्राप्स्यामि न तदन्यथा ॥ ९३ ॥
एव दुर्योधनेनोक्तं सर्वे सम्पूज्य तद्वच.।
साधु साध्विति राजानं क्षत्रिया. सम्बभाषिरे ॥ ९४ ॥

## शल्यस्य सेनापतित्वम्, अष्टादशदिनयुद्धम्

(अ. ६) ततो दुर्योधनः स्थित्वा रथे रथवरोत्तमम्।
सर्वयुद्धविभावज्ञमन्तकप्रतिमं युधि ॥ ९५ ॥
सर्वलक्षणसम्पन्नं निपुणं श्रुतिसागरम्।
जेतारं तरसाऽरीणामजेयमरिभिर्बलात् ॥ ९६ ॥
आराध्य त्र्यम्बकं यत्नाद्व्रतैरुग्रैर्महातपा.।
अयोनिजायामुत्पन्नो द्रोणेनायोनिजेन यः।
तमभ्येत्यात्मजस्तुभ्यमश्वत्थामानमब्रवीत् ॥ ९७ ॥
गुरुपुत्रोऽद्य सर्वेषामस्माकं परमा गतिः।
भवांस्तस्मान्नियोगात्ते कोऽस्तु सेनापतिर्मम ॥ ९८ ॥
द्रौणि०— अयं कुलेन रूपेण तेजसा यशसा श्रिया।
सर्वैर्गुणैः समुदित. शल्यो नोऽस्तु चमूपतिः ॥ ९९ ॥

(अ. ७) एवमुक्तस्ततो राजा मद्राधिपतिमञ्जसा।
अभ्यषिञ्चत सेनाया मध्ये भरतसत्तम ॥ १०० ॥

अभिषिक्ते ततस्तस्मिन् सिंहनादो महानभूत्।
तव सैन्येऽभ्यवाद्यन्त वादित्राणि च भारत ॥ १०१ ॥

हृष्टाः सुमनसश्चैव बभूवुस्तत्र सैनिका.।
मेनिरे निहतान् पार्थान् मद्रराजवशं गतान् ॥ १०२ ॥

प्रहर्षं प्राप्य सेना तु तावकी भरतर्षभ।
तां रात्रिमुषिता सुप्ता हर्षचित्ता च साऽभवत् ॥ १०३ ॥

(अ. ८) व्यतीतायां रजन्यां तु राजा दुर्योधनस्तदा।
अब्रवीत्तावकान् सर्वान् सन्नह्यन्तां महारथा. ॥ १०४ ॥

राज्ञश्च मतमाज्ञाय समनह्यत सा चमूः ॥ १०५ ॥

तत. सर्वे समागम्य पुत्रेण तव सैनिका.।
कृपश्च कृतवर्मा च द्रौणि. शल्योऽथ सौबल।
अन्ये च पार्थिवाः शेषा समयं चक्रुरादृताः ॥ १०६ ॥

न न एकेन योद्धव्यं कथञ्चिदपि पाण्डवै. ॥ १०७ ॥

यो ह्येकः पाण्डवैर्युध्येद्यो वा युध्यन्तमुत्सृजेत्।
स पञ्चभिर्भवेद्युक्तः पातकैश्चोपपातकैः।
अन्योन्यं परिरक्षद्भिर्योद्धव्यं सहितैश्च ह ॥ १०८ ॥

एवं ते समयं कृत्वा सर्वे तत्र महारथा।
मद्रराजं पुरस्कृत्य तूर्णमभ्यद्रवन् परान् ॥ १०९ ॥

तथैव पाण्डवा राजन् व्यूह्य सैन्यं महारणे।
अभ्ययुः कौरवान् राजन् योत्स्यमाना समन्ततः ॥ ११० ॥

धृत०- हते भीष्मे महेष्वासे द्रोणे कर्णे महारथे।
मामकानां परेषां च किं शिष्टमभवद्बलम् ॥ १११ ॥

सञ्जय०-एकादश सहस्राणि रथानां भरतर्षभ।
दश दन्तिसहस्राणि सप्त चैव शतानि च ॥ ११२ ॥

पूर्णे शतसहस्रे द्वे हयानां तत्र भारत।
पत्तिकोट्यस्तथा तिस्रो बलमेतत्तवाभवत्॥ ११३ ॥

रथाना षट्सहस्राणि षट्सहस्राश्च कुञ्जराः।
दश चाश्वसहस्राणि पत्तिकोटी च भारत।
एतद्बलं पाण्डवानामभवच्छेषमाहवे ॥ ११४ ॥

इमे ते च बलौघेन परस्परवधैषिण ।
उपयाता नरव्याघ्रा· पूर्वां सन्ध्यां प्रति प्रभो ॥ ११५ ॥

ततः प्रववृते युद्धं घोररूपं भयानकम्।
तावकानां परेषां च निघ्नतामितरेतरम्॥ ११६ ॥

(अ. ९) निर्मर्यादे तथा युद्धे वर्तमाने भयानके।
(अ. १०) समाच्छेच्चित्रसेनं तु नकुलो युद्धदुर्मद·॥ ११७ ॥

तौ परस्परमासाद्य चित्रकार्मुकधारिणौ।
मेघाविव यथोद्वृत्तौ दक्षिणोत्तरवर्षिणौ ।
शरतोयैः सिषिचतुस्तौ परस्परमाहवे ॥ ११८ ॥

चित्रसेनस्तु भल्लेन पीतेन निशितेन च।
नकुलस्य महाराज मुष्टिदेशेऽच्छिनद्धनुः ॥ ११९ ॥

हयांश्चास्य शरैस्तीक्ष्णै प्रेषयामास मृत्यवे ॥ १२० ॥

स च्छिन्नधन्वा विरथः खड्गमादाय चर्म च।
रथादवातरद्वीरः शैलाग्रादिव केसरी ॥ १२१ ॥

चित्रसेनरथं प्राप्य चित्रयोधी जितश्रमः।
आरुरोह महाबाहुः सर्वसैन्यस्य पश्यत·॥ १२२ ॥

सकुण्डलं समुकुटं सुनसं स्वायतेक्षणम्।
चित्रसेनशिरः कायादपाहरत पाण्डवः ॥ १२३ ॥

विशस्तं भ्रातरं दृष्ट्वा कर्णपुत्रौ महारथौ।
सुषेण सत्यसेनश्च मुञ्चन्तौ विविधाञ्शरान् ॥ १२४ ॥

ततोऽभ्यधावता तूर्णं पाण्डवं रथिनां वरम् ।
जिघांसन्तौ यथा नाग व्याघ्रौ राजन् महावने ॥ १२५ ॥
स शरैः सर्वतो विद्धो रथशक्तिं परामृशत् ।
समुद्यम्य च चिक्षेप सत्यसेनस्य संयुगे ॥ १२६ ॥
सा तस्य हृदयं सङ्ख्ये बिभेद च तथा नृप ।
स पपात रथाद्भूमिं गतसत्त्वोऽल्पचेतन. ॥ १२७ ॥
भ्रातरं निहतं दृष्ट्वा सुषेणः क्रोधमूर्छित ।
अभ्यवर्षच्छरैस्तूर्णं पादात पाण्डुनन्दनम् ॥ १२८ ॥
ततः क्रुद्धो महाराज नकुलः परवीरहा ।
शरैस्तस्य दिश सर्वाश्छादयामास वीर्यवान् ॥ १२९ ॥
ततो गृहीत्वा तीक्ष्णाग्रमर्धचन्द्रं सुतेजनम् ।
सुवेगवन्त चिक्षेप कर्णपुत्राय संयुगे ॥ १३० ॥
तस्य तेन शिर कायाज्जहार नृपसत्तम ।
पश्यतां सर्वसैन्याना तदद्भुतमिवाभवत् ॥ १३१ ॥
स हत. प्रापतद्राजन्नकुलेन महात्मना ।
नदीवेगादिवारुग्णस्तीरजः पादपो महान् ॥ १३२ ॥
कर्णपुत्रवधं दृष्ट्वा नकुलस्य च विक्रमम् ।
प्रदुद्राव भयात् सेना तावकी भरतर्षभ ॥ १३३ ॥
(अ. ११) तां दृष्ट्वा सीदतीं सेनां पङ्के गामिव दुर्बलाम् ।
उज्जिहीर्षुस्तदा शल्यः प्रायात् पाण्डुसुतान् प्रति ॥ १३४ ॥
तत. शरशतैस्तीक्ष्णैर्मद्रराजो महारथः ।
अर्दयामास तां सेनां धर्मराजस्य पश्यतः ॥ १३५ ॥
तां सम्मर्द्य तत सङ्ख्ये लघुहस्तः शितैः शरैः ।
बाणवर्षेण महता युधिष्ठिरमताडयत् ॥ १३६ ॥
तस्य भीमो रणे क्रुद्ध. संदश्य दशनच्छदम् ।
विनाशायाभिसन्धाय गदामादाय वीर्यवान् ।
पोथयामास शल्यस्य चतुरोऽश्वान् महाजवान् ॥ १३७ ॥

ततः शल्यो रणे क्रुद्धः पीने वक्षसि तोमरम् ।
निचखान नदन् वीरो वर्म भित्त्वा च सोऽभ्ययात् ॥१३८॥
वृकोदरस्त्वसम्भ्रान्तस्तमेवोद्धृत्य तोमरम् ।
यन्तारं मद्रराजस्य निर्बिभेद ततो हृदि ॥ १३९ ॥
स भिन्नवर्मा रुधिरं वमन् वित्रस्तमानसः ।
पपाताभिमुखो दीनो मद्रराजस्त्वपाक्रमत् ॥ १४० ॥
(अ. १२) भीमसेनो गदापाणिः समाह्वयत मद्रपम् ॥ १४१ ॥
ततस्तु तावकाः शूरा नानाशस्त्रसमायुताः ।
अभ्यद्रवन् महाराज दुर्योधनपुरोगमाः ॥ १४२ ॥
तदनीकमभिप्रेक्ष्य ततस्ते पाण्डुनन्दनाः ।
प्रययुः सिंहनादेन दुर्योधनपुरोगमान् ॥ १४३ ॥
तेषामापततां तूर्णं पुत्रस्ते भरतर्षभ ।
प्रासेन चेकितानं वै विव्याध हृदये भृशम् ॥ १४४ ॥
स पपात रथोपस्थे तव पुत्रेण ताडितः ।
रुधिरौघपरिक्लिन्नः प्रविश्य विपुलं तमः ॥ १४५ ॥
चेकितानं हतं दृष्ट्वा पाण्डवेया महारथाः ।
असक्तमभ्यवर्षन्त शरवर्षाणि भागशः ॥ १४६ ॥
हत विध्यत गृह्णीत प्रहरध्वं निकृन्तत ।
इति स्म वाचः श्रूयन्ते तव तेषां च वै बले ॥ १४७ ॥
ततः शल्यो महाराज धर्मपुत्रं युधिष्ठिरम् ।
विव्याध निशितैर्बाणैर्हन्तुकामो महारथम् ॥ १४८ ॥
(अ. १३) पीडिते धर्मराजे तु मद्रराजेन मारिष ।
सात्यकिर्भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ ।
परिवार्य रथैः शल्यं पीडयामासुराहवे ॥ १४९ ॥
ततः शल्यो रणे राजन् सर्वास्तान् दशभिः शरैः ।
विव्याध भृशसंक्रुद्धस्तोत्त्रैरिव महाद्विपान् ॥ १५० ॥

ते वार्यमाणाः समरे मद्रराज्ञा महारथाः।
न शेकुः सम्मुखे स्थातु तस्य शत्रुनिषूदनाः ॥ १५१ ॥

ततो दुर्योधनो राजा दृष्ट्वा शल्यस्य विक्रमम्।
निहतान् पाण्डवान् मेने पञ्चालानथ सृञ्जयान् १५२ ॥

## शल्यवधः

(अ. १६) पीड्यमानास्तु शल्येन पाण्डवा भृशविक्षताः।
प्राद्रवन्त रणं हित्वा क्रोशमाने युधिष्ठिरे ॥ १५३ ॥

वध्यमानेष्वनीकेषु मद्रराजेन पाण्डवः।
अमर्षवशमापन्नो धर्मराजो युधिष्ठिरः।
समाहूयाब्रवीत् सर्वान् भ्रातॄन् कृष्णं च माधवम् ॥ १५४ ॥

योत्स्येऽहं मातुलेनाद्य क्षात्रधर्मेण पार्थिवा ।
स्वमंशमभिसन्धाय विजयायेतराय च ॥ १५५ ॥

तस्य मेऽप्यधिकं शस्त्रं सर्वोपकरणानि च ।
संसज्जन्तु रथे क्षिप्रं शास्त्रवद्रथयोजकाः ॥ १५६ ॥

शैनेयो दक्षिणं चक्रं धृष्टद्युम्नस्तथोत्तरम्।
पृष्ठगोपो भवत्वद्य मम पार्थो धनञ्जयः ॥ १५७ ॥

पुरःसरो ममाद्यास्तु भीमः शस्त्रभृतां वरः।
एवमभ्यधिक शल्याद्भविष्यामि महामृधे ॥ १५८ ॥

एवमुक्तास्तथा चक्रुस्तदा राज्ञः प्रियैषिणः।
ततः प्रहर्षः सैन्यानां पुनरासीत्तदा मृधे ॥ १५९ ॥

युधिष्ठिरस्तु मद्रेशमभ्यधावदमर्षित ॥ १६० ॥

तत्राश्चर्यमपश्याम कुन्तीपुत्रे युधिष्ठिरे।
पुरा भूत्वा मृदुर्दान्तो यत्तदा दारुणोऽभवत् ॥ १६१ ॥

शल्यस्तु शरवर्षेण पीडयामास पाण्डवम्।
मद्रराजं तु कौन्तेयः शरवर्षैरवाकिरत् ॥ १६२ ॥

तत· शरशतं शल्यो मुमोचाथ युधिष्ठिरे।
धनुश्चास्य सिताग्रेण बाणेन निरकृन्तत ॥ १६३ ॥
सोऽन्यत्कार्मुकमादाय शल्यं शरशतैस्त्रिभि ।
अविध्यत्कार्मुकं चास्य क्षुरेण निरकृन्तत ॥ १६४ ॥
अथास्य निजघानाश्वांश्चतुरो नतपर्वभि ।
द्वाभ्यामतिशिताग्राभ्यामुभौ तत्पार्ष्णिसारथी ॥ १६५ ॥
ततोऽस्य दीप्यमानेन पीतेन निशितेन च ।
प्रमुखे वर्तमानस्य भल्लेनापाहरद्ध्वजम् ॥ १६६ ॥
ततः प्रभग्नं तत् सैन्यं दौर्योधनमरिन्दम ॥ १६७ ॥
ततो मद्राधिपं द्रौणिरभ्यधावत्तथा कृतम्।
आरोप्य चैनं स्वरथे त्वरमाण· प्रदुद्रुवे ॥ १६८ ॥
मुहूर्तमिव तौ गत्वा नर्दमाने युधिष्ठिरे।
स्मित्त्वा ततो मद्रपतिरन्यं स्यन्दनमास्थितः ॥ १६९ ॥
(अ १७) अथान्यद्धनुरादाय बलवान् वेगवत्तरम्।
युधिष्ठिरं मद्रपतिर्भित्त्वा सिंह इवानदत् ॥ १७० ॥

सरक्षितो भीमसेनेन राजा
माद्रीसुताभ्यामथ माधवेन।
मद्राधिपं पत्रिभिरुग्रवेगैः
स्तनान्तरे धर्मसुतो निजघ्ने ॥ १७१ ॥
ततस्तु मद्राधिपतिर्महात्मा
युधिष्ठिरं भीमबल प्रसह्य।
विव्याध वीरं हृदयेऽतिवेगं
शरेण सूर्याग्निसमप्रभेण ॥ १७२ ॥
ततोऽतिविद्धोऽथ युधिष्ठिरोऽपि
सुसम्प्रयुक्तेन शरेण राजन्।
जघान मद्राधिपतिं महात्मा
मुदं च लेभे ऋषभ कुरूणाम् ॥ १७३ ॥

ततस्तु मद्राधिपतिं प्रकृष्टं
धनुर्विकृष्य व्यसृजत् पृषत्कान् ।
द्वाभ्यां शराभ्यां च तथैव राज्ञ-
श्चिच्छेद चापं कुरुपुङ्गवस्य ॥ १७४ ॥
कृपश्च तस्यैव जघान सूतं
षड्भिः शरैः सोऽभिमुखः पपात ।
मद्राधिपश्चापि युधिष्ठिरस्य
शरैश्चतुर्भिर्निजघान वाहान् ॥ १७५ ॥
तथा कृते राजनि भीमसेनो
मद्राधिपस्याथ ततो महात्मा ।
छित्त्वा धनुर्वेगवता शरेण
द्वाभ्यामविध्यत् सुभृशं नरेन्द्रम् ॥ १७६ ॥
स धर्मराजो निहताश्वसूतः
कृत्वा मनः शल्यवधे महात्मा ।
जग्राह शक्तिं कनकप्रकाशाम्
मद्राधिपं क्रुद्धमना निरैक्षत् ॥ १७७ ॥
ततस्तु शक्तिं रुचिरोग्रदण्डां
मणिप्रवेकोज्ज्वलितां प्रदीप्ताम् ।
चिक्षेप वेगात् सुभृशं महात्मा
मद्राधिपाय प्रवरः कुरूणाम् ॥ १७८ ॥
सा तस्य मर्माणि विदार्य शुभ्र-
मुरो विशालं च तथैव भित्त्वा ।
विवेश गां तोयमिवाप्रसक्ता
यशो विशालं नृपतेर्दहन्ती ॥ १७९ ॥
नासाक्षिकर्णास्यविनिःसृतेन
प्रस्यन्दता च व्रणसम्भवेन ।
संसिक्तगात्रो रुधिरेण सोऽभू-
त्क्रौञ्चो यथा स्कन्दहतो महाद्रिः ॥ १८० ॥

बाहू प्रसार्याभिमुखो धर्मराजस्य मद्रराट् ।
ततो निपतितो भूमाविन्द्रध्वज इवोच्छ्रितः ॥ १८१ ॥

चिरं भुक्त्वा वसुमतीं प्रियां कान्तामिव प्रभुः ।
सर्वैरङ्गैः समाश्लिष्य प्रसुप्त इव चाभवत् ॥ १८२ ॥

धर्म्ये धर्मात्मना युद्धे निहते धर्मसूनुना ।
सम्यग्घुत इव स्विष्टः प्रशान्तोऽग्निरिवाध्वरे ॥ १८३ ॥

(अ. १८) शल्येऽथ निहते राजन् मद्रराजपदानुगाः ।
रथाः सप्तशता वीरा निर्ययुर्महतो बलात् ॥ १८४ ॥

दुर्योधनेन ते वीरा वार्यमाणाः पुनः पुनः ।
युधिष्ठिरं जिघांसन्तः पाण्डूनां प्राविशन् बलम् ॥ १८५ ॥

ततोऽर्जुनश्च भीमश्च माद्रीपुत्रौ च पाण्डवौ ।
अभ्यघ्नन् युयुधानश्च मद्रराजपदानुगान् ॥ १८६ ॥

## शाल्ववधः

(अ. १९) पातिते युधि दुर्धर्षे मद्रराजे महारथे ।
तावकास्तव पुत्राश्च प्रायशो विमुखाऽभवन् ॥ १८७ ॥

वृषा यथा भग्नशृङ्गाः शीर्णदन्ता यथा गजाः ।
मध्याह्ने प्रत्यपायाम निर्जिताऽजातशत्रुणा ॥ १८८ ॥

न सन्धातुमनीकानि न च राजन् पराक्रमे ।
आसीद्बुद्धिर्हते शल्ये भूयो योधस्य कस्यचित् ॥ १८९ ॥

नातिदूरापयातं तु कृतबुद्धिं पलायने ।
दुर्योधनः स्वकं सैन्यमब्रवीद्भृशविक्षतम् ॥ १९० ॥

न तं देशं प्रपश्यामि पृथिव्यां पर्वतेषु च ।
यत्र यातान्न वा हन्युः पाण्डवाः किं सृतेन वः ॥ १९१ ॥

अल्पं च बलमेतेषां कृष्णौ च भृशविक्षतौ ।
यदि सर्वेऽत्र तिष्ठामो ध्रुवं नो विजयो भवेत् ॥ १९२ ॥

विप्रयातांस्तु वो भिन्नान् पाण्डवाः कृतविप्रियाः।
अनुसृत्य हनिष्यन्ति श्रेयान्नः समरे वधः॥ १९३॥

शृण्वन्तु क्षत्रियाः सर्वे यावन्तोऽत्र समागताः।
यदा शूरं च भीरुं च मारयत्यन्तकः सदा।
सुखः साङ्ग्रामिको मृत्युः क्षत्रधर्मेण युद्ध्यताम्॥ १९४॥

श्रुत्वा तद्वचनं तस्य पूजयित्वा च पार्थिवाः।
पुनरेवाभ्यवर्तन्त पाण्डवानाततायिनः॥ १९५॥

(अ. २०) सन्निवृत्ते जनौघे तु शाल्वो म्लेच्छगणाधिपः।
अभ्यवर्तत संक्रुद्धः पाण्डवानां महद्बलम्।
आस्थाय सुमहानागं प्रभिन्नं पर्वतोपमम्॥ १९६॥

स तेन नागप्रवरेण राज-
न्नभ्युद्ययौ पाण्डुसुतान् समेतान्।
सितैः पृषत्कैर्विददार वेगै-
र्महेन्द्रवज्रप्रतिमैः सुघोरैः।

ततः शरान् वै सृजतो महारणे
योधांश्च राजन् नयतो यमालयम्।
नास्यान्तरं ददृशुः स्वे परे वा
यथा पुरा वज्रधरस्य दैत्याः॥ १९७॥

ततः प्रभग्ना सहसा महाचमूः
सा पाण्डवी तेन नराधिपेन।
दिशश्चतस्रः सहसा विधाविता
गजेन्द्रवेगं तमपारयन्ती॥ १९८॥

पाञ्चालपुत्रस्त्वरितस्तु शूरो
गदां प्रगृह्याचलशृङ्गकल्पाम्।
ससम्भ्रमं भारत शत्रुघाती
जवेन वीरोऽनुससार नागम्॥ १९९॥

ततस्तु नागं धरणीधराभं
मदं स्रवन्तं जलदप्रकाशम्।
गदां समाविद्ध्य भृशं जघान
पाञ्चालराजस्य सुतस्तरस्वी ॥ २०० ॥
स भिन्नकुम्भः सहसा विनद्य
मुखात्प्रभूतं क्षतजं विमुञ्चन्।
पपात नागो धरणीधराभः
क्षितिप्रकम्पाच्चलितो यथाऽद्रिः ॥ २०१ ॥
निपात्यमाने तु तदा गजेन्द्रे
हाहाकृते तव पुत्रस्य सैन्ये।
स शाल्वराजस्य शिनिप्रवीरो
जहार भल्लेन शिरः शितेन ॥ २०२ ॥
हृतोत्तमाङ्गो युधि सात्वतेन
पपात भूमौ सह नागराज्ञा।
यथाऽद्रिशृङ्गं सुमहत् प्रणुन्नं
वज्रेण देवाधिपचोदितेन ॥ २०३ ॥

(अ. २१) तस्मिंस्तु निहते शूरे शाल्वे समितिशोभने।
तवाभज्यद्बलं वेगाद्वातेनेव महाद्रुमः ॥ २०४ ॥

(अ. २३) तांस्तु यत्नेन महता सन्निवार्य महारथान्।
पुत्रस्ते योधयामास पाण्डवानामनीकिनीम् ॥ २०५ ॥

## दुर्योधनपलायनम्, सुशर्मवधः, शकुनिवधः

(अ. २५) पाञ्चाल्यस्तु ततः क्रुद्धः सैन्येन महता वृतः।
अभ्यद्रवत् सुसङ्क्रुद्धस्तावकान् हन्तुमुद्यतः ॥ २०६ ॥
ततस्त्वापततस्तस्य तव पुत्रो जनाधिप।
बाणसङ्घाननेकान्वै प्रेषयामास भारत ॥ २०७ ॥

सोऽतिविद्धो महेष्वासस्तोत्रार्दित इव द्विपः।
तस्याश्वांश्चतुरो बाणैः प्रेषयामास मृत्यवे ॥ २०८ ॥

सारथेश्चास्य भल्लेन शिरः कायादपाहरत् ॥ २०९ ॥

ततो दुर्योधनो राजा पृष्ठमारुह्य वाजिनः।
अपाक्रामद्धतरथो नातिदूरमरिन्दमः ॥ २१० ॥

ततो रथेषु भग्नेषु त्रिसाहस्रा महाद्विपाः।
पाण्डवान् रथिनः सर्वान् समन्तात् पर्यवारयन् ॥ २११ ॥

अपक्रान्ते तव सुते हयपृष्ठं समाश्रिते।
दृष्ट्वा च पाण्डवान् सर्वान् कुञ्जरैः परिवारितान्।
धृष्टद्युम्नो महाराज सहसा समुपाद्रवत् ॥ २१२ ॥

अदृष्ट्वा तु रथानीके दुर्योधनमरिन्दमम्।
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः।
अपृच्छन् क्षत्रियॉस्तत्र क्व नु दुर्योधनो गतः ॥ २१३ ॥

आहुः केचिद्धते सूते प्रयातो यत्र सौबलः।
हित्वा पञ्चालराजस्य तदनीकं दुरुत्सहम् ॥ २१४ ॥

श्रुत्वा तु वचनं तेषामश्वत्थामा महाबलः।
भित्त्वा पञ्चालराजस्य तदनीक दुरुत्सहम्।
कृपश्च कृतवर्मा च प्रययौ यत्र सौबलः ॥ २१५ ॥

ततस्तेषु प्रयातेषु धृष्टद्युम्नपुरस्कृताः।
आययुः पाण्डवा राजन् विनिघ्नन्तः स्म तावकम् ॥ २१६ ॥

दृष्ट्वा तु तानापततः सम्प्रहृष्टान् महारथान्।
पराक्रान्तास्ततो वीरा निराशा जीविते तदा ॥ २१७ ॥

विवर्णमुखभूयिष्ठमभवत्तावकं बलम् ॥ २१८ ॥

परिक्षीणायुधान् दृष्ट्वा तानहं परिवारितान्।
राजन् बलेन व्यङ्गेन त्यक्त्वा जीवितमात्मनः ॥ २१९ ॥

आत्मना पञ्चमोऽयुद्धयं पाञ्चालस्य बलेन ह।
जितास्तेन वयं सर्वे व्यपयाम रणात्ततः॥ २२० ॥

अथापश्यं सात्यकिं तमुपायान्तं महारथम्।
रथैश्चतु शतैर्वीरो मामभ्यद्रवदाहवे॥ २२१ ॥

धृष्टद्युम्नादहं मुक्तः कथञ्चिच्छ्रान्तवाहनात्।
पतितो माधवानीकं दुष्कृती नरकं यथा॥ २२२ ॥

तत्र युद्धमभूद्घोरं मुहूर्तमतिदारुणम्॥ २२३ ॥

सात्यकिस्तु महाबाहुर्मम हत्वा परिच्छदम्।
जीवग्राहमगृह्णान्मां मूर्च्छितं पतितं भुवि॥ २२४ ॥

ततो मुहूर्तादिव तद्गजानीकमविध्यत।
गदया भीमसेनेन नाराचैरर्जुनेन च॥ २२५ ॥

(अ. २६) अदृश्यमाने कौरव्ये पुत्रे दुर्योधने तव।
सोदर्याः सहिता भूत्वा भीमसेनमुपाद्रवन्॥ २२६ ॥

ततो भीमो महाराज स्वरथं पुनरास्थितः।
मुमोच निशितान् बाणान्पुत्राणां तव मर्मसु॥ २२७ ॥

ते हता न्यपतन् भूमौ स्यन्दनेभ्यो महारथाः।
वसन्ते पुष्पशबला निकृत्ता इव किंशुकाः॥ २२८ ॥

ततः पञ्चशतान् हत्वा सवरूथान् महारथान्।
जघान कुञ्जरानीकं पुनः सप्तशतं युधि॥ २२९ ॥

भीमसेनस्तु कौन्तेयो हत्वा युद्धे सुतांस्तव।
मेने कृतार्थमात्मानं सफलं जन्म च प्रभो॥ २३० ॥

हतभूयिष्ठयोधा तु तव सेना विशां पते।
किञ्चिच्छेषा महाराज कृपणं समपद्यत॥ २३१ ॥

(अ. २७) दुर्योधनो महाराज सुदर्शश्चापि ते सुतः।
हतशेषौ तदा सङ्ख्ये वाजिमध्ये व्यवस्थितौ॥ २३२ ॥

तदनीकमभिप्रेक्ष्य त्रयः सज्जा महारथाः ।
भीमसेनोऽर्जुनश्चैव सहदेवश्च मारिष ॥ २३३ ॥

तान् प्रेक्ष्य सहितान् सर्वाञ्जवेनोद्यतकार्मुकान् ।
सुदर्शनस्तव सुतो भीमसेनं समभ्ययात् ॥ २३४ ॥

सुशर्मा शकुनिश्चैव युयुधाते किरीटिना ॥ २३५ ॥

पार्थोऽपि युधि विक्रम्य कुन्तीपुत्रो धनञ्जयः ।
पातयित्वा हयान् सर्वांस्त्रिगर्तानां रथान् ययौ ॥ २३६ ॥

सत्यकर्माणमाक्षिप्य क्षुरप्रेण महायशाः ।
शिरश्चिच्छेद सहसा तप्तकुण्डलभूषणम् ॥ २३७ ॥

सत्येषुमथ चादत्त योधानां मिषतां तत ।
यथा सिंहो वने राजन् मृगं परिबुभुक्षितः ॥ २३८ ॥

तत॰ शरं समादाय यमदण्डोपमं तदा ।
सुशर्माणं समुद्दिश्य चिक्षेपाशु हसन्निव ॥ २३९ ॥

स शर प्रेषितस्तेन क्रोधदीप्तेन धन्विना ।
सुशर्माणं समासाद्य बिभेद हृदयं रणे ॥ २४० ॥

स गतासुर्महाराज पपात धरणीतले ।
नन्दयन् पाण्डवान् सर्वान् व्यथयंश्चापि तावकान् ॥ २४१ ॥

सुशर्माणं रणे हत्वा पुत्रानस्य महारथान् ।
सप्त चाष्टौ च त्रिंशच्च सायकैरनयत् क्षयम् ॥ २४२ ॥

ततोऽस्य निशितैर्बाणैः सर्वान् हत्वा पदानुगान् ।
अभ्यगाद्भारतीं सेनां हतशेषां महारथः ॥ २४३ ॥

भीमस्तु समरे क्रुद्धः पुत्रं तव जनाधिप ।
सुदर्शनमदृश्यं तं शरैश्चक्रे हसन्निव ॥ २४४ ॥

ततोऽस्य प्रहसन् क्रुद्ध॰ शिरः कायादपाहरत् ।
क्षुरप्रेण सुतीक्ष्णेन स हतः प्रापतद्भुवि ॥ २४५ ॥

(अ. २८) तस्मिन्प्रवृत्ते सङ्ग्रामे गजवाजिनरक्षये।
शकुनिः सौबलो राजन् सहदेवं समभ्ययात् ॥ २४६ ॥

ततोऽस्यापततस्तूर्णं सहदेवः प्रतापवान्।
शरौघान् प्रेषयामास पतङ्गानिव शीघ्रगान् ॥ २४७ ॥

उलूकोऽपि महाराज भीमं विव्याध सप्तभिः।
सहदेवं च सप्तत्या परीप्सन् पितरं रणे ॥ २४८ ॥

ततोऽस्यापततः शूरः सहदेवः प्रतापवान्।
उलूकस्य महाराज भल्लेनापाहरच्छिरः ॥ २४९ ॥

पुत्रं तु निहतं दृष्ट्वा शकुनिस्तत्र भारत।
सहदेवं समासाद्य त्रिभिर्विव्याध सायकैः ॥ २५० ॥

स्वमंशमवशिष्टं तं संस्मृत्य शकुनिं नृप।
रथेन काञ्चनाङ्गेन सहदेवः समभ्ययात् ॥ २५१ ॥

अभिगम्य सुदुर्धर्षः सहदेवो युधां पतिः।
विकृष्य बलवच्चापं क्रोधेन प्रज्वलन्निव ॥ २५२ ॥

शकुनिं दशभिर्विद्ध्वा चतुर्भिश्चास्य वाजिनः।
छत्रं ध्वजं धनुश्चास्य छित्त्वा सिंह इवानदत् ॥ २५३ ॥

तस्याशुकारी सुसमाहितेन
सुवर्णपुङ्खेन दृढायसेन।
भल्लेन सर्वावरणातिगेन
शिरः शरीरात् प्रममाथ भूयः ॥ २५४ ॥

ततो रथाच्छकुनिं पातयित्वा
मुदान्विता भारत पाण्डवेयाः।
शङ्खान् प्रदध्मुः समरेऽतिहृष्टाः
सकेशवाः सैनिकान् हर्षयन्तः ॥ २५५ ॥

## दुर्योधनस्य ह्रदप्रवेशः

(अ. २९) ततो दुर्योधनो राजा दृष्ट्वा स्वबलसङ्क्षयम्।
हतशेषान् समानीय क्रुद्धो रथगणान् बहून् ॥ २५६ ॥

कुञ्जरांश्च हयांश्चैव पादातांश्च समन्ततः।
उवाच सहितान्सर्वान् धार्तराष्ट्र इदं वचः ॥ २५७ ॥

समासाद्य रणे सर्वान् पाण्डवान् ससुहृद्गणान्।
पाञ्चाल्यं चापि सबलं हत्वा शीघ्रं न्यवर्तत ॥ २५८ ॥

तस्य ते शिरसा गृह्य वचनं युद्धदुर्मदाः।
अभ्युद्ययू रणे पार्थांस्तव पुत्रस्य शासनात् ॥ २५९ ॥

ततस्तु पाण्डवानीकान्निःसृत्य बहवो जनाः।
अभ्यघ्नंस्तावकान् युद्धे मुहूर्तादिव भारत ॥ २६० ॥

ततो निःशेषमभवत्तत्सैन्यं तव भारत ॥ २६१ ॥

धृत०- निहते मामके सैन्ये निःशेषे शिबिरे कृते।
पाण्डवानां बले सूत किं नु शेषमभूत्तदा ॥ २६२ ॥

सञ्ज०- रथानां द्वे सहस्रे तु सप्त नागशतानि च।
पञ्च चाश्वसहस्राणि पत्तीनां च शतं शताः।
एतच्छेषमभूद्राजन् पाण्डवानां महद्बलम् ॥ २६३ ॥

एकाकी भरतश्रेष्ठ ततो दुर्योधनो नृपः।
हतं स्वहयमुत्सृज्य प्राङ्मुखः प्राद्रवद्भयात् ॥ २६४ ॥

एकादशचमूभर्ता पुत्रो दुर्योधनस्तव।
गदामादाय तेजस्वी पदातिः प्रस्थितो ह्रदम् ॥ २६५ ॥

धृष्टद्युम्नस्तु मां दृष्ट्वा हसन् सात्यकिमब्रवीत्।
किमनेन गृहीतेन नानेनार्थोऽस्ति जीवता ॥ २६६ ॥

धृष्टद्युम्नवचः श्रुत्वा शिनेर्नप्ता महारथः।
उद्यम्य निशितं खड्गं हन्तुं मामुद्यतस्तदा ॥ २६७ ॥

तमागम्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ।
मुच्यतां सञ्जयो जीवन्न हन्तव्यः कथञ्चन ॥ २६८ ॥

द्वैपायनवचः श्रुत्वा शिनेर्नप्ता कृताञ्जलिः ।
ततो मामब्रवीन्मुक्त्वा स्वस्ति सञ्जय साधय ॥ २६९ ॥

अनुज्ञातस्त्वहं तेन न्यस्तवर्मा निरायुधः ।
प्रातिष्ठं येन नगरं सायाह्ने रुधिरोक्षितः ॥ २७० ॥

क्रोशमात्रमपक्रान्तं गदापाणिमवस्थितम् ।
एकं दुर्योधनं राजन्नपश्यं भृशविक्षतम् ॥ २७१ ॥

स तु मामश्रुपूर्णाक्षो नाशक्नोदभिवीक्षितुम् ।
उपप्रैक्षत मां दृष्ट्वा तथा दीनमवस्थितम् ॥ २७२ ॥

तं चाहमपि शोचन्तं दृष्ट्वैकाकिनमाहवे ।
मुहूर्तं नाशकं वक्तुमतिदुःखपरिप्लुतः ॥ २७३ ॥

स दीर्घमिव निःश्वस्य प्रत्यवेक्ष्य पुनः पुनः ।
असौ मां पाणिना स्पृष्ट्वा पुत्रस्ते पर्यभाषत ॥ २७४ ॥

ब्रूयाः सञ्जय राजानं प्रज्ञाचक्षुषमीश्वरम् ।
दुर्योधनस्तव सुतः प्रविष्टो ह्रदमित्युत ॥ २७५ ॥

सुहृद्भिस्तादृशैर्हीनः पुत्रैर्भ्रातृभिरेव च ।
पाण्डवैश्च हृते राज्ये को नु जीवेत मादृशः ॥ २७६ ॥

आचक्षीथाः सर्वमिदं मां च मुक्तं महाहवात् ।
अस्मिंस्तोयह्रदे गुप्तं जीवन्तं भृशविक्षतम् ॥ २७७ ॥

एवमुक्त्वा महाराज प्राविशत्तं महाह्रदम् ।
अस्तम्भयत तोयं च मायया मनुजाधिपः ॥ २७८ ॥

तस्मिन् ह्रदं प्रविष्टे तु त्रीन् रथान् श्रान्तवाहनान् ।
अपश्यं सहितानेकस्त देशं समुपेयुषः ॥ २७९ ॥

कृपं शारद्वतं वीरं द्रौणिं च रथिनां वरम् ।
भोजं च कृतवर्माणं सहिताञ्शरविक्षतान् ॥ २८० ॥

ते सर्वे मामभिप्रेक्ष्य तूर्णमश्वाननोदयन्।
उपयाय तु मामूचुर्दिष्ट्या जीवसि सञ्जय ॥ २८१ ॥

अपृच्छंश्चैव मां सर्वे पुत्रं तव जनाधिपम्।
कच्चिद्दुर्योधनो राजा स नो जीवति सञ्जय ॥ २८२ ॥

आख्यातवानहं तेभ्यस्तदा कुशलिनं नृपम्।
तच्चैव सर्वमाचक्षं यन्मां दुर्योधनोऽब्रवीत् ॥ २८३ ॥

ह्रदं चैवाहमाचक्षं यं प्रविष्टो नराधिपः ॥ २८४ ॥
ते तु तत्र चिरं कालं विलप्य च महारथाः।
प्राद्रवन् रथिनां श्रेष्ठा दृष्ट्वा पाण्डुसुतान् रणे ॥ २८५ ॥

ते तु मां रथमारोप्य कृपस्य सुपरिष्कृतम्।
सेनानिवेशमाजग्मुर्हतशेषास्त्रयो रथा ॥ २८६ ॥

तत्र गुल्माः परित्रस्ताः सूर्ये चास्तमिते सति।
सर्वे विचुक्रुशुः श्रुत्वा पुत्राणां तव संक्षयम् ॥ २८७ ॥

ततो वृद्धा महाराज योषितां रक्षिणो नराः।
राजदारानुपादाय प्रययुर्नगरं प्रति ॥ २८८ ॥

ततस्ता योषितो राजन् रुदत्यो वै मुहुर्मुहुः।
कुरर्य इव शब्देन नादयन्त्यो महीतलम् ॥ २८९ ॥

आजघ्नुः करजैश्चापि पाणिभिश्च शिरांस्युत।
लुलुचुश्च तदा केशान् क्रोशन्त्यस्तत्र तत्र ह ॥ २९० ॥

हाहाकारविनादिन्यो विनिघ्नन्त्य उरांसि च।
शोचन्त्यस्तत्र रुरुदुः क्रन्दमाना विशां पते ॥ २९१ ॥

ततो दुर्योधनामात्याः साश्रुकण्ठा भृशातुराः।
राजदारानुपादाय प्रययुर्नगरं प्रति ॥ २९२ ॥

आगोपालाविपालेभ्यो द्रवन्तो नगरं प्रति।
ययुर्मनुष्याः संभ्रान्ता भीमसेनभयार्दिताः ॥ २९३ ॥

तस्मिंस्तथा वर्तमाने विद्रवे भृशदारुणे।
युयुत्सु. शोकसम्मूढ. प्राप्तकालमचिन्तयत् ॥ २९४ ॥
दुर्योधनस्य सचिवा ये केचिदवशेषिताः।
राजदारानुपादाय प्रययुर्नगरं प्रति ॥ २९५ ॥
प्राप्तकालमहं मन्ये प्रवेशं तैः सह प्रभो।
युधिष्ठिरमनुज्ञाय भीमसेनं तथैव च ॥ २९६ ॥
एतमर्थं महाबाहुरुभयो स न्यवेदयत्।
तस्य प्रीतोऽभवद्राजा नित्यं करुणवेदिता ॥ २९७ ॥
परिष्वज्य महाबाहुर्वैश्यापुत्रं व्यसर्जयत् ॥ २९८ ॥
तत. स रथमास्थाय द्रुतमश्वानचोदयत्।
संवाहयितवांश्चापि राजदारान् पुरं प्रति ॥ २९९ ॥

## गदापर्व

### कृपादित्रयाणां पाण्डवानां च ह्रदसमीपे गमनम्

(अ. ३०) सम्प्राद्रवत्सु दारेषु क्षत्रियाणां महात्मनाम्।
विद्रुते शिबिरे शून्ये भृशोद्विग्नास्त्रयो रथाः।
स्थानं नारोचयंस्तत्र ततस्ते ह्रदमभ्ययु. ॥ ३०० ॥
युधिष्ठिरोऽपि धर्मात्मा भ्रातृभि. सहितो रणे।
हृष्टः पर्यचरद्राजन् दुर्योधनवधेप्सया ॥ ३०१ ॥
मार्गमाणास्तु सङ्क्रुद्धास्तव पुत्र जयैषिण.।
यत्नतोऽन्वेषमाणास्ते नैवापश्यञ्जनाधिपम् ॥ ३०२ ॥
यदा तु पाण्डवाः सर्वे सुपरिश्रान्तवाहनाः।
तत. स्वशिबिरं प्राप्य व्यतिष्ठन्त ससैनिकाः ॥ ३०३ ॥
तत कृपश्च द्रौणिश्च कृतवर्मा च सात्वतः।
सन्निविष्टेषु पार्थेषु प्रयातास्तं ह्रदं शनै. ॥ ३०४ ॥
ते तं ह्रदं समासाद्य यत्र शेते जनाधिपः।
अभ्यभाषन्त दुर्धर्षं राजानं सुप्तमम्भसि ॥ ३०५ ॥

राजन्नुत्तिष्ठ युद्धयस्व सहास्माभिर्युधिष्ठिरम्।
जित्वा वा पृथिवीं भुङ्क्ष्व हतो वा स्वर्गमाप्नुहि ॥ ३०६ ॥

तेषामपि बलं सर्वं हतं दुर्योधन त्वया।
प्रतिविद्धाश्च भूयिष्ठं ये शिष्टास्तत्र सैनिकाः ॥ ३०७ ॥

न ते वेग विषहितुं शक्तास्तव विशां पते।
अस्माभिरपि गुप्तस्य तस्मादुत्तिष्ठ भारत ॥ ३०८ ॥

दुर्यो०- दिष्ट्या पश्यामि वो मुक्तानीदृशात्पुरुषक्षयात्।
विजेष्यामो वयं सर्वे विश्रान्ता विगतक्लमाः ॥ ३०९ ॥

भवन्तश्च परिश्रान्ता वयं च भृशविक्षताः।
उदीर्णं च बलं तेषां तेन युद्धं न रोचये ॥ ३१० ॥

विश्राम्यैकां निशामद्य भवद्भिः सहितो रणे।
प्रतियोत्स्याम्यहं शत्रून् श्वो न मेऽस्त्यत्र संशयः ॥ ३११ ॥

तेषु सम्भाषमाणेषु व्याधास्त देशमाययुः।
मांसभारपरिश्रान्ताः पानीयार्थं यदृच्छया ॥ ३१२ ॥

ते हि नित्यं महाराज भीमसेनस्य लुब्धकाः।
मांसभारानुपाजह्रुर्भक्त्या परमया विभो ॥ ३१३ ॥

तेषां श्रुत्वा च संवादं राज्ञश्च सलिले सतः।
व्याधाऽभ्यजानन् राजेन्द्र सलिलस्थं सुयोधनम् ॥ ३१४ ॥

ते पूर्वं पाण्डुपुत्रेण पृष्टा ह्यासन् सुतं तव।
यदृच्छोपगतास्तत्र राजान परिमार्गता ॥ ३१५ ॥

पाण्डवापि महाराज लब्धलक्षाः प्रहारिणः।
अपश्यमानाः समरे दुर्योधनमवस्थितम् ॥ ३१६ ॥

निकृतेस्तस्य पापस्य ते पारं गमनेप्सव ।
चारान् सम्प्रेषयामासुः समन्तात्तद्रणाजिरे ॥ ३१७ ॥

आगम्य तु ततः सर्वे नष्टं दुर्योधनं नृपम्।
न्यवेदयन्त सहिता धर्मराजस्य सैनिकाः ॥ ३१८ ॥

तेषां तद्वचनं श्रुत्वा चाराणां भरतर्षभ।
चिन्तामभ्यगमत्तीव्रां निशश्वास च पार्थिवः ॥ ३१९ ॥
अथ स्थितानां पाण्डूनां दीनानां भरतर्षभ।
तस्माद्देशादपक्रम्य त्वरिता लुब्धका विभो ॥ ३२० ॥
आजग्मुः शिबिरं हृष्टा दृष्ट्वा दुर्योधनं नृपम्।
वार्यमाणा प्रविष्टाश्च भीमसेनस्य पश्यतः ॥ ३२१ ॥
ते तु पाण्डवमासाद्य भीमसेनं महाबलम्।
तस्मै तत् सर्वमाचख्युर्यद्वृत्तं यच्च वै श्रुतम् ॥ ३२२ ॥
ततो वृकोदरो राजन् दत्वा तेषां धनं बहु।
धर्मराजाय तत् सर्वमाचचक्षे परन्तपः ॥ ३२३ ॥
असौ दुर्योधनो राजन् विज्ञातो मम लुब्धकैः।
संस्तभ्य सलिलं शेते यस्यार्थे परितप्यसे ॥ ३२४ ॥
तद्वचो भीमसेनस्य प्रियं श्रुत्वा विशां पते।
अजातशत्रुः कौन्तेयो हृष्टोऽभूत् सह सोदरैः ॥ ३२५ ॥
तं च श्रुत्वा महेष्वासं प्रविष्टं सलिलह्रदे।
क्षिप्रमेव ततोऽगच्छन् पुरस्कृत्य जनार्दनम् ॥ ३२६ ॥
यौधिष्ठिरस्य सैन्यस्य श्रुत्वा शब्दं महारथाः।
कृतवर्मा कृपो द्रौणी राजानमिदमब्रुवन् ॥ ३२७ ॥
इमे ह्यायान्ति संहृष्टाः पाण्डवा जितकाशिनः।
अपयास्यामहे तावदनुजानातु नो भवान् ॥ ३२८ ॥
दुर्योधनस्तु तच्छ्रुत्वा तेषां तत्र तरस्विनाम्।
तथेत्युक्त्वा ह्रदं तं वै माययाऽस्तम्भयत्प्रभो ॥ ३२९ ॥
ते त्वनुज्ञाप्य राजानं भृशं शोकपरायणाः।
जग्मुर्दूरे महाराज कृपप्रभृतयो रथाः ॥ ३३० ॥
ते गत्वा दूरमध्वानं न्यग्रोधं प्रेक्ष्य मारिष।
तत्रासाञ्चक्रिरे राजन् कृपप्रभृतयो रथाः ॥ ३३१ ॥

## दुर्योधन-युधिष्ठिर-संवादः

(अ. ३१) ततस्तेष्वपयातेषु रथेषु त्रिषु पाण्डवाः।
ते ह्रदं प्रत्यपद्यन्त यत्र दुर्योधनोऽभवत्॥ ३३२॥

आसाद्य च कुरुश्रेष्ठ तदा द्वैपायनं ह्रदम्।
वासुदेवमिदं वाक्यमब्रवीत् कुरुनन्दनः॥ ३३३॥

पश्येमां धार्तराष्ट्रेण मायामप्सु प्रयोजिताम्।
विष्टभ्य सलिलं शेते नास्य मानुषतो भयम्॥ ३३४॥

वासु०- मायाविन इमां मायां मायया जहि भारत।
मायावी मायया वध्यः सत्यमेतद्युधिष्ठिर॥ ३३५॥

क्रियाभ्युपायैर्बहुभिर्मायामप्सु प्रयोज्य च।
जहि त्वं भरतश्रेष्ठ मायात्मानं सुयोधनम्॥ ३३६॥

क्रियाभ्युपायैरिन्द्रेण निहता दैत्यदानवाः।
क्रिया बलवती राजन् नान्यत्किञ्चिद्युधिष्ठिर॥ ३३७॥

इत्युक्तो वासुदेवेन पाण्डवः संशितव्रतः।
अभ्यभाषत कौन्तेयः प्रहसन्निव भारत॥ ३३८॥

सुयोधन किमर्थोऽयमारम्भोऽप्सु कृतस्त्वया।
सर्वं क्षत्रं घातयित्वा स्वकुलं च विशां पते॥ ३३९॥

स ते दर्पो नरश्रेष्ठ स च मानः क्व ते गतः।
यस्त्वं संस्तभ्य सलिलं भीतो राजन् व्यवस्थितः॥ ३४०॥

यत्तु कर्णमुपाश्रित्य शकुनिं चापि सौबलम्।
अमर्त्य इव सम्मोहात्त्वमात्मानं न बुद्धवान्॥ ३४१॥

तत् पापं सुमहत्कृत्वा प्रतियुद्ध्यस्व भारत॥ ३४२॥

कथं हि त्वद्विधो मोहाद्रोचयेत पलायनम्॥ ३४३॥

दुर्यो०- न प्राणहेतोर्न भयान्न विषादाद्विशां पते।
इदमम्भः प्रविष्टोऽस्मि श्रमात्त्विदमनुष्ठितम्॥ ३४४॥

त्वं चाश्वसिहि कौन्तेय ये चाप्यनुगतास्तव ।
अहमुत्थाय व सर्वान् प्रतियोत्स्यामि संयुगे ॥ ३४५ ॥

युधि०- आश्वस्ता एव सर्वे स्म चिरं त्वां मृगयामहे ।
तदिदानीं समुत्तिष्ठ युध्यस्वेह सुयोधन ॥ ३४६ ॥

हत्वा वा समरे पार्थान् स्फीतं राज्यमवाप्नुहि ।
निहतो वा रणेऽस्माभिर्वीरलोकमवाप्स्यसि ॥ ३४७ ॥

दुर्यो०- यदर्थं राज्यमिच्छामि कुरूणां कुरुनन्दन ।
त इमे निहता॰ सर्वे भ्रातरो मे जनेश्वर ॥ ३४८ ॥

क्षीणरत्नां च पृथिवीं हतक्षत्रियपुङ्गवाम् ।
न ह्युत्सहाम्यहं भोक्तुं विधवामिव योषितम् ॥ ३४९ ॥

अहं वन गमिष्यामि ह्यजिनै॰ प्रतिवासित॰ ।
रतिर्हि नास्ति मे राज्ये हतपक्षस्य भारत ॥ ३५० ॥

हतबान्धवभूयिष्ठा हताश्वा हतकुञ्जरा ।
एषा ते पृथिवी राजन् भुङ्क्ष्वैनां विगतज्वर ॥ ३५१ ॥

युधि०- अधर्मेण न गृह्णीयां त्वया दत्तां महीमिमाम् ।
न हि धर्म स्मृतो राजन् क्षत्रियस्य प्रतिग्रहः ॥ ३५२ ॥

त्वया दत्तां न चेच्छेय पृथिवीमखिलामहम् ।
त्वां तु युद्धे विनिर्जित्य भोक्तास्मि वसुधामिमाम् ॥ ३५३ ॥

अनीश्वरश्च पृथिवीं कथं त्वं दातुमिच्छसि ॥ ३५४ ॥

धर्मतो याचमानानां प्रशमार्थं कुलस्य न ।
सूच्यग्र नात्यजः पूर्वं स कथ त्यजसि क्षितिम् ॥ ३५५ ॥

आवयोर्जीवतो राजन् मयि च त्वयि च ध्रुवम् ।
संशयः सर्वभूतानां विजये नौ भविष्यति ॥ ३५६ ॥

जीवित तव दुष्प्रज्ञ मयि सम्प्रति वर्तते ।
जीवयेयमहं कामं न तु त्वं जीवितुं क्षमः ॥ ३५७ ॥

दहने हि कृतो यत्नस्त्वयाऽस्मासु विशेषत ।
आशीविषैर्विषैश्चापि जले चापि प्रवेशनै ।
त्वया विनिकृता राजन् राज्यस्य हरणेन च ॥ ३५८ ॥

अप्रियाणा च वचनैर्द्रौपद्या· कर्षणेन च ।
एतस्मात् कारणात्पाप जीवितं ते न विद्यते ॥ ३५९ ॥

(अ. ३२) तर्ज्यमानस्तदा राजन्नुदकस्थस्तवात्मजः ।
सञ्जय०–मनश्चकार युद्धाय राजानं चाभ्यभाषत ॥ ३६० ॥

यूयं ससुहृदः पार्थाः सर्वे सरथवाहनाः ।
अहमेकः परिद्यूनो विरथो हतवाहनः ॥ ३६१ ॥

एकैकेन तु मां यूयं योधयध्वं युधिष्ठिर ।
न ह्येको बहुभिर्वीरैर्न्याय्यो योधयितुं युधि ॥ ३६२ ॥

धर्ममूला सतां कीर्तिर्मनुष्याणां जनाधिप ।
धर्मं चैवेह कीर्तिं च पालयन् प्रब्रवीम्यहम् ॥ ३६३ ॥

युधि०– दिष्ट्या त्वमपि जानीषे क्षत्रधर्मं सुयोधन ।
दिष्ट्या ते वर्तते बुद्धिर्युद्धायैव महाभुज ॥ ३६४ ॥

एक एकेन सङ्गम्य यत्ते सम्मतमायुधम् ।
तत्त्वमादाय युध्यस्व प्रेक्षकास्ते वयं स्थिताः ॥ ३६५ ॥

दुर्यो०– हन्तैकं भवतामेकः शक्यं मां योऽभिमन्यते ।
पदातिर्गदया सङ्ख्ये स युध्यतु मया सह ॥ ३६६ ॥

युधि०– पुरुषो भव गान्धारे युध्यस्व सुसमाहितः ।
अद्य ते जीवितं नास्ति यदीन्द्रोऽपि तवाश्रय ॥ ३६७ ॥

तथासौ वाक्प्रतोदेन तुद्यमानः पुनः पुनः ।
वचो न ममृषे राजन्नुत्तमाश्वः कशामिव ॥ ३६८ ॥

सङ्क्षोभ्य सलिलं वेगाद्गदामादाय वीर्यवान् ।
अन्तर्जलात्समुत्तस्थौ नागेन्द्र इव निःश्वसन् ॥ ३६९ ॥

तमुत्तीर्णं तु सम्प्रेक्ष्य समहृष्यन्त सर्वश ।
पञ्चालाः पाण्डवेयाश्च तेऽन्योन्यस्य तलान् ददुः ॥ ३७० ॥
अवहासं तु तं मत्वा पुत्रो दुर्योधनस्तव ।
प्रत्युवाच ततस्तान् वै पाण्डवान् सहकेशवान् ॥ ३७१ ॥
अस्यावहासस्य फलं प्रतिभोक्ष्यथ पाण्डवाः ।
गमिष्यथ हता सद्य सपञ्चाला यमक्षयम् ॥ ३७२ ॥
एकैकेन च मां यूयमासीदत युधिष्ठिर ।
न ह्येको बहुभिर्न्याय्यो वीरो योधयितुं युधि ॥ ३७३ ॥
युधि०- मा भूदियं तव प्रज्ञा कथमेवं सुयोधन ।
यदाऽभिमन्यु बहवो जघ्नुर्युधि महारथा ॥ ३७४ ॥
सर्वो विमृशते जन्तु कृच्छ्रस्थो धर्मदर्शनम् ।
पदस्थः पिहितं द्वारं परलोकस्य पश्यति ॥ ३७५ ॥
आमुञ्च कवचं वीर मूर्धजान् यमयस्व च ।
यच्चान्यदपि ते नास्ति तदप्यादत्स्व भारत ॥ ३७६ ॥
इममेकं च ते कामं वीर भूयो ददाम्यहम् ।
पञ्चानां पाण्डवेयानां येन त्वं योद्धुमिच्छसि ।
तं हत्वा वै भवान् राजा हतो वा स्वर्गमाप्नुहि ॥ ३७७ ॥
ऋते च जीविताद्वीर युद्धे किं कुर्म ते प्रियम् ॥ ३७८ ॥
ततस्तव सुतो राजन् वर्म जग्राह काञ्चनम् ।
विचित्रं च शिरस्त्राणं जाम्बूनदपरिष्कृतम् ॥ ३७९ ॥
सन्नद्ध सगदो राजन् सज्ज· सङ्ग्राममूर्धनि ।
अब्रवीत् पाण्डवान् सर्वान्पुत्रो दुर्योधनस्तव ॥ ३८० ॥
भ्रातॄणां भवतामेको युध्यता गदया मया ।
अहमद्य गमिष्यामि वैरस्यान्तं सुदुर्गमम् ॥ ३८१ ॥
गदायुद्धे न मे कश्चित् सदृशोऽस्तीति चिन्तये ।
गदया वो हनिष्यामि सर्वानेव समागतान् ॥ ३८२ ॥

(अ. ३३) एवं दुर्योधने राजन् गर्जमाने मुहुर्मुहुः।
युधिष्ठिरस्य सङ्क्रुद्धो वासुदेवोऽब्रवीदिदम् ॥ ३८३ ॥

यदि नाम ह्ययं युद्धे वरयेत्त्वां युधिष्ठिर।
अर्जुनं नकुलं चैव सहदेवमथापि वा ॥ ३८४ ॥

किमिदं साहसं राजंस्त्वया व्याहृतमीदृशम्।
एकमेव निहत्याजौ भव राजा कुरुष्विति ॥ ३८५ ॥

नान्यमस्यानुपश्यामि प्रतियोद्धारमाहवे।
ऋते वृकोदरात्पार्थात्स च नातिकृतश्रमः ॥ ३८६ ॥

बली भीमः समर्थश्च कृती राजा सुयोधन ।
बलवान् वा कृती वेति कृती राजन् विशिष्यते ॥ ३८७ ॥

सोऽयं राजंस्त्वया शत्रु समे पथि निवेशितः।
न्यस्तश्चात्मा सुविषमे कृच्छ्रमापादिता वयम् ॥ ३८८ ॥

को नु सर्वान् विनिर्जित्य शत्रूनेकेन वैरिणा।
कृच्छ्रप्राप्तेन च तथा हारयेद्राज्यमागतम् ॥ ३८९ ॥

न त्वं भीमो न नकुलः सहदेवोऽथ फाल्गुनः।
जेतुं न्यायेन शक्तो वै कृती राजा सुयोधन ॥ ३९० ॥

नूनं न राज्यभागेषा पाण्डोः कुन्त्याश्च सन्ततिः।
अत्यन्तवनवासाय सृष्टा भैक्ष्याय वा पुनः ॥ ३९१ ॥

भीम०- मधुसूदन मा कार्षीर्विषादं यदुनन्दन।
अद्य पारं गमिष्यामि वैरस्य भृशदुर्गमम् ॥ ३९२ ॥

अहं सुयोधनं सङ्ख्ये हनिष्यामि न संशयः।
विजयो वै ध्रुवः कृष्ण धर्मराजस्य दृश्यते ॥ ३९३ ॥

अध्यर्धेन गुणेनेयं गदा गुरुतरी मम।
न तथा धार्तराष्ट्रस्य मा कार्षीर्माधव व्यथाम् ॥ ३९४ ॥

अहमेनं हि गदया संयुगे योद्धुमुत्सहे ॥ ३९५ ॥

तथा सम्भाषमाणं तु वासुदेवो वृकोदरम्।
हृष्टः सम्पूजयामास वचनं चेदमब्रवीत् ॥ ३९६ ॥
त्वमस्य सक्थिनी भङ्क्त्वा प्रतिज्ञा पालयिष्यसि।
यत्नेन तु सदा पार्थ योद्धव्यो धृतराष्ट्रजः ॥ ३९७ ॥
ततो भीमबलो भीमो युधिष्ठिरमथाब्रवीत्।
अद्य क्रोधं विमोक्ष्यामि निहितं हृदये भृशम्।
सुयोधने धार्तराष्ट्रे खाण्डवेऽग्निमिवार्जुनः ॥ ३९८ ॥
अद्य कीर्तिमयीं मालां प्रतिमोक्ष्ये तवानघ।
प्राणाञ्श्रियं च राज्यं च मोक्ष्यतेऽद्य सुयोधनः ॥ ३९९ ॥
राजा च धृतराष्ट्रोऽद्य श्रुत्वा पुत्रं मया हतम्।
स्मरिष्यत्यशुभं कर्म यत्तच्छकुनिबुद्धिजम् ॥ ४०० ॥
इत्युक्त्वा भरतश्रेष्ठो गदामुद्यम्य वीर्यवान्।
उदतिष्ठत युद्धाय शक्रो वृत्रमिवाह्वयन् ॥ ४०१ ॥
तदाह्वानममृष्यन् वै तव पुत्रोऽतिवीर्यवान्।
प्रत्युपस्थित एवाशु मत्तो मत्तमिव द्विपम् ॥ ४०२ ॥

## बलरामागमनम्, गदायुद्धम्, दुर्योधनवधः

(अ. ३४) ततस्तालध्वजो रामस्तयोर्युद्ध उपस्थिते।
श्रुत्वा तच्छिष्ययो राजन्नाजगाम हलायुध. ॥ ४०३ ॥
तं दृष्ट्वा परमप्रीताः पाण्डवाः सहकेशवाः।
उपगम्योपसङ्गृह्य विधिवत् प्रत्यपूजयन् ॥ ४०४ ॥
अब्रवीच्च तदा रामो दृष्ट्वा कृष्णं सपाण्डवम्।
चत्वारिंशदहान्यद्य द्वे च मे निःसृतस्य वै ॥ ४०५ ॥
पुष्येण सम्प्रयातोऽस्मि श्रवणे पुनरागतः।
शिष्ययोर्वै गदायुद्धं द्रष्टुकामोऽस्मि माधव ॥ ४०६ ॥
(अ. ५५) मया श्रुतं कथयतामृषीणां राजसत्तम।
कुरुक्षेत्रं परं पुण्यं पावनं स्वर्ग्यमेव च ॥ ४०७ ॥

तत्र वै योत्स्यमाना ये देहं त्यक्ष्यन्ति मानवाः।
तेषां स्वर्गो ध्रुवो वासः शक्रेण सह मारिष।
तस्मात् समन्तपञ्चकमितो याम द्रुतं नृप ॥ ४०८ ॥
तथेत्युक्त्वा महाराज कुन्तीपुत्रो युधिष्ठिरः।
समन्तपञ्चकं वीरः प्रायादभिमुखः प्रभुः ॥ ४०९ ॥
ततस्ते तु कुरुक्षेत्रं प्राप्ता नरवरोत्तमाः।
प्रतीच्यभिमुखं देशं यथोद्दिष्टं सुतेन ते ॥ ४१० ॥
दक्षिणेन सरस्वत्याः स्वयनं तीर्थमुत्तमम्।
तस्मिन्देशे त्वनिरिणे ते तु युद्धमरोचयन् ॥ ४११ ॥
ततः समुपविष्टं तत् सुमहद्राजमण्डलम्।
विराजमानं ददृशे दिवीवादित्यमण्डलम् ॥ ४१२ ॥
तेषां मध्ये महाबाहुः श्रीमान् केशवपूर्वजः।
उपविष्टो महाराज पूज्यमानः समन्तत ॥ ४१३ ॥
शुशुभे राजमध्यस्थो नीलवासाः सितप्रभः।
नक्षत्रैरिव सम्पूर्णो वृतो निशि निशाकरः ॥ ४१४ ॥
तौ तथा तु महाराज गदाहस्तौ सुदुःसहौ।
अन्योऽन्यं वाग्भिरुग्राभिस्तक्षमाणौ व्यवस्थितौ ॥ ४१५ ॥
अप्रियाणि ततोऽन्योन्यमुक्त्वा तौ कुरुसत्तमौ।
उदीक्षन्तौ स्थितौ तत्र वृत्रशक्रौ यथाऽऽहवे ॥ ४१६ ॥
ततः संपूजितः सर्वैः संप्रहृष्टतनूरुहः।
अभिदुद्राव वेगेन धार्तराष्ट्रं वृकोदरः ॥ ४१७ ॥
(अ. ५७) ततो दुर्योधनो दृष्ट्वा भीमसेनं तथागतम्।
प्रत्युद्ययावदीनात्मा वेगेन महता नदन् ॥ ४१८ ॥
समापेततुरन्योन्यं शृङ्गिणौ वृषभाविव।
महानिर्घातघोषश्च प्रहाराणामजायत ॥ ४१९ ॥
प्रगृहीतगदौ दृष्ट्वा दुर्योधनवृकोदरौ।
संशयः सर्वभूतानां विजये समपद्यत ॥ ४२० ॥

तौ दर्शयन्तौ समरे युद्धक्रीडां समन्ततः।
गदाभ्यां सहसाऽन्योन्यमाजघ्नतुररिन्दमौ ॥ ४२१ ॥

परस्परं समासाद्य दंष्ट्राभ्यां द्विरदौ यथा।
अशोभेतां महाराज शोणितेन परिप्लुतौ ॥ ४२२ ॥

(अ. ५८) समुदीर्णं ततो दृष्ट्वा सङ्ग्रामं कुरुमुख्ययोः।
अथाब्रवीदर्जुनस्तु वासुदेवं यशस्विनम् ॥ ४२३ ॥

अनयोर्वीरयोर्युद्धे को ज्यायान् भवतो मतः।
कस्य वा को गुणो भूयानेतद्वद जनार्दन ॥ ४२४ ॥

वासु०– उपदेशोऽनयोस्तुल्यो भीमस्तु बलवत्तरः।
कृती यत्नपरस्त्वेष धार्तराष्ट्रो वृकोदरात् ॥ ४२५ ॥

भीमसेनस्तु धर्मेण युध्यमानो न जेष्यति।
अन्यायेन तु युध्यन् वै हन्यादेव सुयोधनम् ॥ ४२६ ॥

मायया निर्जिता देवैरसुरा इति नः श्रुतम्।
विरोचनस्तु शक्रेण मायया निर्जितः स वै ॥ ४२७ ॥

मायया चाक्षिपत्तेजो वृत्रस्य बलसूदनः।
तस्मान्मायामयं भीम आतिष्ठतु पराक्रमम् ॥ ४२८ ॥

प्रतिज्ञातं च भीमेन द्यूतकाले धनञ्जय।
ऊरू भेत्स्यामि ते सङ्ख्ये गदयेति सुयोधनम् ॥ ४२९ ॥

सोऽयं प्रतिज्ञां तां चापि पालयत्वरिकर्षण ।
मायाविनं तु राजानं माययैव निकृन्ततु ॥ ४३० ॥

सुयोधनः कृती वीर एकायनगतस्तथा ॥ ४३१ ॥

अपि चोशनसा गीतः श्रूयतेऽयं पुरातनः।
श्लोकस्तत्त्वार्थसहितस्तन्मे निगदतः शृणु ॥ ४३२ ॥

पुनरावर्तमानानां भग्नानां जीवितैषिणाम्।
भेतव्यमरिशेषाणामेकायनगता हि ते ॥ ४३३ ॥

साहसोत्पतितानां च निराशानां च जीविते।
न शक्यमग्रतः स्थातुं शक्रेणापि धनञ्जय ॥ ४३४ ॥
एवं चेन्न महाबाहुरन्यायेन हनिष्यति।
एष वः कौरवो राजा धार्तराष्ट्रो भविष्यति ॥ ४३५ ॥
धनञ्जयस्तु श्रुत्वैतत् केशवस्य महात्मनः।
प्रेक्षतो भीमसेनस्य सव्यमूरुमताडयत् ॥ ४३६ ॥
गृह्य संज्ञां ततो भीमो गदया व्यचरद्रणे।
मण्डलानि विचित्राणि यमकानीतराणि च ॥ ४३७ ॥
तथैव तव पुत्रोऽपि गदामार्गविशारदः।
व्यचरल्लघु चित्रं च भीमसेनजिघांसया ॥ ४३८ ॥
अन्योन्यं तौ जिघांसन्तौ प्रवीरौ पुरुषर्षभौ।
युयुधाते गरुत्मन्तौ यथा नागामिषैषिणौ ॥ ४३९ ॥
तस्मिंस्तदा सम्प्रहारे दारुणे सङ्कुले भृशम्।
उभावपि परिश्रान्तौ युध्यमानावरिन्दमौ ॥ ४४० ॥
ततो मुहूर्तमाश्वस्य दुर्योधनमुपस्थितम्।
वेगेनाभ्यपतद्राजन् भीमसेनः प्रतापवान् ॥ ४४१ ॥
तमापतन्तं संप्रेक्ष्य संरब्धममितौजसम्।
मोघमस्य प्रहारं तं चिकीर्षुर्भरतर्षभ ॥ ४४२ ॥
अवस्थाने मतिं कृत्वा पुत्रस्तव महामनाः।
इयेषोत्पतितुं राजंश्छलयिष्यन् वृकोदरम् ॥ ४४३ ॥
अबुद्ध्यद्भीमसेनस्तु राज्ञस्तस्य चिकीर्षितम् ॥ ४४४ ॥
अथास्य समभिद्रुत्य समुत्क्रुश्य च सिंहवत्।
सृत्या वञ्चयतो राजन् पुनरेवोत्पतिष्यतः।
ऊरुभ्यां प्राहिणोद्राजन् गदां वेगेन पाण्डवः ॥ ४४५ ॥
सा वज्रनिष्पेषसमा प्रहिता भीमकर्मणा।
ऊरू दुर्योधनस्याथ बभञ्ज प्रियदर्शनौ ॥ ४४६ ॥

स पपात नरव्याघ्रो वसुधामनुनादयन् ।
भग्नोरुर्भीमसेनेन पुत्रस्तव महीपते ॥ ४४७ ॥

(अ. ५९) ततो दुर्योधनं हत्वा भीमसेनः प्रतापवान् ।
पातित कौरवेन्द्रं तमुपगम्येदमब्रवीत् ॥ ४४८ ॥

गौर्गौरिति पुरा मन्द द्रौपदीमेकवाससम् ।
यत् सभायां हसन्नस्मांस्तदा वदसि दुर्मते ॥ ४४९ ॥

तस्यावहासस्य फलमद्य त्वं समवाप्नुहि ॥ ४५० ॥
एवमुक्त्वा स वामेन पदा मौलिमुपास्पृशत् ।
शिरश्च राजसिंहस्य पादेन समलोडयत् ॥ ४५१ ॥

तथैव क्रोधसंरक्तो भीमः परबलार्दन· ।
पुनरेवाब्रवीद्वाक्यं यत्तच्छृणु नराधिप ॥ ४५२ ॥

येऽस्मान् पुरोपनृत्यन्त मूढा गौरिति गौरिति ।
तान् वयं प्रतिनृत्याम· पुनर्गौरिति गौरिति ॥ ४५३ ॥

नास्माकं निकृतिर्वह्निर्नाक्षद्यूतं न वञ्चना ।
स्वबाहुबलमाश्रित्य प्रबाधामो वयं रिपून् ॥ ४५४ ॥

तव पुत्रं तथा हत्वा कत्थमानं वृकोदरम् ।
नृत्यमानं च बहुशो धर्मराजोऽब्रवीदिदम् ॥ ४५५ ॥

गतोऽसि वैरस्यानृण्यं प्रतिज्ञा पूरिता त्वया ।
शुभेनाथाशुभेनैव कर्मणा विरमाधुना ॥ ४५६ ॥

मा शिरोऽस्य पदा मर्दीर्मा धर्मस्तेऽतिगो भवेत् ।
राजा ज्ञातिर्हतश्चायं नैतन्न्याय्यं तवानघ ॥ ४५७ ॥

इत्युक्त्वा भीमसेनं तु साश्रुकण्ठो युधिष्ठिर· ।
उपसृत्याब्रवीद्दीनो दुर्योधनमरिन्दमम् ॥ ४५८ ॥

तात मन्युर्न ते कार्यो नात्मा शोच्यस्त्वया तथा ।
नूनं पूर्वकृतं कर्म सुघोरमनुभूयते ॥ ४५९ ॥

धात्रोपदिष्टं विषमं नूनं फलमसंस्कृतम् ।
यद्वयं त्वां जिघांसामस्त्वं चास्मान्कुरुसत्तम ॥ ४६० ॥

आत्मनो ह्यपराधेन महद्व्यसनमीदृशम् ।
प्राप्तवानसि यल्लोभान्मदाद्बाल्याच्च भारत ॥ ४६१ ॥

तवापराधादस्माभिर्भ्रातरस्ते निपातिताः ।
निहता ज्ञातयश्चापि दिष्टं मन्ये दुरत्ययम् ॥ ४६२ ॥

आत्मा न शोचनीयस्ते श्लाघ्यो मृत्युस्तवानघ ।
वयमेवाधुना शोच्याः सर्वावस्थासु कौरव ॥ ४६३ ॥

कृपणं वर्तयिष्यामस्तैर्हीना बन्धुभिः प्रियैः ।
भ्रातृणां चैव पुत्राणां तथा वै शोकविह्वलाः ॥ ४६४ ॥

### श्रीकृष्णकृतं बलरामसान्त्वनम्, कृष्ण-दुर्योधनसंवादः

(अ. ६०) शिरस्यभिहतं दृष्ट्वा भीमसेनेन ते सुतम् ।
सञ्जय०-रामः प्रहरतां श्रेष्ठश्चुक्रोध बलवद्बली ॥ ४६५ ॥

ततो मध्ये नरेन्द्राणामूर्ध्वबाहुर्हलायुधः ।
कुर्वन्नार्तस्वरं घोरं धिग् धिग् भीमेत्युवाच ह ॥ ४६६ ॥

अहो धिग्यदधो नाभेः प्रहृतं धर्मविग्रहे ।
नैतद्दृष्टं गदायुद्धे कृतवान्यद्वृकोदरः ॥ ४६७ ॥

न चैष पतितः कृष्ण केवलं मत्समोऽसमः ।
आश्रितस्य तु दौर्बल्यादाश्रयः परिभर्त्स्यते ॥ ४६८ ॥

ततो लाङ्गलमुद्यम्य भीममभ्यद्रवद्बली ॥ ४६९ ॥

तमुत्पतन्तं जग्राह केशवो विनयान्वित ।
बाहुभ्यां पीनवृत्ताभ्यां प्रयत्नाद्बलवद्बली ॥ ४७० ॥

उवाच चैनं संरब्धं शमयन्निव केशवः ॥ ४७१ ॥

आत्मवृद्धिर्मित्रवृद्धिर्मित्रमित्रोदयस्तथा ॥
विपरीतं द्विषत्स्वेतत् षड्विधा वृद्धिरात्मन ॥ ४७२ ॥

अस्माकं सहजं मित्रं पाण्डवा शुद्धपौरुषाः।
स्वकाः पितृष्वसुः पुत्रास्ते परैर्निकृता भृशम् ॥ ४७३ ॥

प्रतिज्ञापालनं धर्मः क्षत्रियस्येह वेद्म्यहम्।
सुयोधनस्य गदया भङ्क्तास्म्यूरू महाहवे।
इति पूर्वं प्रतिज्ञातं भीमेन हि सभातले ॥ ४७४ ॥

मैत्रेयेणाभिशप्तश्च पूर्वमेव महर्षिणा।
ऊरू ते भेत्स्यते भीमो गदयेति परन्तप ॥४७५ ॥

अतो दोषं न पश्यामि मा क्रुद्धयस्व प्रलम्बहन् ॥ ४७६ ॥

यौनः स्वैः सुखहार्दैश्च सम्बन्धः सह पाण्डवैः।
तेषां वृद्धया हि वृद्धिर्नो मा क्रुधः पुरुषर्षभ ॥ ४७७ ॥

वासुदेववचः श्रुत्वा सीरभृत् प्राह धर्मवित्।
धर्मः सुचरितः सद्भि स च द्वाभ्यां नियच्छति।
अर्थश्चात्यर्थलुब्धस्य कामश्चातिप्रसङ्गिणः ॥ ४७८ ॥

धर्मार्थौ धर्मकामौ च कामार्थौ चाप्यपीडयन्।
धर्मार्थकामान्योऽभ्येति सोऽत्यन्तं सुखमश्नुते ॥ ४७९ ॥

तदिदं व्याकुलं सर्वं कृतं धर्मस्य पीडनात्।
भीमसेनेन गोविन्द कामं त्वं तु यथाऽऽत्थ माम् ॥ ४८० ॥

कृष्ण०– अरोषणो हि धर्मात्मा सततं धर्मवत्सलः।
भवान् प्रख्यायते लोके तस्मात् संशाम्य मा क्रुधः ॥ ४८१ ॥

प्राप्तं कलियुगं विद्धि प्रतिज्ञां पाण्डवस्य च।
आनृण्यं यातु वैरस्य प्रतिज्ञायाश्च पाण्डवः ॥ ४८२ ॥

सञ्जय०–धर्मच्छलमपि श्रुत्वा केशवात् स विशां पते।
नैव प्रीतमना रामो वचनं प्राह संसदि ॥ ४८३ ॥

हत्वाऽधर्मेण राजानं धर्मात्मानं सुयोधनम्।
जिह्मयोधीति लोकेऽस्मिन् ख्यातिं यास्यति पाण्डव ॥४८४॥

दुर्योधनोऽपि धर्मात्मा गतिं यास्यति शाश्वतीम्।
ऋजुयोधी हतो राजा धार्तराष्ट्रो नराधिपः॥ ४८५ ॥
इत्युक्त्वा रथमास्थाय रौहिणेयः प्रतापवान्।
श्वेताभ्रशिखराकारः प्रययौ द्वारकां प्रति॥ ४८६ ॥

ततो युधिष्ठिरं दीनं चिन्तापरमधोमुखम्।
शोकोपहतसङ्कल्प वासुदेवोऽब्रवीदिदम्॥ ४८७ ॥

(अ. ६१) तदैवैष हतः पापो यदैव निरपत्रप।
लुब्धः पापसहायश्च सुहृदां शासनातिगः॥ ४८८ ॥
पाण्डुभ्यः प्रार्थ्यमानोऽपि पित्र्यमंश न दत्तवान्।
दिष्ट्या हतोऽयं पापात्मा सामात्यज्ञातिबान्धवः॥ ४८९ ॥

इति श्रुत्वा त्वधिक्षेपं कृष्णाद्दुर्योधनो नृपः।
अमर्षवशमापन्न उदतिष्ठद्विशां पते॥ ४९० ॥

स्फिग्देशेनोपविष्टः स दोर्भ्यां विष्टभ्य मेदिनीम्।
दृष्टिं भ्रूसङ्कटां कृत्वा वासुदेवे न्यपातयत्॥ ४९१ ॥

अर्धोन्नतशरीरस्य रूपमासीन्नृपस्य तु।
क्रुद्धस्याशीविषस्येव च्छिन्नपुच्छस्य भारत॥ ४९२ ॥

प्राणान्तकरिणीं घोरां वेदनामप्यचिन्तयन्।
दुर्योधनो वासुदेव वाग्भिरुग्राभिरार्दयत्॥ ४९३ ॥

कंसदासस्य दायाद न ते लज्जाऽस्त्यनेन वै।
अधर्मेण गदायुद्धे यदहं विनिपातितः।
ऊरू भिन्धीति भीमस्य स्मृतिं मिथ्या प्रयच्छता॥ ४९४ ॥
किं न विज्ञातमेतन्मे यदर्जुनमवोचथाः॥ ४९५ ॥

घातयित्वा महीपालानृजुयुद्धान् सहस्रशः।
जिह्मैरुपायैर्बहुभिर्न ते लज्जा न ते घृणा॥ ४९६ ॥

यदि मां चापि कर्ण च भीष्मद्रोणौ च संयुतौ।
ऋजुना प्रतियुद्ध्येथा न ते स्याद्विजयो ध्रुवम्॥ ४९७ ॥

वासु०- हतस्त्वमसि गान्धारे सभ्रातृसुतबान्धवः ।
सगणः ससुहृच्चैव पापं मार्गमनुष्ठितः ॥ ४९८ ॥
तवैव दुष्कृतैर्वीरौ भीष्मद्रोणौ निपातितौ ।
कर्णश्च निहतः सङ्ख्ये तव शीलानुवर्तकः ॥ ४९९ ॥
याच्यमान मया मूढ पित्र्यमंशं न दित्ससि ।
पाण्डवेभ्यः स्वराज्यं च लोभाच्छकुनिनिश्चयात् ॥ ५०० ॥
विषं ते भीमसेनाय दत्तं सर्वे च पाण्डवा ।
प्रदीपिता जतुगृहे मात्रा सह सुदुर्मते ॥ ५०१ ॥
सभायां याज्ञसेनी च कृष्टा द्यूते रजस्वला ।
तदैव तावद्दुष्टात्मन् वध्यस्त्वं निरपत्रप ॥ ५०२ ॥
अभिमन्युश्च यद्बाल एको बहुभिराहवे ।
त्वद्दोषैर्निहतः पाप तस्मादसि हतो रणे ॥ ५०३ ॥
यान्यकार्याणि चास्माक कृतानीति प्रभाषसे ।
वैगुण्येन तवात्यर्थं सर्वं हि तदनुष्ठितम् ॥ ५०४ ॥
लोभेनातिबलेन त्वं तृष्णया च वशीकृत ।
कृतवानस्यकार्याणि विपाकस्तस्य भुज्यताम् ॥ ५०५ ॥
दुर्यो०- अधीतं विधिवद्दत्तं भूः प्रशास्ता ससागरा ।
मूर्ध्नि स्थितममित्राणां को नु स्वन्ततरो मया ॥ ५०६ ॥
यदिष्टं क्षत्रबन्धूनां स्वधर्ममनुपश्यताम् ।
तदिदं निधनं प्राप्तं को नु स्वन्ततरो मया ॥ ५०७ ॥
ससुहृत्सानुगश्चैव स्वर्गं गन्ताहमच्युत ।
यूयं निहतसङ्कल्पाः शोचन्तो वर्तयिष्यथ ॥ ५०८ ॥

## अर्जुनरथस्य भस्मीभवनम्, गान्धारीसमाश्वासनम्

(अ. ६२) ततस्ते प्रययुः सर्वे निवासाय महीक्षित ।
शङ्खान् प्रध्मापयन्तो वै हृष्टाः परिघबाहवः ॥ ५०९ ॥
शिबिरं समनुप्राप्य कुरुराजस्य पाण्डवाः ।
अवतेरुर्महाराज रथेभ्यो रथसत्तमाः ॥ ५१० ॥

ततो गाण्डीवधन्वानमभ्यभाषत केशवः।
स्थितः प्रियहिते नित्यमतीव भरतर्षभ ॥ ५११ ॥

अवरोपय गाण्डीवमक्षयौ च महेषुधी।
अथाहमवरोक्ष्यामि पश्चाद्भरतसत्तम ॥ ५१२ ॥

स्वयं चैवावरोह त्वमेतच्छ्रेयस्तवानघ।
तच्चाकरोत्तथा वीरः पाण्डुपुत्रो धनञ्जयः ॥ ५१३ ॥

अथ पश्चात्ततः कृष्णो रश्मीनुत्सृज्य वाजिनाम्।
अवारोहत मेधावी रथाद्गाण्डीवधन्वनः ॥ ५१४ ॥

अथावतीर्णे भूतानामीश्वरे सुमहात्मनि।
कपिरन्तर्दधे दिव्यो ध्वजो गाण्डीवधन्वनः ॥ ५१५ ॥

अथादीप्तोऽग्निना ह्याशु प्रजज्वाल महीपते।
भस्मीभूतोऽपतद्भूमौ रथो गाण्डीवधन्वनः ॥ ५१६ ॥

तं तथा भस्मभूतं तु दृष्ट्वा पाण्डुसुताः प्रभो।
अभवन् विस्मिता राजन्नर्जुनश्चेदमब्रवीत् ॥ ५१७ ॥

गोविन्द कस्माद्भगवन् रथो दग्धोऽयमग्निना।
तन्मे ब्रूहि महाबाहो श्रोतव्यं यदि मन्यसे ॥ ५१८ ॥

वासु०– अस्त्रैर्बहुविधैर्दग्धः पूर्वमेवायमर्जुन।
मदधिष्ठितत्वात् समरे न विशीर्णः परन्तप ॥ ५१९ ॥

इदानीं तु विशीर्णोऽयं दग्धो ब्रह्मास्त्रतेजसा।
मया विमुक्तः कौन्तेय त्वय्यद्य कृतकर्मणि ॥ ५२० ॥

ईषदुत्स्मयमानस्तु भगवान् केशवोऽरिहा।
परिष्वज्य च राजानं युधिष्ठिरमभाषत ॥ ५२१ ॥

दिष्ट्या जयसि कौन्तेय दिष्ट्या ते शत्रवो जिताः।
दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः ॥ ५२२ ॥

त्वं चापि कुशली राजन् माद्रीपुत्रौ च पाण्डवौ।
मुक्ता वीरक्षयादस्मात् सङ्ग्रामान्निहतद्विषः ॥ ५२३ ॥

इत्येवमुक्ते ते वीराः शिबिरं तव भारत।
प्रविश्य प्रत्यपद्यन्त कोशरत्नर्धिसञ्चयान् ॥ ५२४ ॥

रजतं जातरूपं च मणीनथ च मौक्तिकान्।
भूषणान्यथ मुख्यानि कम्बलान्यजिनानि च।
दासीदासमसङ्ख्येयं राज्योपकरणानि च ॥ ५२५ ॥

ते प्राप्य धनमक्षय्यं त्वदीयं भरतर्षभ।
उदक्रोशन्न महाभागा नरेन्द्र विजितारयः ॥ ५२६ ॥

अथाब्रवीन्महाराज वासुदेवो महायशाः।
अस्माभिर्मङ्गलार्थाय वस्तव्यं शिबिराद्बहिः ॥ ५२७ ॥

तथेत्युक्त्वा हि ते सर्वे पाण्डवाः सात्यकिस्तथा।
वासुदेवेन सहिता मङ्गलार्थं बहिर्ययुः ॥ ५२८ ॥

ते समासाद्य सरितं पुण्यामोघवतीं नृप।
न्यवसन्नथ तां रात्रिं पाण्डवा हतशत्रवः ॥ ५२९ ॥

(अ. ६३) हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे।
वैश०- व्युत्क्रम्य समयं राजन् धार्तराष्ट्रं महाबलम्।
युधिष्ठिरं महाराज महद्भयमथाविशत् ॥ ५३० ॥

तस्य चिन्तयमानस्य बुद्धिः समभवत्तदा।
गान्धार्याः क्रोधदीप्तायाः पूर्वं प्रशमनं भवेत् ॥ ५३१ ॥

सा हि पुत्रवधं श्रुत्वा कृतमस्माभिरीदृशम्।
मानसेनाग्निना क्रुद्धा भस्मसान्नः करिष्यति ॥ ५३२ ॥

एवं विचिन्त्य बहुधा भयशोकसमन्वितः।
वासुदेवमिदं वाक्यं धर्मराजोऽभ्यभाषत ॥ ५३३ ॥

गान्धार्या हि महाबाहो क्रोधं बुद्ध्यस्व माधव।
सा हि नित्यं महाभागा तपसोग्रेण कर्शिता ॥ ५३४ ॥

पुत्रपौत्रवधं श्रुत्वा ध्रुवं नः सम्प्रधक्ष्यति।
तस्याः प्रसादनं वीर प्राप्तकालं मतं मम ॥ ५३५ ॥

कश्च तां क्रोधताम्राक्षीं पुत्रव्यसनकार्शिताम्।
वीक्षितुं पुरुषः शक्तस्त्वामृते पुरुषोत्तम ॥ ५३६ ॥

तत्र मे गमनं प्राप्तं रोचते तव माधव ॥ ५३७ ॥

धर्मराजस्य वचनं श्रुत्वा यदुकुलोद्वह ।
जगाम हास्तिनपुरं त्वरितः केशवो विभुः ॥ ५३८ ॥

विदितं धृतराष्ट्रस्य सोऽवतीर्य रथोत्तमात्।
अभ्यगच्छददीनात्मा धृतराष्ट्रनिवेशनम् ॥ ५३९ ॥

पूर्वं चाभिगतं तत्र सोऽपश्यदृषिसत्तमम् ॥ ५४० ॥

पादौ प्रपीड्य कृष्णस्य राज्ञश्चापि जनार्दनः।
अभ्यवादयदव्यग्रो गान्धारीं चापि केशवः ॥ ५४१ ॥

ततस्तु यादवश्रेष्ठो धृतराष्ट्रमधोक्षजः।
पाणिमालम्ब्य राजेन्द्र सुस्वरं प्ररुरोद ह ॥ ५४२ ॥

स मुहूर्तादिवोत्सृज्य बाष्पं शोकसमुद्भवम्।

प्रक्षाल्य वारिणा नेत्रे ह्याचम्य च यथाविधि।
उवाच प्रस्तुतं वाक्यं धृतराष्ट्रमरिन्दमः ॥ ५४३ ॥

न तेऽस्त्यविदितं किञ्चिद्वृद्धस्य तव भारत।
कालस्य च यथा वृत्तं तत्ते सुविदित प्रभो ॥ ५४४ ॥

मया च स्वयमागम्य युद्धकाल उपस्थिते।
सर्वलोकस्य सान्निध्ये ग्रामांस्त्वं पञ्च याचितः ॥ ५४५ ॥

त्वया कालोपसृष्टेन लोभतो नापवर्जिताः।
तवापराधान्नृपते सर्वं क्षत्रं क्षयं गतम् ॥ ५४६ ॥

याचितस्त्वं शमं नित्यं न च तत्कृतवानसि।
कालोपहतचित्ता हि सर्वे मुह्यन्ति भारत ॥ ५४७ ॥

यथा मूढो भवान् पूर्वमस्मिन्नर्थे समुद्यते।
किमन्यत्कालयोगाद्धि दिष्टमेव परायणम् ॥ ५४८ ॥

मा च दोषान् महाप्राज्ञ पाण्डवेषु निवेशय ।
अल्पोऽप्यतिक्रमो नास्ति पाण्डवानां महात्मनाम् ॥ ५४९ ॥

कुलं वंशश्च पिण्डाश्च यच्च पुत्रकृतं फलम् ।
गान्धार्यास्तव वै नाथ पाण्डवेषु प्रतिष्ठितम् ॥ ५५० ॥

एतत्सर्वमनुध्याय आत्मनश्च व्यतिक्रमम् ।
शिवेन पाण्डवान् पाहि नमस्ते भरतर्षभ ॥ ५५१ ॥

एवमुक्त्वा महाराज धृतराष्ट्रं यदूत्तमः ।
उवाच परमं वाक्यं गान्धारीं शोककर्शिताम् ॥ ५५२ ॥

सौबलेयि निबोध त्वं यत्त्वां वक्ष्यामि तच्छृणु ।
त्वत्समा नाऽस्ति लोकेऽस्मिन्नद्य सीमन्तिनी शुभे ॥ ५५३ ॥

जानासि च यथा राज्ञि सभायां मम सन्निधौ ।
धर्मार्थसहित वाक्यमुभयोः पक्षयोर्हितम् ।
उक्तवत्यसि कल्याणि न च ते तनयैः कृतम् ॥ ५५४ ॥

दुर्योधनस्त्वया चोक्तो जयार्थी परुषं वचः ।
शृणु मूढ वचो मह्यं यतो धर्मस्ततो जयः ॥ ५५५ ॥

तदिदं समनुप्राप्तं तव वाक्यं नृपात्मजे ।
एवं विदित्वा कल्याणि मा स्म शोके मनः कृथाः ॥ ५५६ ॥

पाण्डवानां विनाशाय मा ते बुद्धिः कदाचन ।
शक्ता चासि महाभागे निर्दग्धुं तपसो बलात् ॥ ५५७ ॥

वासुदेववचः श्रुत्वा गान्धारी वाक्यमब्रवीत् ।
एवमेतन्महाबाहो यथा वदसि केशव ॥ ५५८ ॥

आधिभिर्दह्यमानाया मतिः सञ्चलिता मम ।
सा मे व्यवस्थिता श्रुत्वा तव वाक्यं जनार्दन ॥ ५५९ ॥

राज्ञस्त्वन्धस्य वृद्धस्य हतपुत्रस्य केशव ।
त्वं गतिः सहितैर्वीरैः पाण्डवैर्द्विपदां वरः ॥ ५६० ॥

एतावदुक्त्वा वचनं मुख प्रच्छाद्य वाससा ।
पुत्रशोकाभिसन्तप्ता गान्धारी प्ररुरोद ह ॥ ५६१ ॥

तत एनां महाबाहुः केशवः शोककर्शिताम् ।
हेतुकारणसंयुक्तैर्वाक्यैराश्वासयत् प्रभुः ॥ ५६२ ॥

समाश्वास्य च गान्धारीं धृतराष्ट्रं च माधव. ।
प्रायात्ततस्तु त्वरितो दिदृक्षु. पाण्डवान्नृप ॥ ५६३ ॥

आगम्य शिबिरं रात्रौ सोऽभ्यगच्छत पाण्डवान् ।
तच्च तेभ्यः समाख्याय सहितस्तै समाहितः ॥ ५६४ ॥

## दुर्योधनविलापः, अश्वत्थाम्नः सैनापत्याभिषेकः

(अ. ६४) अधिष्ठितः पदा मूर्ध्नि भग्नसक्थो महीं गतः ।
धृत०- शौटीर्यमानी पुत्रो मे किमभाषत सञ्जय ॥ ५६५ ॥

सञ्जय०-भग्नसक्थो नृपो राजन् पांसुना सोऽवगुण्ठितः ।
संरम्भाश्रुपरीताभ्यां नेत्राभ्यामभिवीक्ष्य माम् ।
बाहू धरण्यां निष्पिष्य निःश्वस्येदमथाब्रवीत् ॥ ५६६ ॥

भीष्मे शान्तनवे नाथे कर्णे शस्त्रभृतां वरे ।
इमामवस्थां प्राप्तोऽस्मि कालो हि दुरतिक्रम. ॥ ५६७ ॥

एकादशचमूभर्ता सोऽहमेतां दशां गतः ।
कालं प्राप्य महाबाहो न कश्चिदतिवर्तते ॥ ५६८ ॥

आख्यातव्यं मदीयानां येऽस्मिञ्जीवन्ति संयुगे ।
यथाहं भीमसेनेन व्युत्क्रम्य समयं हतः ॥ ५६९ ॥

अभिज्ञौ युद्धधर्मस्य मम माता पिता च मे ।
तौ हि सञ्जय दुःखार्तौ विज्ञाप्यौ वचनाद्धि मे ॥ ५७० ॥

इष्टं भृत्या भृताः सम्यक् भूः प्रशास्ता ससागरा ।
मूर्ध्नि स्थितममित्राणां जीवतामेव सञ्जय ॥ ५७१ ॥

दत्ता दाया यथाशक्ति मित्राणां च प्रियं कृतम् ।
अमित्रा बाधिताः सर्वे को नु स्वन्ततरो मया ॥ ५७२ ॥

दिष्ट्या नाहं जित· सङ्ख्ये परान् प्रेष्यवदाश्रित· ।
दिष्ट्या मे विपुला लक्ष्मीर्मृते त्वन्यगता विभो ॥ ५७३ ॥

अश्वत्थामा महाभाग· कृतवर्मा च सात्वतः ।
कृप· शारद्वतश्चैव वक्तव्या वचनान्मम ॥ ५७४ ॥

अधर्मेण प्रवृत्तानां पाण्डवानामनेकशः ।
विश्वासं समयघ्नानां न यूयं गन्तुमर्हथ ॥ ५७५ ॥

वार्तिकांश्चाब्रवीद्राजा पुत्रस्ते सत्यविक्रमः ।
अधर्माद्भीमसेनेन निहतोऽहं यथा रणे ॥ ५७६ ॥

सोऽहं द्रोणं स्वर्गगतं कर्णशल्यावुभौ तथा ।
पृष्ठतोऽनुगमिष्यामि सार्थहीनो यथाऽध्वगः ॥ ५७७ ॥

कथं भ्रातॄन् हताञ्श्रुत्वा भर्तारं च स्वसा मम ।
रोरूयमाणा दुःखार्ता दुःशला सा भविष्यति ॥ ५७८ ॥

स्नुषाभि  प्रस्नुषाभिश्च वृद्धो राजा पिता मम ।
गान्धारीसहितश्चैव कां गतिं प्रतिपत्स्यति ॥ ५७९ ॥

नूनं लक्ष्मणमातापि हतपुत्रा हतेश्वरा ।
विनाशं यास्यति क्षिप्रं कल्याणी पृथुलोचना ॥ ५८० ॥

यदि जानाति चार्वाक· परिव्राड्वाग्विशारदः ।
करिष्यति महाभागो ध्रुवं चापचितिं मम ॥ ५८१ ॥

समन्तपञ्चके पुण्ये त्रिषु लोकेषु विश्रुते ।
अहं निधनमासाद्य लोकान् प्राप्स्यामि शाश्वतान् ॥ ५८२ ॥

(अ. ६५) वार्तिकानां सकाशात्तु श्रुत्वा दुर्योधनं हतम् ।
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वत· ।
त्वरिता जवनैरश्वैरायोधनमुपागमन् ॥ ५८३ ॥

तत्रापश्यन् महात्मानं धार्तराष्ट्रं निपातितम्।
प्रभग्नं वायुवेगेन महाशालं यथा वने ॥ ५८४ ॥
भूमौ विचेष्टमानं त रुधिरेण समुक्षितम्।
महागजमिवारण्ये व्याधेन विनिपातितम् ॥ ५८५ ॥
पूर्णचन्द्रमिव व्योम्नि तुषारावृतमण्डलम्।
ते तं दृष्ट्वा महेष्वासं भूतले पतितं नृपम्।
अवतीर्य रथेभ्यश्च प्राद्रवन् राजसन्निधौ ॥ ५८६ ॥
दुर्योधनं च सम्प्रेक्ष्य सर्वे भूमावुपाविशन् ॥ ५८७ ॥
ततो द्रौणिर्महाराज बाष्पपूर्णेक्षणः श्वसन्।
उवाच भरतश्रेष्ठं सर्वलोकेश्वरेश्वरम् ॥ ५८८ ॥
न नूनं विद्यते सत्यं मानुषे किञ्चिदेव हि।
यत्र त्वं पुरुषव्याघ्र शेषे पांसुषु रूषित. ॥ ५८९ ॥
दुर्विज्ञेया गतिर्नूनं कार्याणां कारणान्तरे।
यद्वै लोकगुरुर्भूत्वा भवानेतां दशा गत. ॥ ५९० ॥
अध्रुवा सर्वमर्त्येषु श्रीरुपालक्ष्यते भृशम्।
भवतो व्यसनं दृष्ट्वा शक्रविस्पर्धिनो भृशम् ॥ ५९१ ॥
तस्य तद्वचनं श्रुत्वा दुःखितस्य विशेषतः।
उवाच राजन् पुत्रस्ते प्राप्तकालमिदं वच. ॥ ५९२ ॥
ईदृशो लोकधर्मोऽय धात्रा निर्दिष्ट उच्यते।
विनाश. सर्वभूताना कालपर्यायमागतः ॥ ५९३ ॥
सोऽयं मां समनुप्राप्तः प्रत्यक्षं भवतां हि यः।
पृथिवीं पालयित्वाऽहमेता निष्ठामुपागतः ॥ ५९४ ॥
दिष्ट्या नाहं परावृत्तो युद्धे कस्याञ्चिदापदि।
दिष्ट्या च वोऽहं पश्यामि मुक्तानस्माज्जनक्षयात् ॥ ५९५ ॥
मा भवन्तोऽत्र तप्यन्तां सौहृदान्निधनेन मे।
यदि वेदा. प्रमाणं वो जिता लोका मयाक्षयाः ॥ ५९६ ॥

कृतं भवद्भिः सदृशमनुरूपमिवात्मन ।
यतितं विजये नित्यं दैवं तु दुरतिक्रमम् ॥ ५९७ ॥
एतावदुक्त्वा वचनं बाष्पव्याकुललोचन.।
तूष्णीं बभूव राजेन्द्र रुजासौ विह्वलो भृशम् ॥ ५९८ ॥
तथा दृष्ट्वा तु राजान बाष्पशोकसमन्वितम्।
द्रौणि. क्रोधेन जज्वाल यथा वह्निर्जगत्क्षये ॥ ५९९ ॥
स च क्रोधसमाविष्टः पाणौ पाणिं निपीड्य च।
बाष्पविह्वलया वाचा राजानमिदमब्रवीत् ॥ ६०० ॥
पिता मे निहतः क्षुद्रै सुनृशंसेन कर्मणा।
न तथा तेन तप्यामि यथा राजंस्त्वयाऽद्य वै ॥ ६०१ ॥
शृणु चेदं वचो मह्यं सत्येन वदतः प्रभो ॥ ६०२ ॥
अद्याहं सर्वपञ्चालान् वासुदेवस्य पश्यत.।
सर्वोपायैर्हि नेष्यामि प्रेतराजनिवेशनम्।
अनुज्ञां तु महाराज भवान् मे दातुमर्हति ॥ ६०३ ॥
इति श्रुत्वा तु वचनं द्रोणपुत्रस्य कौरव.।
मनसः प्रीतिजननं कृपं वचनमब्रवीत्।
आचार्य शीघ्रं कलशं जलपूर्णं समानय ॥ ६०४ ॥
स तद्वचनमाज्ञाय राज्ञो ब्राह्मणसत्तमः।
कलशं पूर्णमादाय राज्ञोऽन्तिकमुपागमत् ॥ ६०५ ॥
तमब्रवीन्महाराज पुत्रस्तव विशां पते।
ममाज्ञया द्विजश्रेष्ठ द्रोणपुत्रोऽभिषिच्यताम्।
सैनापत्येन भद्रं ते मम चेदिच्छसि प्रियम् ॥ ६०६ ॥
राज्ञो नियोगाद्योद्धव्यं ब्राह्मणेन विशेषत ।
वर्तता क्षत्रधर्मेण ह्येवं धर्मविदो विदुः ॥ ६०७ ॥

राज्ञस्तु वचनं श्रुत्वा कृपः शारद्वतस्तथा।
द्रौणि राज्ञो नियोगेन सैनापत्येऽभ्यषेचयत् ॥ ६०८ ॥

सोऽभिषिक्तो महाराज परिष्वज्य नृपोत्तमम्।
प्रययौ सिंहनादेन दिशः सर्वा विनादयन् ॥ ६०९ ॥

दुर्योधनोऽपि राजेन्द्र शोणितेन परिप्लुत.।
तां निशां प्रतिपेदेऽथ सर्वभूतभयावहाम् ॥ ६१० ॥

अपक्रम्य तु ते तूर्णं तस्मादायोधनान्नृप।
शोकसंविग्नमनसश्चिन्ताध्यानपराऽभवन् ॥ ६११ ॥

भीष्मपर्वत श्लोकाः ॥ ५२५३ ॥
आदिपर्वतः श्लोकाः ॥ १०२४८ ॥

॥ इति श्रीमहाभारतसारे शल्यपर्व समाप्तम् ॥

---

# १०. सौप्तिकपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥

## उलूकोपदेशः, द्रौणिकृपसंवादः

(अ. १) अधर्मेण हते तात पुत्रे दुर्योधने मम ।
धृत०- कृतवर्मा कृपो द्रौणिः किमकुर्वत सञ्जय ॥ १ ॥

सञ्जय०-गत्वा तु तावका राजन्नातिदूरमवस्थिताः ।
अपश्यन्त वनं घोरं नानाद्रुमलतावृतम् ॥ २ ॥

प्रविश्य तद्वनं घोरं वीक्षमाणाः समन्ततः ।
शाखासहस्रसंछन्नं न्यग्रोधं ददृशुस्ततः ॥ ३ ॥

तेऽवतीर्य रथेभ्यश्च विप्रमुच्य च वाजिनः ।
उपस्पृश्य यथान्यायं सन्ध्यामन्वासत प्रभो ॥ ४ ॥

ततोऽस्तं पर्वतश्रेष्ठमनुप्राप्ते दिवाकरे ।
सर्वस्य जगतो धात्री शर्वरी समपद्यत ॥ ५ ॥

ग्रहनक्षत्रताराभिः सम्पूर्णाभिरलङ्कृतम् ।
नभोंऽशुकमिवाभाति प्रेक्षणीयं समन्ततः ॥ ६ ॥

तस्मिन् रात्रिमुखे घोरे दुःखशोकसमन्विताः ।
कृतवर्मा कृपो द्रौणिरुपोपविविशुः समम् ॥ ७ ॥

निद्रया च परीताङ्गा निषेदुर्धरणीतले ।
श्रमेण सुदृढं युक्ता विक्षता विविधैः शरैः ॥ ८ ॥

ततो निद्रावशं प्राप्तौ कृपभोजौ महारथौ ।
महार्हशयनोपेतौ भूमावेव ह्यनाथवत् ॥ ९ ॥

क्रोधामर्षवशं प्राप्तो द्रोणपुत्रस्तु भारत ।
न वै स्म स जगामाथ निद्रां सर्प इव श्वसन् ॥ १० ॥
वीक्षमाणो वनोद्देशं नानासत्त्वैर्निषेवितम् ।
अपश्यत महाबाहुर्न्यग्रोधं वायसैर्युतम् ॥ ११ ॥
तत्र काकसहस्राणि तां निशां पर्यणामयन् ।
सुखं स्वपन्ति कौरव्य पृथक्पृथगुपाश्रया. ॥ १२ ॥
सुप्तेषु तेषु काकेषु विश्रब्धेषु समन्ततः ।
सोऽपश्यत् सहसायान्तमुलूकं घोरदर्शनम् ॥ १३ ॥
सोऽथ शब्दं मृदुं कृत्वा लीयमान इवाण्डजः ।
सुप्ताञ्जघान सुबहून् वायसान् वायसान्तकः ॥ १४ ॥
तद्दृष्ट्वा सोपधं कर्म कौशिकेन कृतं निशि ।
तद्भावे कृतसङ्कल्पो द्रौणिरेकोऽन्वचिन्तयत् ॥ १५ ॥
उपदेशः कृतोऽनेन पक्षिणा मम संयुगे ।
शत्रूणां क्षपणे युक्त. प्राप्तः कालश्च मे मतः ॥ १६ ॥
नाद्य शक्या मया हन्तुं पाण्डवा जितकाशिनः ।
राज्ञः सकाशात्तेषां तु प्रतिज्ञातो वधो मया ॥ १७ ॥
पतङ्गाग्निसमां वृत्तिमास्थायात्मविनाशिनीम् ।
न्यायतो युध्यमानस्य प्राणत्यागो न संशयः ।
छद्मना च भवेत् सिद्धिः शत्रूणां च महान् क्षयः ॥ १८ ॥
तत संशयितादर्थाद्योऽर्थो नि संशयो भवेत् ।
तं जना बहु मन्यन्ते ये च शास्त्रविशारदा. ॥ १९ ॥
इत्येवं निश्चयं चक्रे सुप्तानां निशि मारणे ।
पाण्डूनां सह पाञ्चालैर्द्रोणपुत्र प्रतापवान् ॥ २० ॥
स क्रूरां मतिमास्थाय विनिश्चित्य मुहुर्मुहु ।
सुप्तौ प्राबोधयत्तौ तु मातुलं भोजमेव च ॥ २१ ॥
स मुहूर्तमिव ध्यात्वा बाष्पविह्वलमब्रवीत् ॥ २२ ॥

हतो दुर्योधनो राजा एकवीरो महाबलः।
यस्यार्थे वैरमस्माभिरासक्तं पाण्डवैः सह ॥ २३ ॥

वृकोदरेण क्षुद्रेण सुनृशंसमिदं कृतम्।
मूर्धाभिषिक्तस्य शिरः पादेन परिमृद्नता ॥ २४ ॥

पाण्डवैर्धार्तराष्ट्राणां यदिदं कदनं कृतम्।
वयमेव त्रयः शिष्टा अस्मिन् महति वैशसे ॥ २५ ॥

केचिन्नागशतप्राणाः केचित्सर्वास्त्रकोविदाः।
निहताः पाण्डवेयैस्ते मन्ये कालस्य पर्ययम् ॥ २६ ॥

एवमेतेन भाव्यं हि नूनं कार्येण तत्त्वतः।
यथा ह्यस्येदृशी निष्ठा कृतकार्येऽपि दुष्करे ॥ २७ ॥

भवतोस्तु यदि प्रज्ञा न मोहादपनीयते।
व्यापन्नेऽस्मिन् महत्यर्थे यन्न श्रेयस्तदुच्यताम् ॥ २८ ॥

(अ. २) कृप०– आबद्धा मानुषाः सर्वे निबद्धाः कर्मणोर्द्वयोः।
दैवे पुरुषकारे च परं ताभ्यां न विद्यते ॥ २९ ॥

न हि दैवेन सिध्यन्ति कार्याण्येकेन सत्तम।
न चापि कर्मणैकेन द्वाभ्यां सिद्धिस्तु योगतः ॥ ३० ॥

पर्जन्यः पर्वते वर्षन् किन्नु साधयते फलम्।
कृष्टे क्षेत्रे तथा वर्षन् किन्न साधयते फलम् ॥ ३१ ॥

उत्थानं चापि दैवस्य ह्यनुत्थानं च दैवतम्।
व्यर्थं भवति सर्वत्र पूर्वस्तत्र विनिश्चयः ॥ ३२ ॥

सुवृष्टे च यथा देवे सम्यक् क्षेत्रे च कर्षिते।
बीजं महागुणं भूयात्तथा सिद्धिर्हि मानुषी ॥ ३३ ॥

कृतः पुरुषकारश्च सोऽपि दैवेन सिध्यति।
तथास्य कर्मण कर्तुरभिनिर्वर्तते फलम् ॥ ३४ ॥

उत्थानं च मनुष्याणां दक्षाणां दैववर्जितम्।
अफलं दृश्यते लोके सम्यगप्युपपादितम् ॥ ३५ ॥

तत्रालसा मनुष्याणां ये भवन्त्यमनस्विन ।
उत्थानं ते विगर्हन्ति प्राज्ञानां तन्न रोचते ॥ ३६ ॥

प्रायशो हि कृतं कर्म नाफलं दृश्यते भुवि ।
अकृत्वा च पुनर्दुःखं कर्म पश्येन्महाफलम् ॥ ३७ ॥

चेष्टामकुर्वल्लभते यदि किञ्चिद्यदृच्छया ।
यो वा न लभते कृत्वा दुर्दर्शौ तावुभावपि ॥ ३८ ॥

दैवतेभ्यो नमस्कृत्य यस्त्वर्थान् सम्यगीहते ।
दक्षो दाक्षिण्यसम्पन्नो न स मोघैर्विहन्यते ॥ ३९ ॥

सम्यगीहा पुनरियं यो वृद्धानुपसेवते ।
आपृच्छति च यच्छ्रेय करोति च हितं वच ॥ ४० ॥

वृद्धानां वचन श्रुत्वा योऽभ्युत्थान प्रयोजयेत् ।
उत्थानस्य फलं सम्यक्तदा स लभतेऽचिरात् ॥ ४१ ॥

रागात् क्रोधाद्भयाल्लोभाद्योऽर्थानीहति मानवः ।
अनीशश्चावमानी च स शीघ्रं भ्रश्यते श्रिय· ॥ ४२ ॥

सोऽयं दुर्योधनेनार्थो लुब्धेनादीर्घदर्शिना ।
असमर्थः समारब्धो मूढत्वादविचिन्तित ॥ ४३ ॥

हितबुद्धीननादृत्य सम्मन्त्र्यासाधुभिः सह ।
वार्यमाणोऽकरोद्वैरं पाण्डवैर्गुणवत्तरै· ॥ ४४ ॥

अनुवर्तामहे यत्तु तं वयं पापपूरुषम् ।
अस्मानप्यनयस्तस्मात् प्राप्तोऽयं दारुणो महान् ॥ ४५ ॥

अनेन तु ममाद्यापि व्यसनेनोपतापिता ।
बुद्धिश्चिन्तयते किञ्चित् स्वं श्रेयो नावबुद्ध्यते ॥ ४६ ॥

मुह्यता तु मनुष्येण प्रष्टव्या· सुहृदो जनाः ।
तेऽत्र पृष्टा यथा ब्रूयुस्तत्कर्तव्यं तथा भवेत् ॥ ४७ ॥

ते वयं धृतराष्ट्रं च गान्धारीं च समेत्य ह ।
उपपृच्छामहे गत्वा विदुरं च महामतिम् ॥ ४८ ॥

ते पृष्टास्तु वदेयुर्यच्छ्रेयो न॰ समनन्तरम् ।
तदस्माभि॰ पुन॰ कार्यमिति मे नैष्ठिकी मति ॥ ४९ ॥

अनारम्भात्तु कार्याणा नार्थ॰ सम्पद्यते क्वचित् ॥ ५० ॥

कृते पुरुषकारे तु येषां कार्यं न सिद्ध्यति ।
दैवेनोपहतास्ते तु नात्र कार्या विचारणा ॥ ५१ ॥

(अ. ३) कृपस्य वचनं श्रुत्वा धर्मार्थसहितं शुभम् ।
अश्वत्थामा महाराज दुःखशोकसमन्वितः ॥ ५२ ॥

दह्यमानस्तु शोकेन प्रदीप्तेनाग्निना यथा ।
क्रूरं मनस्ततः कृत्वा तावुभौ प्रत्यभाषत ॥ ५३ ॥

पुरुषे पुरुषे बुद्धिर्या या भवति शोभना ।
तुष्यन्ति च पृथक् सर्वे प्रज्ञया ते स्वया स्वया ॥ ५४ ॥

सर्वो हि मन्यते लोक आत्मानं बुद्धिमत्तरम् ।
सर्वस्यात्मा बहुमत॰ सर्वात्मानं प्रशंसति ॥ ५५ ॥

सर्वस्य हि स्वका प्रज्ञा साधुवादे प्रतिष्ठिता ।
परबुद्धिं च निन्दन्ति स्वां प्रशंसन्ति चासकृत् ॥ ५६ ॥

कारणान्तरयोगेन योगे येषां समागतिः ।
अन्योन्येन च तुष्यन्ति बहु मन्यन्ति चासकृत् ॥ ५७ ॥

तस्यैव तु मनुष्यस्य सा सा बुद्धिस्तदा तदा ।
कालयोगे विपर्यासं प्राप्यान्योन्यं विपद्यते ॥ ५८ ॥

अन्यया यौवने मर्त्यो बुद्ध्या भवति मोहितः ।
मध्येऽन्यया जराया तु सोऽन्यां रोचयते मतिम् ॥ ५९ ॥

व्यसनं वा महाघोरं समृद्धिं चापि तादृशीम् ।
अवाप्य पुरुषो भोज कुरुते बुद्धिवैकृतम् ॥ ६० ॥

एकस्मिन्नेव पुरुषे सा सा बुद्धिस्तदा तदा ।
भवत्यकृतधर्मत्वात् सा तस्यैव न रोचते ॥ ६१ ॥

सर्वो हि पुरुषो भोज साध्वेतदिति निश्चितः।
कर्तुमारभते प्रीतो मरणादिषु कर्मसु ॥ ६२ ॥

उपजाता व्यसनजा येयमद्य मतिर्मम।
युवयोस्तां प्रवक्ष्यामि मम शोकविनाशिनीम् ॥ ६३ ॥

अदान्तो ब्राह्मणोऽसाधुर्निस्तेजाः क्षत्रियोऽधम।
अदक्षो निन्द्यते वैश्यः शूद्रश्च प्रतिकूलवान् ॥ ६४ ॥

सोऽस्मि जातः कुले श्रेष्ठे ब्राह्मणानां सुपूजिते।
मन्दभाग्यतयाऽस्म्येतं क्षत्रधर्ममनुष्ठितः ॥ ६५ ॥

सोऽहमद्य यथाकामं क्षत्रधर्ममुपास्य तम्।
गन्ताऽस्मि पदवीं राज्ञः पितुश्चापि महात्मनः ॥ ६६ ॥

अद्य स्वप्स्यन्ति पाञ्चाला विश्वस्ता जितकाशिनः।
तानवस्कन्द्य शिबिरे प्रेतभूतविचेतस।
सूदयिष्यामि विक्रम्य कक्षं दीप्त इवानलः ॥ ६७ ॥

अद्याहं सर्वपाञ्चालान् निहत्य च निकृष्य च।
अर्दयिष्यामि संहृष्टो रणे पांण्डुसुतांस्तथा ॥ ६८ ॥

अद्य पाञ्चालपाण्डूनां शयितानात्मजान्निशि।
खड्गेन निशितेनाजौ प्रमथिष्यामि गौतम ॥ ६९ ॥

अद्य पाञ्चालसेनां तां निहत्य निशि सौप्तिके।
कृतकृत्य. सुखी चैव भविष्यामि महामते ॥ ७० ॥

(अ. ४) दिष्ट्या ते प्रतिकर्तव्ये मतिर्जातेयमच्युत।
कृप०— न त्वां वारयितुं शक्तो वज्रपाणिरपि स्वयम् ॥ ७१ ॥

अनुयास्यावहे त्वां तु प्रभाते सहितावुभौ।
चिरं ते जाग्रतस्तात स्वप तावन्निशामिमाम् ॥ ७२ ॥

विश्रान्तश्च विनिद्रश्च स्वस्थचित्तश्च मानद।
समेत्य समरे शत्रून् वधिष्यसि न संशय. ॥ ७३ ॥

न हि त्वा रथिना श्रेष्ठं प्रगृहीतवरायुधम् ।
जेतुमुत्सहते शश्वदपि देवेषु वासवः ॥ ७४ ॥

स गत्वा शिविरं तेषां नाम विश्राव्य चाहवे ।
ततः कर्तासि शत्रूणां युध्यतां कदनं महत् ॥ ७५ ॥

एवमुक्तस्ततो द्रौणिर्मातुलेन हितं वचः ।
अब्रवीन्मातुलं राजन् क्रोधसंरक्तलोचनः ॥ ७६ ॥

आतुरस्य कुतो निद्रा नरस्यामर्षितस्य च ।
अर्थांश्चिन्तयतश्चापि कामयानस्य वा पुनः ॥ ७७ ॥

पश्य भागश्चतुर्थो मे स्वप्नमह्नाय नाशयेत् ॥ ७८ ॥
कथं हि मादृशो लोके मुहूर्तमपि जीवति ।
द्रोणो हतेति यद्वाचः पञ्चालानां शृणोम्यहम् ॥ ७९ ॥

विलापो भग्नसक्थस्य यस्तु राज्ञो मया श्रुतः ।
स पुनर्हृदयं कस्य क्रूरस्यापि न निर्दहेत् ॥ ८० ॥

वार्तिकैः कथ्यमानस्तु मित्राणां मे पराभवः ।
पाण्डवानां च विजयो हृदयं दहतीव मे ॥ ८१ ॥

अहं तु कदनं कृत्वा शत्रूणामद्य सौप्तिके ।
ततो विश्रमिता चैव स्वप्ता च विगतज्वरः ॥ ८२ ॥

(अ. ५) शुश्रूषुरपि दुर्मेधा पुरुषोऽनियतेन्द्रियः ।
कृप०– नालं वेदयितुं कृत्स्नौ धर्मार्थाविति मे मतिः ॥ ८३ ॥

तथैव तावन्मेधावी विनयं यो न शिक्षते ।
न च किञ्चन जानाति सोऽपि धर्मार्थनिश्चयम् ॥ ८४ ॥

चिरं ह्यपि जडः शूरः पण्डितं पर्युपास्य हि ।
न स धर्मान् विजानाति दर्वी सूपरसानिव ॥ ८५ ॥

मुहूर्तमपि तं प्राज्ञः पण्डितं पर्युपास्य हि ।
क्षिप्रं धर्मान् विजानाति जिह्वा सूपरसानिव ॥ ८६ ॥

शुश्रूषुस्त्वेव मेधावी पुरुषो नियतेन्द्रियः।
जानीयादागमान् सर्वान् ग्राह्यं च न विरोधयेत् ॥ ८७ ॥
अनेयस्त्ववमानी यो दुरात्मा पापपूरुषः।
दिष्टमुत्सृज्य कल्याणं करोति बहुपापकम् ॥ ८८ ॥
नाथवन्तं तु सुहृदः प्रतिषेधन्ति पातकात्।
निवर्तते तु लक्ष्मीवान्नालक्ष्मीवान्निवर्तते ॥ ८९ ॥
स कल्याणे मनः कृत्वा नियम्यात्मानमात्मना।
कुरु मे वचनं तात येन पश्चान्न तप्स्यसे ॥ ९० ॥
न वधः पूज्यते लोके सुप्तानामिह धर्मतः।
तथैवापास्तशस्त्राणां विमुक्तरथवाजिनाम् ॥ ९१ ॥
अद्य स्वप्स्यन्ति पञ्चाला विमुक्तकवचा विभो।
विश्वस्ता रजनीं सर्वे प्रेता इव विचेतसः ॥ ९२ ॥
यस्तेषां तदवस्थानां द्रुह्येत पुरुषोऽनृजुः।
व्यक्तं स नरके मज्जेदगाधे विपुलेऽप्लवे ॥ ९३ ॥
त्वं पुनः सूर्यसङ्काशः श्वोभूत उदिते रवौ।
प्रकाशे सर्वभूतानां विजेता युधि शात्रवान् ॥ ९४ ॥
असम्भावितरूपं हि त्वयि कर्म विगर्हितम्।
शुक्ले रक्तमिव न्यस्तं भवेदिति मतिर्मम ॥ ९५ ॥
अश्व०— एवमेव यथाऽऽत्थ त्वं मातुलेह न संशयः।
तैस्तु पूर्वमयं सेतुः शतधा विदलीकृतः ॥ ९६ ॥
प्रत्यक्षं भूमिपालानां भवतां चापि सन्निधौ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ ९७ ॥
दुर्योधनश्च भीमेन समेत्य गदया रणे।
पश्यतां भूमिपालानामधर्मेण निपातितः ॥ ९८ ।
विलापो भग्नसक्थस्य यो मे राज्ञः परिश्रुतः।
वार्तिकाणां कथयतां स मे मर्माणि कृन्तति ॥ ९९ ॥

पितृहन्तॄनहं हत्वा पाञ्चालान्निशि सौप्तिके।
कामं कीट पतङ्गो वा जन्म प्राप्य भवामि वै॥ १००॥
एवमुक्त्वा महाराज द्रोणपुत्रः प्रतापवान्।
एकान्ते योजयित्वाश्वान् प्रायादभिमुखः परान्॥ १०१॥
तमब्रूतां महात्मानौ भोजशारद्वतावुभौ।
किमर्थं स्यन्दनो युक्तः किञ्च कार्यं चिकीर्षितम्॥ १०२॥
एकसार्थप्रयातौ स्वस्त्वया सह नरर्षभ।
समदुःखसुखौ चापि नावां शङ्कितुमर्हसि॥ १०३॥
अश्वत्थामा तु सङ्क्रुद्ध पितुर्वधमनुस्मरन्।
ताभ्यां तथ्यं तथाऽऽचख्यौ यदस्यात्मचिकीर्षितम्॥ १०४॥
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः।
तं तथैव हनिष्यामि न्यस्तधर्माणमद्य वै॥ १०५॥
कथं च निहत पापः पाञ्चाल्यः शत्रुवन्मया।
शस्त्रेण विजितॉल्लोकान्नाप्नुयादिति मे मतिः॥ १०६॥
क्षिप्रं सन्नद्धकवचौ सखड्गावात्तकार्मुकौ।
मामास्थाय प्रतीक्षेतां रथवर्यौ परन्तपौ॥ १०७॥
इत्युक्त्वा रथमास्थाय प्रायादभिमुखः परान्।
तमन्वगात्कृपो राजन् कृतवर्मा च सात्वतः॥ १०८॥
ते प्रयाता व्यरोचन्त परानभिमुखास्त्रयः।
हूयमाना यथा यज्ञे समिद्धा हव्यवाहनाः॥ १०९॥
ययुश्च शिबिरं तेषां सम्प्रसुप्तजनं विभो॥ ११०॥

## शिबिरे सुप्तानां अश्वत्थामकृतो वधः

(अ ८) तस्मिन् प्रयाते शिबिरं द्रोणपुत्रे महात्मनि।
कृपश्च कृतवर्मा च शिबिरद्वार्यतिष्ठताम्॥ १११॥
अश्वत्थामा तु तौ दृष्ट्वा यत्नवन्तौ महारथौ।
प्रहृष्टः शनकै राजन्निदं वचनमब्रवीत्॥ ११२॥

अह प्रवेक्ष्ये शिबिरं चरिष्यामि च कालवत् ॥ ११३ ॥
यथा न कश्चिदपि वां जीवन्मुच्येत मानवः ।
तथा भवद्भ्या कार्यं स्यादिति मे निश्चिता मतिः ।
इत्युक्त्वा प्राविशद्द्रौणिः पार्थाना शिबिरं महत् ॥ ११४ ॥
अद्वारेणाभ्यवस्कन्द्य विहाय भयमात्मनः ।
धृष्टद्युम्नस्य निलयं शनकैरभ्युपागमत् ॥ ११५ ॥
तं शयान महात्मान विश्रब्धमकुतोभयम् ।
प्राबोधयत पादेन शयनस्थं महीपते ॥ ११६ ॥
सम्बुध्य चरणस्पर्शादुत्थाय रणदुर्मदः ।
अभ्यजानादमेयात्मा द्रोणपुत्र महारथम् ॥ ११७ ॥
तमुत्पतन्तं शयनादश्वत्थामा महाबल ।
केशेष्वालभ्य पाणिभ्यां निष्पिपेष महीतले ॥ ११८ ॥
तमाक्रम्य पदा राजन् कण्ठे चोरसि चोभयोः ।
नदन्तं विस्फुरन्तं च पशुमारममारयत् ॥ ११९ ॥
तुदन्नखैस्तु स द्रौणिं नातिव्यक्तमुदाहरत् ।
आचार्यपुत्र शस्त्रेण जहि मा मा चिरं कृथा ।
त्वत्कृते सुकृतांल्लोकान् गच्छेयं द्विपदां वर ॥ १२० ॥
तस्याव्यक्तां तु ता वाचं संश्रुत्य द्रौणिरब्रवीत् ॥ १२१ ॥
आचार्यघातिनां लोका न सन्ति कुलपासन ।
तस्माच्छस्त्रेण निधनं न त्वमर्हसि दुर्मते ॥ १२२ ॥
एवं ब्रुवाणस्तं वीरं सिंहो मत्तमिव द्विपम् ।
मर्मस्वभ्यवधीत् क्रुद्धः पादाष्ठीलैः सुदारुणैः ॥ १२३ ॥
स तस्य भवनाद्राजन् निष्क्रम्यानादयन्दिशः ।
द्रौपदेयानभिद्रुत्य खड्गेन व्यधमद्बली ॥ १२४ ॥
ततो भीष्मनिहन्तारं सह सर्वैः प्रभद्रकैः ।
अहनत् सर्वतो वीरं नानाप्रहरणैर्बली ॥ १२५ ॥

निवारयन्तं कृच्छ्रात्तान् श्वापदांश्च चिखादिषून् ।
विचेष्टमानं मह्यां च सुभृशं गाढवेदनम् ॥ १३८ ॥

ते तं शयानं सम्प्रेक्ष्य राजानमतथोचितम् ।
अविषह्येण दुःखेन ततस्ते रुरुदुस्त्रय ॥ १३९ ॥

ततस्तु रुधिरं हस्तैर्मुखान्निर्मृज्य तस्य हि ।
रणे राज्ञः शयानस्य कृपणं पर्यदेवयन् ॥ १४० ॥

कृप०– न दैवस्यातिभारोऽस्ति यदयं रुधिरोक्षितः ।
एकादशचमूभर्ता शेते दुर्योधनो हतः ॥ १४१ ॥

योऽयं मूर्धाभिषिक्तानामग्रे जातः परन्तपः ।
स हतो ग्रसते पांसून् पश्य कालस्य पर्ययम् ॥ १४२ ॥

उपासत द्विजाः पूर्वमर्थहेतोर्यमीश्वरम् ।
उपासते च तं ह्यद्य क्रव्यादा मांसहेतवः ॥ १४३ ॥

तं शयानं कुरुश्रेष्ठं ततो भरतसत्तम ।
अश्वत्थामा समालोक्य करुणं पर्यदेवयत् ॥ १४४ ॥

कालो नूनं महाराज लोकेऽस्मिन् बलवत्तरः ।
पश्यामो निहतं त्वां च भीमसेनेन संयुगे ॥ १४५ ॥

अधर्मेण हतस्याजौ मृद्यमानं पदा शिरः ।
य उपेक्षितवान् क्षुद्रं धिक् कृष्णं धिग्युधिष्ठिरम् ॥ १४६ ॥

यां गतिं क्षत्रियस्याहुः प्रशस्ता परमर्षयः ।
हतस्याभिमुखस्याजौ प्राप्तस्त्वमसि तां गतिम् ॥ १४७ ॥

वयमेव त्रयो राजन् गच्छन्तं परमां गतिम् ।
यद्वै त्वां नानुगच्छामस्तेन धक्ष्यामहे वयम् ॥ १४८ ॥

गत्वैव तु महाराज समेत्य च महारथान् ।
यथाज्येष्ठं यथाश्रेष्ठं पूजयेर्वचनान्मम ॥ १४९ ॥

आचार्यं पूजयित्वा च केतुं सर्वधनुष्मताम् ।
हतं मयाऽद्य शंसेथा धृष्टद्युम्नं नराधिप ॥ १५० ॥

दुर्योधन जीवसि त्वं वाक्यं श्रोत्रसुखं शृणु।
सप्त पाण्डवत शेषा धार्तराष्ट्रास्त्रयो वयम् ॥ १५१ ॥

ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः।
अहं च कृतवर्मा च कृपः शारद्वतस्तथा ॥ १५२ ॥

द्रौपदेया हताः सर्वे धृष्टद्युम्नस्य चात्मजाः।
पाञ्चाला निहताः सर्वे मत्स्यशेषं च भारत ॥ १५३ ॥

मया च पापकर्माऽसौ धृष्टद्युम्नो महीपते।
प्रविश्य शिबिरं रात्रौ पशुमारेण मारित ॥ १५४ ॥

दुर्योधनस्तु तां वाचं निशम्य मनस॰ प्रियाम्।
प्रतिलभ्य पुनश्चेत इदं वचनमब्रवीत् ॥ १५५ ॥

न मेऽकरोत्तद्गाङ्गेयो न कर्णो न च ते पिता।
यत्त्वया कृपभोजाभ्यां सहितेनाद्य मे कृतम् ॥ १५६ ॥

स च सेनापतिः क्षुद्रो हतः सार्धं शिखण्डिना।
तेन मन्ये मघवता सममात्मानमद्य वै ॥ १५७ ॥

स्वस्ति प्राप्नुत भद्रं व स्वर्गे नः सङ्गम॰ पुनः ॥ १५८ ॥

इत्येवमुक्त्वा तूष्णीं स कुरुराजो महामनाः।
प्राणानुपासृजद्वीरः सुहृदां दु खमुत्सृजन् ॥ १५९ ॥

एवमेष क्षयो वृत्त कुरुपाण्डवसेनयोः।
घोरो विशसनो रौद्रो राजन् दुर्मन्त्रिते तव ॥ १६० ॥

तव पुत्रे गते स्वर्गं शोकार्तस्य ममानघ।
ऋषिदत्तं प्रनष्टं तद्दिव्यदर्शित्वमद्य वै ॥ १६१ ॥

(अ. १०) तस्यां रात्र्यां व्यतीतायां धृष्टद्युम्नस्य सारथिः।
वैश०- शशंस धर्मराजाय सौप्तिके कदनं कृतम् ॥ १६२ ॥

सूत०- द्रौपदेया हता राजन् द्रुपदस्यात्मजै॰ सह।
प्रमत्ता निशि विश्वस्ताः स्वपन्तः शिबिरे स्वके ॥ १६३ ॥

कृतवर्मणा नृशंसेन गौतमेन कृपेण च।
अश्वत्थाम्ना च पापेन हतं व· शिबिरं निशि॥ १६४॥

अहमेकोऽवशिष्टस्तु तस्मात्सैन्यान्महामते।
मुक्तः कथञ्चिद्धर्मात्मन् व्यग्राच्च कृतवर्मणः॥ १६५॥

तच्छ्रुत्वा वाक्यमशिवं कुन्तीपुत्रो युधिष्ठिर·।
पपात मह्यां दुर्धर्ष· पुत्रशोकसमन्वितः॥ १६६॥

लब्धचेतास्तु कौन्तेयः शोकविह्वलया गिरा।
जित्वा शत्रूञ्जितः पश्चात्पर्यदेवयदार्तवत्॥ १६७॥
दुर्विदा गतिरर्थानामपि ये दिव्यचक्षुषः।
जीयमाना जयन्त्यन्ये जयमाना वयं जिताः॥ १६८॥

अनर्थो ह्यर्थसङ्काशस्तथाऽनर्थोऽर्थदर्शनः।
जयोऽयमजयाकारो जयस्तस्मात् पराजयः॥ १६९॥

यज्जित्वा तप्यते पश्चादापन्न इव दुर्मतिः।
कथं मन्येत विजयं ततो जिततरः परैः॥ १७०॥

न हि प्रमादात् परमस्ति कश्चि-
द्वधो नराणामिह जीवलोके।
प्रमत्तमर्था हि नरं समन्तात्
त्यजन्त्यनर्थाश्च समाविशन्ति॥ १७१॥

न हि प्रमत्तेन नरेण शक्यं
विद्या तपः श्रीर्विपुलं यशो वा।
इन्द्रोपमान् पार्थिवपुत्रपौत्रा-
न्पश्याविशेषेण हतान् प्रमादात्॥ १७२॥

तीर्त्वा समुद्रं वणिज समृद्धा
मग्नाः कुनद्यामिव हेलमानाः॥ १७३॥

कृष्णां तु शोचामि कथं नु साध्वी
शोकार्णवं साऽद्य विशत्यभीता।

भ्रातॄंश्च पुत्रांश्च हतान्निशम्य
पाञ्चालराजं पितरं च वृद्धम्।
ध्रुवं विसंज्ञा पतिता पृथिव्यां
सा शोष्यते शोककृशाङ्गयष्टिः॥ १७४ ॥

इत्येवमार्त. परिदेवयन् स
राजा कुरूणां नकुलं बभाषे।
गच्छानयैनामिह मन्दभाग्यां
समातृपक्षामिति राजपुत्रीम्॥ १७५ ॥

माद्रीसुतस्तत्परिगृह्य वाक्यं
धर्मेण धर्मप्रतिमस्य राज्ञः।
ययौ रथेनालयमाशु देव्या.
पाञ्चालराजस्य च यत्र दारा ॥ १७६ ॥

प्रस्थाप्य माद्रीसुतमाजमीढः
शोकार्दितस्तै. सहितः सुहृद्भिः।
रोरूयमाणः प्रययौ सुताना-
मायोधनं भूतगणानुकीर्णम्॥ १७७ ॥

स तत् प्रविश्याशिवमुग्ररूपं
ददर्श पुत्रान् सुहृदः सखींश्च।
भूमौ शयानान् रुधिरार्द्रगात्रा-
न्विभिन्नदेहान् प्रहतोत्तमाङ्गान्॥ १७८ ॥

(अ. ११) ततस्तस्य महाञ्शोकः प्रादुरासीन्महात्मनः।
स्मरत. पुत्रपौत्राणां भ्रातॄणां स्वजनस्य ह॥ १७९ ॥

तमश्रुपरिपूर्णाक्षं वेपमानमचेतसम्।
सुहृदो भृशसंविग्ना. सान्त्वयाञ्चक्रिरे तदा॥ १८० ॥

ततस्तस्मिन् क्षणे कल्पो रथेनादित्यवर्चसा।
नकुलः कृष्णया सार्धमुपायात् परमार्तया॥ १८१ ॥

उपप्लव्यं गता सा तु श्रुत्वा सुमहदप्रियम्।
तदा विनाशं सर्वेषां पुत्राणां व्यथिताऽभवत्॥ १८२॥
कम्पमानेव कदली वातेनाभिसमीरिता।
कृष्णा राजानमासाद्य शोकार्ता न्यपतद्भुवि॥ १८३॥
ततस्तां पतितां दृष्ट्वा संरम्भी सत्यविक्रमः।
बाहुभ्यां परिजग्राह समुत्पत्य वृकोदरः॥ १८४॥
सा समाश्वासिता तेन भीमसेनेन भामिनी।
रुदती पाण्डवं कृष्णा सा हि भारतमब्रवीत्॥ १८५॥
दिष्ट्या राजन्नवाप्येमामखिलां भोक्ष्यसे महीम्।
आत्मजान् क्षत्रधर्मेण सम्प्रदाय यमाय वै॥ १८६॥
दिष्ट्या त्वं कुशली पार्थ मत्तमातङ्गगामिनीम्।
अवाप्य पृथिवीं कृत्स्नां सौभद्रं न स्मरिष्यसि॥ १८७॥
प्रसुप्तानां वधं श्रुत्वा द्रौणिना पापकर्मणा।
शोकस्तपति मां पार्थ हुताशन इवाश्रयम्॥ १८८॥
तस्य पापकृतो द्रौणेर्न चेदद्य त्वया रणे।
ह्रियते सानुबन्धस्य युधि विक्रम्य जीवितम्॥ १८९॥
इहैव प्रायमासिष्ये तन्निबोधत पाण्डवाः।
न चेत् फलमवाप्नोति द्रौणिः पापस्य कर्मणः॥ १९०॥
एवमुक्त्वा ततः कृष्णा पाण्डवं प्रत्युपाविशत्।
प्रत्युवाच स धर्मात्मा द्रौपदीं चारुदर्शनाम्॥ १९१॥
धर्म्यं धर्मेण धर्मज्ञे प्राप्तास्ते निधनं शुभे।
पुत्रास्ते भ्रातरश्चैव तान्न शोचितुमर्हसि॥ १९२॥
स कल्याणि वनं दुर्गं दूरं द्रौणिरितो गत ।
तस्य त्वं पातनं सङ्ख्ये कथं ज्ञास्यसि शोभने॥ १९३॥
द्रौपदी०-द्रोणपुत्रस्य सहजो मणिः शिरसि मे श्रुतः।
निहत्य सङ्ख्ये तं पापं पश्येयं मणिमाहृतम्॥ १९४॥

राजञ्शिरसि ते कृत्वा जीवेयमिति मे मति ॥ १९५ ॥
तस्या बहुविधं दु खं निशम्य परिदेवितम् ।
न चामर्षत कौन्तेयो भीमसेनो महाबल ॥ १९६ ॥
स काञ्चनविचित्राङ्गमारुरोह महारथम् ।
नकुलं सारथिं कृत्वा द्रोणपुत्रवधे धृतः ।
विस्फार्य सशरं चापं तूर्णमश्वानचोदयत् ॥ १९७ ॥

## अश्वत्थामदौरात्म्यकथनम्, ब्रह्मास्त्रमोक्षणम्

(अ. १२) तस्मिन् प्रयाते दुर्धर्षे यदूनामृषभस्ततः ।
अब्रवीत्पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरम् ॥ १९८ ॥
एष पाण्डव ते भ्राता पुत्रशोकपरायणः ।
जिघांसुर्द्रौणिमाक्रन्दे एक एवाभिधावति ॥ १९९ ॥
भीमः प्रियस्ते सर्वेभ्यो भ्रातृभ्यो भरतर्षभ ।
तं कृच्छ्रगतमद्य त्वं कस्मान्नाभ्युपपद्यसे ॥ २०० ॥
यत्तदाचष्ट पुत्राय द्रोणः परपुरञ्जयः ।
अस्त्रं ब्रह्मशिरो नाम दहेत पृथिवीमपि ॥ २०१ ॥
तन्महात्मा महाभागः केतु॰ सर्वधनुष्मताम् ।
प्रत्यपादयदाचार्य॰ प्रीयमाणो धनञ्जयम् ॥ २०२ ॥
तं पुत्रोऽप्येक एवैनमन्वयाचदमर्षण ।
ततः प्रोवाच पुत्राय नातिहृष्टमना इव ॥ २०३ ॥
विदितं चापलं ह्यासीदात्मजस्य दुरात्मनः ।
सर्वधर्मविदाचार्यः सोऽन्वशात् स्वसुतं ततः ॥ २०४ ॥
परमापद्गतेनापि न स्म तात त्वया रणे ।
इदमस्त्रं प्रयोक्तव्यं मानुषेषु विशेषतः ॥ २०५ ॥
इत्युक्तवान् गुरुः पुत्रं द्रोण पश्चादथोक्तवान् ।
न त्वं जातु सतां मार्गे स्थातेति पुरुषर्षभ ॥ २०६ ॥

स तदाज्ञाय दुष्टात्मा पितुर्वचनमप्रियम् ।
निराशः सर्वकल्याणैः शोकात् पर्यचरन्महीम् ॥ २०७ ॥
ततस्तदा कुरुश्रेष्ठ वनस्थे त्वयि भारत ।
अवसद्द्वारकामेत्य वृष्णिभिः परमार्चितः ॥ २०८ ॥
स कदाचित् समुद्रान्ते वसन् द्वारवतीमनु ।
एक एकं समागम्य मामुवाच हसन्निव ॥ २०९ ॥
अस्त्रं ब्रह्मशिरो नाम देवगन्धर्वपूजितम् ।
तदद्य मयि दाशार्ह यथा पितरि मे तथा ॥ २१० ॥
अस्मत्तस्तदुपादाय दिव्यमस्त्रं यदुत्तम ।
ममाप्यस्त्रं प्रयच्छ त्वं चक्रं रिपुहणं रणे ॥ २११ ॥
गृहाण चक्रमित्युक्तो मया तु तदनन्तरम् ।
जग्राहोत्पत्य सहसा चक्रं सव्येन पाणिना ॥ २१२ ॥
न चैनमशकत् स्थानात् सञ्चालयितुमप्युत ।
अथैनं दक्षिणेनापि ग्रहीतुमुपचक्रमे ॥ २१३ ॥
सर्वयत्नबलेनापि गृह्णन्नेवमिदं ततः ।
ततः सर्वबलेनापि यदैनं न शशाक ह ॥ २१४ ॥
उद्यन्तुं वा चालयितुं द्रौणिः परमदुर्मनाः ।
कृत्वा यत्नं परिश्रान्तः स न्यवर्तत भारत ॥ २१५ ॥
निवृत्तमनसं तस्मादभिप्रायाद्विचेतसम् ।
अहमामन्त्र्य संविग्नमश्वत्थामानमब्रुवम् ॥ २१६ ॥
भारताचार्यपुत्रस्त्वं मानितः सर्वयादवैः ।
चक्रेण रथिनां श्रेष्ठ कन्नु तात युयुत्ससे ॥ २१७ ॥
एवमुक्तो मया द्रौणिर्मामिदं प्रत्युवाच ह ।
प्रयुज्य भवते पूजां योत्स्ये कृष्ण त्वया सह ॥ २१८ ॥
प्रार्थितं ते मया चक्रं देवदानवपूजितम् ।
अजेयः स्यामिति विभो सत्यमेतद्ब्रवीमि ते ॥ २१९ ॥

त्वत्तोऽह दुर्लभं काममनवाप्यैव केशव।
प्रतियास्यामि गोविन्द शिवेनाभिवदस्व माम् ॥ २२० ॥

एतावदुक्त्वा द्रौणिर्मां युग्यानश्वान् धनानि च।
आदायोपययौ काले रत्नानि विविधानि च ॥ २२१ ॥

स संरम्भी दुरात्मा च चपल क्रूर एव च।
वेद चास्त्रं ब्रह्मशिरस्तस्माद्रक्ष्यो वृकोदर॰ ॥ २२२ ॥

(अ॰ १३) एवमुक्त्वा युधां श्रेष्ठ सर्वयादवनन्दनः।
सर्वायुधवरोपेतमारुरोह रथोत्तमम् ॥ २२३ ॥

अर्जुन सत्यकर्मा च कुरुराजो युधिष्ठिर॰।
अशोभेता महात्मानौ दाशार्हमभित॰ स्थितौ।
रथस्थ शार्ङ्गधन्वानमश्विनाविव वासवम् ॥ २२४ ॥

ते समाचर्छ्नरव्याघ्रा॰ क्षणेन भरतर्षभ।
भीमसेनं महेष्वासं समनुद्रुत्य वेगिताः ॥ २२५ ॥

क्रोधदीप्तं तु कौन्तेयं द्विषदर्थे समुद्यतम्।
नाशक्नुवन् वारयितुं समेत्यापि महारथा॰ ॥ २२६ ॥

स तेषां प्रेक्षतामेव श्रीमतां दृढधन्विनाम्।
ययौ भागीरथीतीरं हरिभिर्भृशवेगितै ।
यत्र स्म श्रूयते द्रौणि॰ पुत्रहन्ता महात्मनाम् ॥ २२७ ॥

स ददर्श महात्मानमुदकान्ते यशस्विनम्।
कृष्णद्वैपायन व्यासमासीनमृषिभि॰ सह ॥ २२८ ॥

तं चैव क्रूरकर्माण ददर्श द्रौणिमन्तके ॥ २२९ ॥

तमभ्यधावत्कौन्तेयः प्रगृह्य सशरं धनु॰।
भीमसेनो महाबाहुस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ २३० ॥

स दृष्ट्वा भीमधन्वानं प्रगृहीतशरासनम्।
भ्रातरौ पृष्ठतश्चास्य जनार्दनरथे स्थितौ।
व्यथितात्माऽभवद्द्रौणिः प्राप्तं चेदममन्यत ॥ २३१ ॥

स तद्दिव्यमदीनात्मा परमास्त्रमचिन्तयत्।
जग्राह च स चेषीकां द्रौणिः सव्येन पाणिना ॥ २३२ ॥

स तामापदमासाद्य दिव्यमस्त्रमुदैरयत्।
अपाण्डवायेति रुषा तदस्त्रं प्रमुमोच ह ॥ २३३ ॥

१४) इङ्गितेनैव दाशार्हस्तमभिप्रायमादित।
द्रौणेर्बुद्ध्वा महाबाहुरर्जुनं प्रत्यभाषत ॥ २३४ ॥

अर्जुनार्जुन यद्दिव्यमस्त्रं ते हृदि वर्तते।
द्रोणोपदिष्टं तस्यायं कालः सम्प्रति पाण्डव ॥ २३५ ॥

भ्रातॄणामात्मनश्चैव परित्राणाय भारत।
विसृजैतत्त्वमप्याजावस्त्रमस्त्रनिवारणम् ॥ २३६ ॥

केशवेनैवमुक्तोऽथ पाण्डवः परवीरहा।
अवातरद्रथात्तूर्णं प्रगृह्य सशरं धनुः ॥ २३७ ॥

पूर्वमाचार्यपुत्राय ततोऽनन्तरमात्मने।
भ्रातृभ्यश्चैव सर्वेभ्य. स्वस्तीत्युक्त्वा परन्तप. ॥ २३८ ॥

देवताभ्यो नमस्कृत्य गुरुभ्यश्चैव सर्वश.।
उत्ससर्ज शिवं ध्यायन्नस्त्रमस्त्रेण शाम्यताम् ॥ २३९ ॥

ततस्तदस्त्रं सहसा सृष्टं गाण्डीवधन्वना।
प्रजज्वाल महार्चिष्मद्युगान्तानलसंनिभम् ॥ २४० ॥

तथैव द्रोणपुत्रस्य तदस्त्रं तिग्मतेजसः।
प्रजज्वाल महाज्वालं तेजोमण्डलसंवृतम् ॥ २४१ ॥

ते त्वस्त्रतेजसी लोकांस्तापयन्ती व्यवस्थिते।
महर्षी सहितौ तत्र दर्शयामासतुस्तदा ॥ २४२ ॥

नारदः सर्वभूतात्मा भरतानां पितामह ।
उभौ शमयितुं वीरौ भारद्वाजधनंजयौ ॥ २४३ ॥

तौ मुनी सर्वधर्मज्ञौ सर्वभूतहितैषिणौ।
दीप्तयोरस्त्रयोर्मध्ये स्थितौ परमतेजसौ ॥ २४४ ॥

ऋषी०- नानाशास्त्रविदः पूर्वे येऽप्यतीता महारथाः।
नैतदस्त्रं मनुष्येषु तैः प्रयुक्तं कथञ्चन ॥ २४५ ॥
किमिदं साहसं वीरौ कृतवन्तौ महात्ययम् ॥ २४६ ॥

(अ. १५) दृष्ट्वैव नरशार्दूल तावग्निसमतेजसौ।
सञ्जहार शरं दिव्यं त्वरमाणो धनञ्जयः ॥ २४७ ॥

उवाच भरतश्रेष्ठ तावृषी प्राञ्जलिस्तदा।
प्रमुक्तमस्त्रमस्त्रेण शाम्यतामिति वै मया ॥ २४८ ॥

संहृते परमास्त्रेऽस्मिन् सर्वानस्मानशेषतः।
पापकर्मा ध्रुवं द्रौणिः प्रधक्ष्यत्यस्त्रतेजसा ॥ २४९ ॥

यदत्र हितमस्माकं लोकानां चैव सर्वथा।
भवन्तौ देवसङ्काशौ तथा सम्मन्तुमर्हतः ॥ २५० ॥

इत्युक्त्वा सञ्जहारास्त्रं पुनरेव धनञ्जयः।
संहारो दुष्करस्तस्य देवैरपि हि संयुगे ॥ २५१ ॥

अचीर्णब्रह्मचर्यो यः सृष्ट्वाऽऽवर्तयते पुनः।
तदस्त्रं सानुबन्धस्य मूर्धानं तस्य कृन्तति ॥ २५२ ॥

द्रौणिरप्यथ सम्प्रेक्ष्य तावृषी पुरतः स्थितौ।
न शशाक पुनर्घोरमस्त्रं संहर्तुमोजसा ॥ २५३ ॥

अशक्तः प्रतिसंहारे परमास्त्रस्य संयुगे।
द्रौणिर्दीनमना राजन् द्वैपायनमभाषत ॥ २५४ ॥

उत्तमव्यसनार्तेन प्राणत्राणमभीप्सुना।
मयैतदस्त्रमुत्सृष्टं भीमसेनभयान्मुने।
तस्य भूयोऽद्य संहारं कर्तुं नाहमिहोत्सहे ॥ २५५ ॥

विसृष्टं हि मया दिव्यमेतदस्त्रं दुरासदम्।
अपाण्डवायेति मुने वह्नितेजोऽनुमन्त्र्य वै ॥ २५६ ॥

अद्य पाण्डुसुतान् सर्वान् जीविताद्भ्रंशयिष्यति ॥ २५७ ॥

कृतं पापमिदं ब्रह्मन् रोषाविष्टेन चेतसा।
वधमाशास्य पार्थानां मयाऽस्त्रं सृजता रणे॥ २५८॥

व्यास०- अस्त्रमस्त्रेण तु रणे तव संशमयिष्यता।
विसृष्टमर्जुनेनेदं पुनश्च प्रतिसंहृतम्॥ २५९॥

अस्त्रं ब्रह्मशिरो यत्र परमास्त्रेण वध्यते।
समा द्वादश पर्जन्यस्तद्राष्ट्रं नाभिवर्षति॥ २६०॥

पाण्डवास्त्वं च राष्ट्रं च सदा संरक्ष्यमेव हि।
तस्मात्संहर दिव्यं त्वमस्त्रमेतन्महाभुज॥ २६१॥

मणिं चैव प्रयच्छाद्य यस्ते शिरसि तिष्ठति।
एतदादाय ते प्राणान् प्रतिदास्यन्ति पाण्डवाः॥ २६२॥

द्रौणि०- पाण्डवैर्यानि रत्नानि यच्चान्यत् कौरवैर्धनम्।
अवाप्तमिह तेभ्योऽयं मणिर्मम विशिष्यते॥ २६३॥

यमाबध्य भयं नास्ति शस्त्रव्याधिक्षुधाश्रयम्।
एवंवीर्यो मणिरयं न मे त्याज्यः कथञ्चन॥ २६४॥

यत्तु मे भगवानाह तन्मे कार्यमनन्तरम्॥ २६५॥
अयं मणिरयं चाहमीषिका तु पतिष्यति।
गर्भेषु पाण्डवेयानाममोघं चैतदुत्तमम्॥ २६६॥

न च शक्तोऽस्मि भगवन् संहर्तुं पुनरुद्यतम्।
एतदस्त्रमतश्चैव गर्भेषु विसृजाम्यहम्।
न च वाक्यं भगवतो न करिष्ये महामुने॥ २६७॥

व्यास०- एवं कुरु न चान्या तु बुद्धिः कार्या त्वयाऽनघ।
गर्भेषु पाण्डवेयानां विसृज्यैतदुपारम॥ २६८॥

ततः परममस्त्रं तु द्रौणिरुद्यतमाहवे।
द्वैपायनवचः श्रुत्वा गर्भेषु प्रमुमोच ह॥ २६९॥

## अश्वत्थाममणिहरणम्

(अ. १६) तदाज्ञाय हृषीकेशो विसृष्टं पापकर्मणा ।
हृष्यमाण इदं वाक्यं द्रौणिं प्रत्यब्रवीत्तदा ॥ २७० ॥
विराटस्य सुतां पूर्वं स्नुषां गाण्डीवधन्वनः ।
उपप्लव्यगतां दृष्ट्वा व्रतवान् ब्राह्मणोऽब्रवीत् ॥ २७१ ॥
परिक्षीणेषु कुरुषु पुत्रस्तव भविष्यति ।
एतदस्य परिक्षित्त्वं गर्भस्थस्य भविष्यति ॥ २७२ ॥
तस्य तद्वचनं साधोः सत्यमेतद्भविष्यति ।
परिक्षिद्भविता ह्येषां पुनर्वंशकरः सुतः ॥ २७३ ॥
एवं ब्रुवाणं गोविन्दं सात्वतां प्रवरं तदा ।
द्रौणिः परमसंरब्धः प्रत्युवाचेदमुत्तरम् ॥ २७४ ॥
नैतदेवं यथाऽऽत्थ त्वं पक्षपातेन केशव ।
वचनं पुण्डरीकाक्ष न च मद्वाक्यमन्यथा ॥ २७५ ॥
पतिष्यति तदस्त्रं हि गर्भे तस्या मयोद्यतम् ।
विराटदुहितुः कृष्ण यं त्वं रक्षितुमिच्छसि ॥ २७६ ॥

भग०— अमोघः परमास्त्रस्य पातस्तस्य भविष्यति ।
स तु गर्भो मृतो जातो दीर्घमायुरवाप्स्यति ॥ २७७ ॥
त्वां तु कापुरुषं पापं विदुः सर्वे मनीषिणः ।
असकृत्पापकर्माणं बालजीवितघातकम् ॥ २७८ ॥
तस्मात्त्वमस्य पापस्य कर्मणः फलमाप्नुहि ॥ २७९ ॥
त्रीणि वर्षसहस्राणि चरिष्यसि महीमिमाम् ।
अप्राप्नुवन् क्वचित् काञ्चित् संविदं जातु केनचित् ॥२८०॥
निर्जनानसहायस्त्वं देशान् प्रविचरिष्यसि ।
भवित्री न हि ते क्षुद्र जनमध्येषु संस्थितिः ॥ २८१ ॥
पूयशोणितगन्धी च दुर्गकान्तारसंश्रयः ।
विचरिष्यसि पापात्मा सर्वव्याधिसमन्वितः ॥ २८२ ॥

अहं तं जीवयिष्यामि दग्धं शस्त्राग्नितेजसा।
पश्य मे तपसो वीर्यं सत्यस्य च नराधम ॥ २८३ ॥

व्यास०– यस्मादनादृत्य कृत त्वयाऽस्मान् कर्म दारुणम्।
ब्राह्मणस्य सतश्चैव यस्मात्ते वृत्तमीदृशम् ॥ २८४ ॥

तस्माद्यद्देवकीपुत्र उक्तवानुत्तमं वच.।
असंशय ते तद्भावि क्षत्रधर्मस्त्वयाऽऽश्रित. ॥ २८५ ॥

वैश०– प्रदायाथ मणि द्रौणि. पाण्डवानां महात्मनाम्।
जगाम विमनास्तेषां सर्वेषा पश्यतां वनम् ॥ २८६ ॥

ततस्ते पुरुषव्याघ्राः सदश्वैरनिलोपमैः।
अभ्ययु सहदाशार्हा. शिबिरं पुनरेव हि ॥ २८७ ॥

अवतीर्य रथेभ्यस्तु त्वरमाणा महारथा.।
ददृशुर्द्रौपदी दृष्टामार्तामार्ततरा. स्वयम् ॥ २८८ ॥

ततो राज्ञाऽभ्यनुज्ञातो भीमसेनो महाबल.।
प्रददौ तं मणिं दिव्यं वचन चेदमब्रवीत् ॥ २८९ ॥

अयं भद्रे तव मणि. पुत्रहन्तुर्जित. स ते।
उत्तिष्ठ शोकमुत्सृज्य क्षात्रधर्ममनुस्मर ॥ २९० ॥

प्रयाणे वासुदेवस्य शमार्थमसितेक्षणे।
यान्युक्तानि त्वया भीरु वाक्यानि मधुघातिनि ॥ २९१ ॥

नैव मे पतयः सन्ति न पुत्रा भ्रातरो न च।
न वै त्वमिति गोविन्द शममिच्छति राजनि ॥ २९२ ॥

उक्तवत्यसि तीव्राणि वाक्यानि पुरुषोत्तमम्।
क्षत्रधर्मानुरूपाणि तानि संस्मर्तुमर्हसि ॥ २९३ ॥

हतो दुर्योधनः पापो राज्यस्य परिपन्थिकः।
दु.शासनस्य रुधिरं पीतं विस्फुरतो मया ॥ २९४ ॥

वैरस्य गतमानृण्यं न स्म वाच्या विवक्षताम्।
जित्वा मुक्तो द्रोणपुत्रो ब्राह्मण्याद्गौरवेण च ॥ २९५ ॥

द्रौपदी०- केवलानृण्यमाप्तास्मि गुरुपुत्रो गुरुर्मम ।
शिरस्येतं मणिं राजा प्रतिबध्नातु भारत ॥ २९६ ॥
तं गृहीत्वा ततो राजा शिरस्त्येवाऽकरोत्तदा ।
गुरोरुच्छिष्टमित्येव द्रौपद्या वचनादपि ॥ २९७ ॥
ततो दिव्यं मणिवरं शिरसा धारयन् प्रभुः ।
शुशुभे स तदा राजा सचन्द्र इव पर्वतः ॥ २९८ ॥
उत्तस्थौ पुत्रशोकार्ता ततः कृष्णा मनस्विनी ॥ २९९ ॥

भीष्मपर्वतः श्लोकाः ॥ ५५५२ ॥
आदिपर्वतः श्लोका· ॥ १०५४७ ॥

॥ इति श्रीमहाभारतसारे सौप्तिकपर्व समाप्तम् ॥

---

# महाभारतसारः

## ११. स्त्रीपर्व

नारायणं नमस्कृत्य नरं चैव नरोत्तमम्।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्॥

### धृतराष्ट्रविशोककरणम्

(अ. १) हते पुत्रशते दीनं छिन्नशाखमिव द्रुमम्।
वैश०- पुत्रशोकाभिसन्तप्तं धृतराष्ट्रं महीपतिम्॥ १॥
ध्यानमूकत्वमापन्नं चिन्तया समभिप्लुतम्।
अभिगम्य महाराज सञ्जयो वाक्यमब्रवीत्॥ २॥

किं शोचसि महाराज नास्ति शोके सहायता।
अक्षौहिण्यो हताश्चाष्टौ दश चैव विशाम्पते।
सहैव तव पुत्रेण सर्वे वै निधनं गताः॥ ३॥
पितॄणां पुत्रपौत्राणां ज्ञातीनां सुहृदां तथा।
गुरूणां चानुपूर्व्येण प्रेतकार्याणि कारय॥ ४॥

धृत०- किन्नु बन्धुविहीनस्य जीवितेन ममाद्य वै।
लूनपक्षस्य इव मे जराजीर्णस्य पक्षिणः॥ ५॥

न स्मराम्यात्मनः किञ्चित् पुरा सञ्जय दुष्कृतम्।
यस्येदं फलमद्येह मया मूढेन भुज्यते॥ ६॥

नूनं व्यपकृतं किञ्चिन्मया पूर्वेषु जन्मसु।
येन मां दुःखभागेषु धाता कर्मसु युक्तवान्॥ ७॥

तन्मामद्यैव पश्यन्तु पाण्डवाः संशितव्रताः।
विवृतं ब्रह्मलोकस्य दीर्घमध्वानमास्थितम्॥ ८॥

तस्य लालप्यमानस्य बहुशोकं वितन्वतः।
शोकापहं नरेन्द्रस्य सञ्जयो वाक्यमब्रवीत्॥ ९॥

न त्वया सुहृदा वाक्यं ब्रुवतामवधारितम् ।
स्वार्थश्च न कृतः कश्चिल्लुब्धेन फलगृद्धिना ॥ १० ॥

असिनैवैकधारेण स्वबुद्ध्या तु विचेष्टितम् ।
प्रायशोऽवृत्तसम्पन्नाः सततं पर्युपासिता ॥ ११ ॥

आदावेव मनुष्येण वर्तितव्यं यथाक्षमम् ।
यथा नातीतमर्थं वै पश्चात्तापेन युज्यते ॥ १२ ॥

पुत्रगृद्ध्या त्वया राजन् प्रियं तस्य चिकीर्षितम् ।
पश्चात्तापमिमं प्राप्तो न त्वं शोचितुमर्हसि ॥ १३ ॥

मधु यः केवल दृष्ट्वा प्रपातं नानुपश्यति ।
स भ्रष्टो मधुलोभेन शोचत्येवं यथा भवान् ॥ १४ ॥

अर्थान्न शोचन् प्राप्नोति न शोचन्विन्दते फलम् ।
न शोचञ्छ्रियमाप्नोति न शोचन्विन्दते परम् ॥ १५ ॥

स्वयमुत्पादयित्वाऽग्निं वस्त्रेण परिवेष्टयन् ।
दह्यमानो मनस्तापं भजते न स पण्डितः ॥ १६ ॥

त्वयैव ससुतेनायं वाक्यवायुसमीरितः ।
लोभाज्येन च संसिक्तो ज्वलितः पार्थपावकः ॥ १७ ॥

तस्मिन् समिद्धे पतिताः शलभा इव ते सुताः ।
तान् वै शराग्निनिर्दग्धान्न त्वं शोचितुमर्हसि ॥ १८ ॥

(अ. २) ततोऽमृतसमैर्वाक्यैर्ह्लादयन् पुरुषर्षभम् ।
वैश०– वैचित्रवीर्यं विदुरो यदुवाच निबोध तत् ।
विदु०– उत्तिष्ठ राजन् किं शेषे धारयात्मानमात्मना ॥ १९ ॥
एषा वै सर्वसत्त्वानां लोकेश्वर परा गतिः ।
अयुध्यमानो म्रियते युध्यमानश्च जीवति ।
कालं प्राप्य महाराज न कश्चिदतिवर्तते ॥ २० ॥

अभावादीनि भूतानि भावमध्यानि भारत ।
अभावनिधनान्येव तत्र का परिदेवना ॥ २१ ॥

न शोचन्मृतमन्वेति न शोचन् म्रियते नरः।
एवं सांसिद्धिके लोके किमर्थमनुशोचसि ॥ २२ ॥
यथा वायुस्तृणाग्राणि संवर्तयति सर्वशः।
तथा कालवशं यान्ति भूतानि भरतर्षभ ॥ २३ ॥
एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम्।
यस्य कालः प्रयात्यग्रे तत्र का परिदेवना ॥ २४ ॥
न चाप्येतान्हतान्युद्धे राजञ्शोचितुमर्हसि।
प्रमाणं यदि शास्त्राणि गतास्ते परमां गतिम् ॥ २५ ॥
अदर्शनादापतिताः पुनश्चादर्शनं गताः।
नैते तव न तेषां त्वं तत्र का परिदेवना ॥ २६ ॥
न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया।
स्वर्गं यान्ति तथा मर्त्या यथा शूरा रणे हताः ॥ २७ ॥
आत्मानमात्मनाऽऽश्वास्य मा शुचः पुरुषर्षभ।
नाद्य शोकाभिभूतस्त्वं कायमुत्स्रष्टुमर्हसि ॥ २८ ॥
मातापितृसहस्राणि पुत्रदारशतानि च।
संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् ॥ २९ ॥
न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम।
न मध्यस्थः क्वचित्कालः सर्वं कालः प्रकर्षति ॥ ३० ॥
कालः पचति भूतानि कालः संहरते प्रजाः।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ ३१ ॥
अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः।
आरोग्यं प्रियसंवासो गृद्ध्येदेषु न पण्डितः ॥ ३२ ॥
न जानपदिकं दुःखमेकः शोचितुमर्हसि।
अप्यभावेन युज्येत तच्चास्य न निवर्तते ॥ ३३ ॥
अशोचन् प्रतिकुर्वीत यदि पश्येत् पराक्रमम् ॥ ३४ ॥

भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत्।
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते ॥ ३५ ॥
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः।
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥ ३६ ॥
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः।
आत्मैव ह्यात्मनः साक्षी कृतस्याऽपकृतस्य च ॥ ३७ ॥
शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा।
कृतं भवति सर्वत्र नाकृतं विद्यते क्वचित् ॥ ३८ ॥
न हि ज्ञानविरुद्धेषु बह्वपायेषु कर्मसु।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ ३९ ॥
(अ ३) यतो यतो मनो दुःखात् सुखाद्वा विप्रमुच्यते।
ततस्ततो नियम्यैतच्छान्तिं विन्देत वै बुधः ॥ ४० ॥
अशाश्वतमिदं सर्वं चिन्त्यमानं नरर्षभ।
कदलीसन्निभो लोकः सारो ह्यस्य न विद्यते ॥ ४१ ॥
गृहाणीव हि मर्त्यानामाहुर्देहानि पण्डिताः।
कालेन विनियुज्यन्ते सत्त्वमेकं तु शाश्वतम् ॥ ४२ ॥
यथा जीर्णमजीर्णं वा वस्त्रं त्यक्त्वा तु पूरुषः।
अन्यद्रोचयते वस्त्रमेवं देहाः शरीरिणाम् ॥ ४३ ॥
प्राक्कर्मभिस्तु भूतानि भवन्ति न भवन्ति च।
एवं सांसिद्धिके लोके किमर्थमनुतप्यसे ॥ ४४ ॥
यथा तु सलिलं राजन् क्रीडार्थमनुसन्तरत्।
उन्मज्जेच्च निमज्जेच्च किञ्चित् सत्त्वं नराधिप ॥ ४५ ॥
एवं संसारगहने उन्मज्जननिमज्जने।
कर्मभोगेन बध्यन्ते क्लिश्यन्ते चाल्पबुद्धयः ॥ ४६ ॥
ये तु प्राज्ञाः स्थिताः सत्त्वे संसारेऽस्मिन् हितैषिणः।
समागमज्ञा भूतानां ते यान्ति परमां गतिम् ॥ ४७ ॥

## धृतराष्ट्रस्य पुरान्निर्गमनम् , कृपादीनां दर्शनम्

(अ.१०) विदुरस्य तु तद्वाक्यं श्रुत्वा तु पुरुषर्षभ.।
युज्यतां यानमित्युक्त्वा पुनर्वचनमब्रवीत् ॥ ४८ ॥
शीघ्रमानय गान्धारीं सर्वाश्च भरतस्त्रियः।
वधूं कुन्तीमुपादाय याश्चाऽन्यास्तत्र योषितः ॥ ४९ ॥
एवमुक्त्वा स धर्मात्मा विदुरं धर्मवित्तमम्।
शोकविप्रहतज्ञानो यानमेवान्वपद्यत ॥ ५० ॥
गान्धारी पुत्रशोकार्ता भर्तुर्वचननोदिता।
सह कुन्त्या यतो राजा सह स्त्रीभिरुपाद्रवत् ॥ ५१ ॥
ताः समासाद्य राजानं भृशं शोकसमन्विता.।
आमन्त्र्याऽन्योन्यमीयु स्म भृशमुच्चुक्रुशुस्ततः ॥ ५२ ॥
ताः समाश्वासयत् क्षत्ता ताभ्यश्चार्ततर. स्वयम्।
अश्रुकण्ठीः समारोप्य ततोऽसौ निर्ययौ पुरात् ॥ ५३ ॥
ततः प्रणादः सञ्जज्ञे सर्वेषु कुरुवेश्मसु।
आकुमारं पुरं सर्वमभवच्छोककर्षितम् ॥ ५४ ॥
अदृष्टपूर्वा या नार्यः पुरा देवगणैरपि।
पृथग्जनेन दृश्यन्ते तास्तदा निहतेश्वरा. ॥ ५५ ॥
प्रकीर्य केशान् सुशुभान् भूषणान्यवमुच्य च।
एकवस्त्रधरा नार्य. परिपेतुरनाथवत् ॥ ५६ ॥
श्वेतपर्वतरूपेभ्यो गृहेभ्यस्तास्त्वपाक्रमन्।
गुहाभ्य इव शैलानां पृषत्यो हतयूथपाः ॥ ५७ ॥
व्रीडाजग्मु पुरा याः स्म सखीनामपि योषितः।
ता एकवस्त्रा निर्लज्जा श्वश्रूणां पुरतोऽभवन् ॥ ५८ ॥
ताभिः परिवृतो राजा रुदतीभिः सहस्रशः।
निर्ययौ नगराद्दीनस्तूर्णमायोधनं प्रति ॥ ५९ ॥

शिल्पिनो वणिजो वैश्याः सर्वकर्मोपजीविनः।
ते पार्थिवं पुरस्कृत्य निर्ययुर्नगराद्बहि ॥ ६० ॥

(अ. ११) क्रोशमात्रं ततो गत्वा ददृशुस्तान् महारथान्।
शारद्वतं कृपं द्रौणिं कृतवर्माणमेव च ॥ ६१ ॥

ते तु दृष्ट्वैव राजान प्रज्ञाचक्षुषमीश्वरम्।
अश्रुकण्ठा विनिःश्वस्य रुदन्तमिदमब्रुवन् ॥ ६२ ॥

पुत्रस्तव महाराज कृत्वा कर्म सुदुष्करम्।
गत. सानुचरो राजञ्शक्रलोकं महीपते ॥ ६३ ॥

दुर्योधनबलान्मुक्ता वयमेव त्रयो रथाः।
सर्वमन्यत् परिक्षीणं सैन्यं ते भरतर्षभ ॥ ६४ ॥

इत्येवमुक्त्वा राजान कृत्वा चाभिप्रदक्षिणम्।
कृपश्च कृतवर्मा च द्रोणपुत्रश्च भारत।
आमन्त्र्याऽन्योन्यमुद्विग्नास्त्रिधा ते प्रययुस्तदा ॥ ६५ ॥

जगाम हास्तिनपुरं कृपः शारद्वतस्तदा।
स्वमेव राष्ट्रं हार्दिक्यो द्रौणिर्व्यासाश्रमं ययौ ॥ ६६ ॥

समासाद्याथ वै द्रौणिं पाण्डुपुत्रा महारथाः।
व्यजयंस्ते रणे राजन् विक्रम्य तदनन्तरम् ॥ ६७ ॥

## भीमप्रतिमाभञ्जनम्

(अ. १२) हतेषु सर्वसैन्येषु धर्मराजो युधिष्ठिरः।
शुश्रुवे पितरं वृद्धं निर्यान्तं गजसाह्वयात् ॥ ६८ ॥

सोऽभ्ययात् पुत्रशोकार्तः पुत्रशोकपरिप्लुतम्।
शोचमानं महाराज भ्रातृभिः सहितस्तदा ॥ ६९ ॥

अन्वीयमानो वीरेण दाशार्हेण महात्मना।
युयुधानेन च तथा तथैव च युयुत्सुना ॥ ७० ॥

तमन्वगात् सुदुःखार्ता द्रौपदी शोककर्शिता।
सह पाञ्चालयोषिद्भिर्यास्तत्रासन् समागताः ॥ ७१ ॥

स गङ्गामनु वृन्दानि स्त्रीणां भरतसत्तम ।
कुररीणामिवार्तानां क्रोशन्तीनां ददर्श ह ॥ ७२ ॥

अतीत्य ता महाबाहुः क्रोशन्तीः कुररीरिव ।
ववन्दे पितरं ज्येष्ठं धर्मराजो युधिष्ठिरः ॥ ७३ ॥

ततोऽभिवाद्य पितरं धर्मेणामित्रकर्षणाः ।
न्यवेदयन्त नामानि पाण्डवास्तेऽपि सर्वशः ॥ ७४ ॥

तमात्मजान्तकरणं पिता पुत्रवधार्दित ।
अप्रीयमाणः शोकार्तः पाण्डवं परिषस्वजे ॥ ७५ ॥

धर्मराजं परिष्वज्य सान्त्वयित्वा च भारत ।
दुष्टात्मा भीममन्वैच्छद्दिधक्षुरिव पावकः ॥ ७६ ॥

तस्य सङ्कल्पमाज्ञाय भीमं प्रत्यशुभं हरिः ।
भीममाक्षिप्य पाणिभ्यां प्रददौ भीममायसम् ॥ ७७ ॥

प्रागेव तु महाबुद्धिर्बुद्ध्वा तस्येङ्गितं हरिः ।
संविधानं महाप्राज्ञस्तत्र चक्रे जनार्दन. ॥ ७८ ॥

तं गृहीत्वैव पाणिभ्यां भीमसेनमयस्मयम् ।
बभञ्ज बलवान् राजा मन्यमानो वृकोदरम् ॥ ७९ ॥

नागायुतबलप्राणः स राजा भीममायसम् ।
भङ्क्त्वा विमथितोरस्कः सुस्राव रुधिरं मुखात् ॥ ८० ॥

तत पपात मेदिन्यां तथैव रुधिरोक्षित. ।
प्रपुष्पिताग्रशिखरः पारिजात इव द्रुमः ॥ ८१ ॥

प्रत्यगृह्णाच्च तं विद्वान् सूतो गावल्गणिस्तदा ।
मैवमित्यब्रवीच्चैनं शमयन् सान्त्वयन्निव ॥ ८२ ॥

स तु कोपं समुत्सृज्य गतमन्युर्महामनाः ।
हा हा भीमेति चुक्रोश नृपः शोकसमन्वितः ॥ ८३ ॥

तं विदित्वा गतक्रोधं भीमसेनवधार्दितम् ।
वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ॥ ८४ ॥

मा शुचो धृतराष्ट्र त्वं नैष भीमस्त्वया हत ।
आयसी प्रतिमा ह्येषा त्वया निष्पातिता विभो ॥ ८५ ॥

त्वां क्रोधवशमापन्नं विदित्वा भरतर्षभ ।
मयाऽपकृष्ट. कौन्तेयो मृत्योर्दंष्ट्रान्तरं गतः ॥ ८६ ॥

यथाऽन्तकमनुप्राप्य जीवन् कश्चिन्न मुच्यते ।
एवं बाह्वन्तरं प्राप्य तव जीवेन्न कश्चन ॥ ८७ ॥

तस्मात्पुत्रेण या तेऽसौ प्रतिमा कारिताऽऽयसी ।
भीमस्य सेयं कौरव्य तवैवोपहृता मया ॥ ८८ ॥

पुत्रशोकाभिसन्तप्तं धर्मादपकृतं मनः ।
तव राजेन्द्र तेन त्वं भीमसेनं जिघांससि ॥ ८९ ॥

न त्वेतत्ते क्षमं राजन् हन्यास्त्वं यद्वृकोदरम् ।
न हि पुत्रा महाराज जीवेयुस्ते कथञ्चन ॥ ९० ॥

(अ.१३) उक्तवांस्त्वां तदैवाह भीष्मद्रोणौ च भारत ।
विदुरः सञ्जयश्चैव वाक्यं राजन्न तत्कृथाः ॥ ९१ ॥

स वार्यमाणो नास्माकमकार्षीर्वचनं तदा ।
पाण्डवानधिकाञ्जानन् बले शौर्ये च कौरव ॥ ९२ ॥

राजा हि य. स्थिरप्रज्ञः स्वयं दोषानवेक्षते ।
देशकालविभागं च परं श्रेयः स विन्दति ॥ ९३ ॥

उच्यमानस्तु यः श्रेयो गृह्णीते नो हिताऽहिते ।
आपदः समनुप्राप्य स शोचत्यनये स्थितः ॥ ९४ ॥

ततोऽन्यवृत्तमात्मानं समवेक्षस्व भारत ॥ ९५ ॥
राजंस्त्वं ह्यविधेयात्मा दुर्योधनवशे स्थितः ।
आत्मापराधादापन्नस्तत्किं भीमं जिघांससि ॥ ९६ ॥

तस्मात् संयच्छ कोपं त्वं स्वमनुस्मर दुष्कृतम् ॥ ९७ ॥
यस्तु तां स्पर्धया क्षुद्रः पाञ्चालीमानयत् सभाम् ।
स हतो भीमसेनेन वैरं प्रतिजिहीर्षता ॥ ९८ ॥

आत्मनोऽतिक्रमं पश्य पुत्रस्य च दुरात्मनः।
यदनागसि पाण्डूनां परित्यागस्त्वया कृतः॥ ९९॥

वैश०- एवमुक्तः स कृष्णेन सर्वं सत्यं जनाधिप।
उवाच देवकीपुत्रं धृतराष्ट्रो महीपतिः॥ १००॥

एवमेतन्महाबाहो यथा वदसि माधव।
पुत्रस्नेहस्तु बलवान् धैर्यान्मां समचालयत्॥ १०१॥

दिष्ट्या तु पुरुषव्याघ्रो बलवान् सत्यविक्रमः।
त्वद्गुप्तो नागमत्कृष्ण भीमो बाह्वन्तरं मम॥ १०२॥

इदानीं त्वहमव्यग्रो गतमन्युर्गतज्वरः।
मध्यमं पाण्डवं वीरं द्रष्टुमिच्छामि माधव॥ १०३॥

हतेषु पार्थिवेन्द्रेषु पुत्रेषु निहतेषु च।
पाण्डुपुत्रेषु वै शर्म प्रीतिश्चाप्यवतिष्ठते॥ १०४॥

ततः स भीमं च धनञ्जयं च
माद्र्याश्च पुत्रौ पुरुषप्रवीरौ।
पस्पर्श गात्रैः प्ररुदन् सुगात्रा-
नाश्वास्य कल्याणमुवाच चैतान्॥ १०५॥

(अ. १४) धृतराष्ट्राभ्यनुज्ञातास्ततस्ते कुरुपाण्डवाः।
अभ्ययुर्भ्रातरः सर्वे गान्धारीं सहकेशवाः॥ १०६॥

ततो ज्ञात्वा हतामित्रं युधिष्ठिरमुपागतम्।
गान्धारी पुत्रशोकार्ता शप्तुमैच्छदनिन्दिता॥ १०७॥

तस्याः पापमभिप्रायं विदित्वा पाण्डवान् प्रति।
ऋषिः सत्यवतीपुत्रः प्रागेव समबुध्यत॥ १०८॥

स स्नुषामब्रवीत्काले कल्यवादी महातपाः।
शापकालमवाक्षिप्य शमकालमुदीरयन्॥ १०९॥

न कोपः पाण्डवे कार्यो गान्धारि शममाप्नुहि।
वचो निगृह्यतामेतच्छृणु चेदं वचो मम॥ ११०॥

उक्ताऽस्यष्टादशाहानि पुत्रेण जयमिच्छता ।
शिवमाशास्व मे मातर्युध्यमानस्य शत्रुभिः ॥ १११ ॥

सा तथा याच्यमाना त्वं काले काले जयैषिणा ।
उक्तवत्यसि गान्धारि यतो धर्मस्ततो जयः ॥ ११२ ॥

क्षमाशीला पुरा भूत्वा साऽद्य न क्षमसे कथम् ।
अधर्मं जहि धर्मज्ञे यतो धर्मस्ततो जयः ॥ ११३ ॥

स्वं च धर्मं परिस्मृत्य वाचं चोक्तां मनस्विनि ।
कोपं संयच्छ गान्धारि मैवं भूः सत्यवादिनि ॥ ११४ ॥

गान्धा०–भगवन्नाभ्यसूयामि नैतानिच्छामि नश्यत ।
पुत्रशोकेन तु बलान्मनो विह्वलतीव मे ॥ ११५ ॥

यथैव कुन्त्या कौन्तेया रक्षितव्यास्तथा मया ।
तथैव धृतराष्ट्रेण रक्षितव्या यथा त्वया ॥ ११६ ॥

नापराध्यति बीभत्सुर्न च पार्थो वृकोदरः ।
नकुलः सहदेवश्च नैव जातु युधिष्ठिरः ॥ ११७ ॥

युध्यमाना हि कौरव्या कृतमानाः परस्परम् ।
निहताः सहिताश्चान्यैस्तत्र नास्त्यप्रियं मम ॥ ११८ ॥

किन्तु कर्माऽकरोद्भीमो वासुदेवस्य पश्यतः ।
अधो नाभ्याः प्रहृतवांस्तन्मे कोपमवर्धयत् ॥ ११९ ॥

## गान्धारीभीमसंवादः, युधिष्ठिरस्य कुनखित्वम्

(अ. १५) तच्छ्रुत्वा वचनं तस्या भीमसेनोऽथ भीतवत् ।
गान्धारीं प्रत्युवाचेदं वचः सानुनयं तदा ॥ १२० ॥

अधर्मो यदि वा धर्मस्त्रासात्तत्र मया कृतः ।
आत्मानं त्रातुकामेन तन्मे त्वं क्षन्तुमर्हसि ॥ १२१ ॥

अधर्मेण जितः पूर्वं तेन चापि युधिष्ठिरः ।
निकृताश्च सदैव स्म ततो विषममाचरम् ॥ १२२ ॥

सैन्यस्यैकोऽवशिष्टोऽयं गदायुद्धेन वीर्यवान् ।
मां हत्वा न हरेद्राज्यमिति वै तत्कृतं मया ॥ १२३ ॥

राजपुत्रीं च पाञ्चालीमेकवस्त्रां रजस्वलाम् ।
भवत्या विदितं सर्वमुक्तवान्यत्सुतस्तव ॥ १२४ ॥

सुयोधनमसङ्गृह्य न शक्या भूः ससागरा ।
केवला भोक्तुमस्माभिरतश्चैतत्कृतं मया ॥ १२५ ॥

तथाप्यप्रियमस्माकं पुत्रस्ते समुपाचरत् ।
द्रौपद्या यत्सभामध्ये सव्यमूरुमदर्शयत् ॥ १२६ ॥

तदैव वध्यः सोऽस्माकं दुराचारश्च ते सुतः ।
धर्मराजाज्ञया चैव स्थिताः स्म समये तदा ॥ १२७ ॥

वैरमुद्दीपितं राज्ञि पुत्रेण तव तन्महत् ।
क्लेशिताश्च वने नित्यं तत एतत् कृतं मया ॥ १२८ ॥

वैरस्यास्य गताः पारं हत्वा दुर्योधनं रणे ।
राज्यं युधिष्ठिरः प्राप्तो वयं च गतमन्यवः ॥ १२९ ॥

गान्धा०–न तस्यैष वधस्तात यत् प्रशंससि मे सुतम् ।
कृतवांश्चापि तत् सर्वं यदिदं भाषसे मयि ॥ १३० ॥

अपिबः शोणितं सङ्ख्ये दुःशासनशरीरजम् ।
क्रूरं कर्माऽकृथास्तस्मात्तदयुक्तं वृकोदर ॥ १३१ ॥

भीम०– अन्यस्यापि न पातव्यं रुधिरं किं पुनः स्वकम् ।
यथैवात्मा तथा भ्राता विशेषो नास्ति कश्चन ॥ १३२ ॥

रुधिरं न व्यतिक्रामदन्तोष्ठादम्ब मा शुचः ।
वैवस्वतस्तु तद्वेद हस्तौ मे रुधिरोक्षितौ ॥ १३३ ॥

केशपक्षपरामर्शे द्रौपद्या द्यूतकारिते ।
क्रोधाद्यदब्रुवं चाहं तच्च मे हृदि वर्तते ॥ १३४ ॥

क्षत्रधर्माच्च्युतो राज्ञि भवेयं शाश्वतीः समाः ।
प्रतिज्ञां तामनिस्तीर्य ततस्तत् कृतवानहम् ॥ १३५ ॥

न मामर्हसि गान्धारि दोषेण परिशङ्कितुम् ॥ १३६ ॥
अनिगृह्य पुरा पुत्रानस्मास्वनपकारिषु ।
अधुना किं नु दोषेण परिशङ्कितुमर्हसि ॥ १३७ ॥

गान्धा०–वृद्धस्यास्य शतं पुत्रान्निघ्नंस्त्वमपराजितः ।
कस्मान्न शेषयेः किञ्चिद्येनाल्पमपराधितम् ॥ १३८ ॥
सन्तानमावयोस्तात वृद्धयोर्हृतराज्ययोः ।
कथमन्धद्वयस्यास्य यष्टिरेका न वर्जिता ॥ १३९ ॥
शेषे ह्यवस्थिते तात पुत्राणामन्तके त्वयि ।
न मे दुःखं भवेदेतद्यदि त्वं धर्ममाचरेः ॥ १४० ॥

वैश०– एवमुक्त्वा तु गान्धारी युधिष्ठिरमपृच्छत ।
क स राजेति सक्रोधा पुत्रपौत्रवधार्दिता ॥ १४१ ॥
तामभ्यगच्छद्राजेन्द्रो वेपमानः कृताञ्जलिः ।
युधिष्ठिरस्त्विदं तत्र मधुरं वाक्यमब्रवीत् ॥ १४२ ॥
पुत्रहन्ता नृशंसोऽहं तव देवि युधिष्ठिरः ।
शापार्हः पृथिवीनाशे हेतुभूतः शपस्व माम् ॥ १४३ ॥
तमेवंवादिनं भीत सन्निकर्षगतं तदा ।
नोवाच किंचिद्गान्धारी निःश्वासपरमा भृशम् ॥ १४४ ॥
तस्यावनतदेहस्य पादयोर्निपतिष्यतः ।
युधिष्ठिरस्य नृपतेर्धर्मज्ञा दीर्घदर्शिनी ॥ १४५ ॥
अङ्गुल्यग्राणि ददृशे देवी पट्टान्तरेण सा ।
ततः स कुनखीभूतो दर्शनीयनखो नृपः ॥ १४६ ॥
तं दृष्ट्वा चार्जुनोऽगच्छद्वासुदेवस्य पृष्ठतः ॥ १४७ ॥
एवं सञ्चेष्टमानांस्तानितश्चेतश्च भारत ।
गान्धारी विगतक्रोधा सान्त्वयामास मातृवत् ॥ १४८ ॥
तया ते समनुज्ञाता मातरं वीरमातरम् ।
अभ्यगच्छन्त सहिताः पृथां पृथुलवक्षसः ॥ १४९ ॥

चिरस्य दृष्ट्वा पुत्रान् सा पुत्राधिभिरभिप्लुता।
बाष्पमाहारयद्देवी वस्त्रेणावृत्य वै मुखम्॥ १५०॥

ततो बाष्पं समुत्सृज्य सह पुत्रैस्तदा पृथा।
अपश्यदेताञ्शस्त्रौघैर्बहुधा क्षतविक्षतान्॥ १५१॥

सा तानेकैकशः पुत्रान् संस्पृशन्ती पुनः पुनः।
अन्वशोचत दुःखार्ता द्रौपदीं च हतात्मजाम्॥ १५२॥

रुदतीमथ पाञ्चालीं ददर्श पतितां भुवि॥ १५३॥

द्रौपदी०-आर्ये पुत्राः क्व ते सर्वे सौभद्रसहिता गताः।
न त्वां तेऽद्याभिगच्छन्ति चिरं दृष्ट्वा तपस्विनीम्॥ १५४॥
किं नु राज्येन वै कार्यं विहीनायाः सुतैर्मम॥ १५५॥

तां समाश्वासयामास पृथा पृथुललोचना।
उत्थाप्य याज्ञसेनीं तु रुदतीं शोककार्शिताम्॥ १५६॥

तथैव सहिता चापि पुत्रैरनुगता नृप।
अभ्यगच्छत गान्धारीमार्तामार्ततरा स्वयम्॥ १५७॥

तामुवाचाथ गान्धारी सह वध्वा यशस्विनीम्।
मैवं पुत्रीति शोकार्ता पश्य मामपि दुःखिताम्॥ १५८॥

मन्ये लोकविनाशोऽयं कालपर्यायनोदितः।
अवश्यभावी सम्प्राप्तः स्वभावाल्लोमहर्षणः॥ १५९॥

इदं तत् समनुप्राप्तं विदुरस्य वचो महत्।
असिद्धानुनये कृष्णे यदुवाच महामतिः॥ १६०॥

तस्मिन्नपरिहार्येऽर्थे व्यतीते च विशेषतः।
मा शुचो न हि शोच्यास्ते सङ्ग्रामे निधनं गताः॥ १६१॥

यथैवाहं तथैव त्वं को वा माश्वासयिष्यति।
ममैव ह्यपराधेन कुलमग्र्यं विनाशितम्॥ १६२॥

## गान्धार्याः विलापः श्रीकृष्णशापश्च

(अ. १६) ततो व्यासाभ्यनुज्ञातो धृतराष्ट्रो महीपति ।
पाण्डुपुत्राश्च ते सर्वे युधिष्ठिरपुरोगमाः ॥ १६३ ॥
वासुदेवं पुरस्कृत्य हतबन्धुं च पार्थिवम् ।
कुरुस्त्रियः समासाद्य जग्मुरायोधनं प्रति ॥ १६४ ॥
समासाद्य कुरुक्षेत्रं ताः स्त्रियो निहतेश्वराः ।
अपश्यन्त हतांस्तत्र पुत्रान् भ्रातॄन् पितॄन् पतीन् ॥ १६५ ॥
क्रव्यादैर्भक्ष्यमाणान् वै गोमायुबलवायसैः ।
भूतैः पिशाचै रक्षोभिर्विविधैश्च निशाचरैः ॥ १६६ ॥
रुद्राक्रीडनिभं दृष्ट्वा तदा विशसनं स्त्रियः ।
महार्हेभ्योऽथ यानेभ्यो विक्रोशन्त्यो निपेतिरे ॥ १६७ ॥
(अ. १७) दुर्योधनं हतं दृष्ट्वा गान्धारी शोककर्शिता ।
सहसा न्यपतद्भूमौ छिन्नेव कदली वने ॥ १६८ ॥
सा तु लब्ध्वा पुन संज्ञां विक्रुश्य च विलप्य च ।
दुर्योधनमभिप्रेक्ष्य शयानं रुधिरोक्षितम् ।
परिष्वज्य च गान्धारी कृपणं पर्यदेवयत् ॥ १६९ ॥
वारिणा नेत्रजेनोरः सिञ्चन्ती शोकतापिता ।
समीपस्थं हृषीकेशमिदं वचनमब्रवीत् ॥ १७० ॥
अपश्यं कृष्ण पृथिवीं धार्तराष्ट्रानुशासिताम् ।
तामेवाद्य महाबाहो पश्याम्यन्यानुशासिताम् ॥ १७१ ॥
इदं कष्टतरं पश्य पुत्रस्यापि वधान्मम ।
यदिमाः पर्युपासन्ते हताञ्शूरान् रणे स्त्रियः ॥ १७२ ॥
प्रकीर्णकेशां सुश्रोणीं दुर्योधनशुभाङ्कगाम् ।
रुक्मवेदीनिभां पश्य कृष्ण लक्ष्मणमातरम् ॥ १७३ ॥
नूनमेषा पुरा बाला जीवमाने महीभुजे ।
भुजावाश्रित्य रमते सुभुजस्य मनस्विनी ॥ १७४ ॥

कथं तु शतधा नेदं हृदयं मम दीर्यते।
पश्यन्त्या निहतं पुत्रं पुत्रेण सहित रणे ॥ १७५ ॥

पुत्रं रुधिरसंसिक्तमुपजिघ्रत्यनिन्दिता।
दुर्योधनं तु वामोरूः पाणिना परिमार्जती ॥ १७६ ॥

किं नु शोचति भर्तारं पुत्रं चैषा मनस्विनी।
तथा ह्यवस्थिता भाति पुत्रं चाप्यभिवीक्ष्य सा ॥ १७७ ॥

स्वशिरः पञ्चशाखाभ्यामभिहत्यायतेक्षणा।
पतत्युरसि वीरस्य कुरुराजस्य माधव ॥ १७८ ॥

पुण्डरीकनिभा भाति पुण्डरीकान्तरप्रभा।
मुखं विमृज्य पुत्रस्य भर्तुश्चैव तपस्विनी ॥ १७९ ॥

(अ. १८) पश्य माधव पुत्रान् मे शतसङ्ख्याञ्जितक्लमान्।
गदया भीमसेनेन भूयिष्ठं निहतान् रणे ॥ १८० ॥

इदं दुःखतरं मेऽद्य यदिमा मुक्तमूर्धजाः।
हतपुत्रा रणे बालाः परिधावन्ति मे स्नुषाः ॥ १८१ ॥

पूर्वजातिकृतं पापं मन्ये नाल्पमिवानघ।
एताभिर्निरवद्याभिर्मया चैवाऽल्पमेधया ॥ १८२ ॥

(अ. २४) सोमदत्तसुतं पश्य युयुधानेन पातितम्।
वितुद्यमानं विहगैर्बहुभिर्माधवाऽन्तिके ॥ १८३ ॥

भार्या यूपध्वजस्यैषा करसम्मितमध्यमा।
कृत्वोत्सङ्गे भुजं भर्तुः कृपणं परिदेवति ॥ १८४ ॥

अयं स हन्ता शूराणां मित्राणामभयप्रदः।
प्रदाता गोसहस्राणां क्षत्रियान्तकरः करः ॥ १८५ ॥

अयं स रसनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ १८६ ॥

वासुदेवस्य सान्निध्ये पार्थेनाक्लिष्टकर्मणा।
युध्यतः समरेऽन्येन प्रमत्तस्य निपातितः ॥ १८७ ॥

किं नु वक्ष्यसि संसत्सु कथासु च जनार्दन।
अर्जुनस्य महत्कर्म स्वयं वा स किरीटभृत् ॥ १८८ ॥
इत्येवं गर्हयित्वैषा तूष्णीमास्ते वराङ्गना।
तामेतामनुशोचन्ति सपत्न्यः स्वामिव स्नुषाम् ॥ १८९ ॥
(अ. २५) ये हन्युः शस्त्रवेगेन देवानपि नरर्षभाः।
त इमे निहता· सङ्ख्ये पश्य कालस्य पर्ययम् ॥ १९० ॥
नातिभारोऽस्ति दैवस्य ध्रुवं माधव कश्चन।
यदिमे निहताः शूराः क्षत्रियैः क्षत्रियर्षभाः ॥ १९१ ॥
तदैव निहताः कृष्ण मम पुत्रास्तरस्विन·।
यदैवाकृतकामस्त्वमुपप्लव्य गतः पुनः ॥ १९२ ॥
शन्तनोश्चैव पुत्रेण प्राज्ञेन विदुरेण च।
तदैवोक्ताऽस्मि मा स्नेहं कुरुष्वात्मसुतेष्विति ॥ १९३ ॥
तयोर्हि दर्शनं नैतन्मिथ्या भवितुमर्हति।
अचिरेणैव मे पुत्रा भस्मीभूता जनार्दन ॥ १९४ ॥
वैश०- इत्युक्त्वा न्यपतद्भूमौ गान्धारी शोकमूर्च्छिता।
दुःखोपहतविज्ञाना धैर्यमुत्सृज्य भारत ॥ १९५ ॥
तत कोपपरीताङ्गी पुत्रशोकपरिप्लुता।
जगाम शौरिं दोषेण गान्धारी व्यथितेन्द्रिया ॥ १९६ ॥
गान्धा०-पाण्डवा धार्तराष्ट्राश्च दग्धाः कृष्ण परस्परम्।
उपेक्षिता विनश्यन्तस्त्वया कस्माज्जनार्दन ॥ १९७ ॥
शक्तेन बहुभृत्येन विपुले तिष्ठता बले।
उभयत्र समर्थेन श्रुतवाक्येन चैव ह ॥ १९८ ॥
इच्छतोपेक्षितो नाशः कुरूणां मधुसूदन।
यस्मात्त्वया महाबाहो फलं तस्मादवाप्नुहि ॥ १९९ ॥
यस्मात् परस्परं घ्नन्तो ज्ञातयः कुरुपाण्डवाः।
उपेक्षितास्ते गोविन्द तस्माज्ज्ञातीन् वधिष्यसि ॥ २०० ॥
त्वमप्युपस्थिते वर्षे षट्त्रिंशे मधुसूदन।
हतज्ञातिर्हतामात्यो हतपुत्रो वनेचरः ॥ २०१ ॥

अनाथवदविज्ञातो लोकेष्वनभिलक्षितः।
कुत्सितेनाभ्युपायेन निधनं समवाप्स्यसि ॥ २०२ ॥
तवाप्येवं हतसुता निहतज्ञातिबान्धवा।
स्त्रियः परिपतिष्यन्ति यथैता भरतस्त्रियः ॥ २०३ ॥
वैश०- तच्छ्रुत्वा वचनं घोरं वासुदेवो महामनाः।
उवाच देवीं गान्धारीमीषदभ्युत्स्मयन्निव ॥ २०४ ॥
जानेऽहमेतदप्येवं चीर्णं चरसि क्षत्रिये।
दैवादेव विनश्यन्ति वृष्णयो नात्र संशयः।
संहर्ता वृष्णिचक्रस्य नान्यो मद्विद्यते शुभे ॥ २०५ ॥
अवध्यास्ते नरैरन्यैरपि वा देवदानवैः।
परस्परकृतं नाशं यतः प्राप्स्यन्ति यादवाः ॥ २०६ ॥
इत्युक्तवति दाशार्हे पाण्डवास्त्रस्तचेतसः।
बभूवुर्भृशसंविग्ना निराशाश्चापि जीविते ॥ २०७ ॥
(अ. २६) उत्तिष्ठोत्तिष्ठ गान्धारि मा च शोके मनः कृथाः।
श्रीभग०-तवैव ह्यपराधेन कुरवो निधनं गताः ॥ २०८ ॥
यत्त्वं पुत्रं दुरात्मानमीर्षुमत्यन्तमानिनम्।
दुर्योधनं पुरस्कृत्य दुष्कृतं साधु मन्यसे ॥ २०९ ॥
निष्ठुरं वैरपुरुषं वृद्धानां शासनातिगम्।
कथमात्मकृतं दोषं मय्याधातुमिहेच्छसि ॥ २१० ॥
मृतं वा यदि वा नष्टं योऽतीतमनुशोचति।
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ २११ ॥
तपोर्थीयं ब्राह्मणी धत्त गर्भं
गौर्वोढारं धावितारं तुरङ्गी।
शूद्रा दासं पशुपालं च वैश्या
वधार्थीयं क्षत्रिया राजपुत्री ॥ २१२ ॥
वैश०- तच्छ्रुत्वा वासुदेवस्य पुनरुक्तं वचोऽप्रियम्।
तूष्णीं बभूव गान्धारी शोकव्याकुललोचना ॥ २१३ ॥

## युद्धे हतानां सङ्ख्या, कर्णादिसर्वेषामौर्ध्वदैहिकम्

धृतराष्ट्रस्तु राजर्षिर्निगृह्याबुद्धिजं तमः।
पर्यपृच्छत धर्मज्ञो धर्मराजं युधिष्ठिरम् ॥ २१४ ॥

जीवतां परिमाणज्ञः सैन्यानामसि पाण्डव।
हतानां यदि जानीषे परिमाणं वदस्व मे ॥ २१५ ॥

युधि०- दशायुतानामयुतं सहस्राणि च विंशतिः।
कोट्यः षष्टिश्च षट् चैव ह्यस्मिन् राजन् मृधे हताः ॥ २१६ ॥

अलक्षितानां वीराणां सहस्राणि चतुर्दश।
दश चान्यानि राजेन्द्र शत षष्टिश्च पञ्च च ॥ २१७ ॥

धृत०- अनाथानां जनानां च सनाथानां च भारत।
कच्चित्तेषां शरीराणि धक्ष्यसे विधिपूर्वकम् ॥ २१८ ॥

न येषामस्ति संस्कर्ता न च येऽत्राहिताग्नयः।
वयं च कस्य कुर्यामो बहुत्वात्तात कर्मणाम् ॥ २१९ ॥

यान् सुपर्णाश्च गृध्राश्च विकर्षन्ति यतस्ततः।
तेषां तु कर्मणा लोका भविष्यन्ति युधिष्ठिर ॥ २२० ॥

वैश०- एवमुक्तो महाराज कुन्तीपुत्रो युधिष्ठिरः।
आदिदेश सुधर्माणं धौम्यं सूतं च सञ्जयम् ॥ २२१ ॥

विदुरं च महाबुद्धिं युयुत्सुं चैव कौरवम्।
इन्द्रसेनमुखांश्चैव भृत्यान् सूतांश्च सर्वशः ॥ २२२ ॥

भवन्तः कारयन्त्वेषां प्रेतकार्याण्यशेषतः।
यथा चानाथवत् किञ्चिच्छरीरं न विनश्यति ॥ २२३ ॥

शासनाद्धर्मराजस्य क्षत्ता सूतश्च सञ्जयः।
सुधर्मा धौम्यसहित इन्द्रसेनादयस्तथा ॥ २२४ ॥

चन्दनाऽगुरुकाष्ठानि तथा कालीयकान्युत।
घृतं तैलं च गन्धांश्च क्षौमाणि वसनानि च ॥ २२५ ॥

समाहृत्य महार्हाणि दारूणां चैव सञ्चयान्।
रथांश्च मृदितांस्तत्र नानाप्रहरणानि च ॥ २२६ ॥

चिताः कृत्वा प्रयत्नेन यथामुख्यान्नराधिपान् ।
दाहयामासुरव्यग्राः शास्त्रदृष्टेन कर्मणा ॥ २२७ ॥
ये चाप्यनाथास्तत्रासन्नानादेशसमागताः ।
तांश्च सर्वान् समानाय्य राशीन् कृत्वा सहस्रशः ॥ २२८ ॥
चित्वा दारुभिरव्यग्रैः प्रभूतैः स्नेहपाचितैः ।
दाहयामास तान् सर्वान् विदुरो राजशासनात् ॥ २२९ ॥
कारयित्वा क्रियास्तेषां कुरुराजो युधिष्ठिरः ।
धृतराष्ट्रं पुरस्कृत्य गङ्गामभिमुखोऽगमत् ॥ २३० ॥
(अ. २७) ते समासाद्य गङ्गां तु शिवां पुण्यजलोचिताम् ।
ह्रदिनीं च प्रसन्नां च महारूपां महाबलाम् ॥ २३१ ॥
भूषणान्युत्तरीयाणि वेष्टनान्यवमुच्य च ।
ततः पितॄणां भ्रातॄणां पौत्राणां स्वजनस्य च ॥ २३२ ॥
पुत्राणामार्यकाणां च पतीनां च कुरुस्त्रियः ।
उदकं चक्रिरे सर्वा रुदत्यो भृशदुःखिता ॥ २३३ ॥
सुहृदां चापि धर्मज्ञाः प्रचक्रुः सलिलक्रियाः ॥ २३४ ॥
ततः कुन्ती महाराज सहसा शोककर्शिता ।
रुदती मन्दया वाचा पुत्रान् वचनमब्रवीत् ॥ २३५ ॥
कर्णस्य सत्यसन्धस्य सङ्ग्रामेष्वपलायिन ।
कुरुध्वमुदकं तस्य भ्रातुरक्लिष्टकर्मणः ॥ २३६ ॥
स हि वः पूर्वजो भ्राता भास्करान्मय्यजायत ।
कुण्डली कवची शूरो दिवाकरसमप्रभः ॥ २३७ ॥
श्रुत्वा तु पाण्डवाः सर्वे मातुर्वचनमप्रियम् ।
कर्णमेवानुशोचन्तो भूयः क्लान्ततराऽभवन् ॥ २३८ ॥
ततः स पुरुषव्याघ्रः कुन्तीपुत्रो युधिष्ठिरः ।
उवाच मातरं वीरो निःश्वसन्निव पन्नगः ॥ २३९ ॥
अहो भवत्या मन्त्रस्य गूहनेन वयं हताः ।
निधनेन हि कर्णस्य पीडितास्तु सबान्धवाः ॥ २४० ॥

अभिमन्योर्विनाशेन द्रौपदेयवधेन च।
पञ्चालानां विनाशेन कुरूणां पतनेन च।
ततः शतगुणं दुःखमिदं मामस्पृशद्भृशम् ॥ २४१ ॥
कर्णमेवानुशोचामि दह्याम्यग्नाविवाहितः ॥ २४२ ॥

नेह स्म किञ्चिदप्राप्यं भवेदपि दिवि स्थितम्।
न चेदं वैशसं घोरं कौरवान्तकरं भवेत् ॥ २४३ ॥

एवं विलप्य बहुलं धर्मराजो युधिष्ठिरः।
व्यरुदच्छनकै राजंश्चकारास्योदकं प्रभुः ॥ २४४ ॥

ततो विनेदुः सहसा स्त्रियस्ताः खलु सर्वशः।
अभितो या स्थितास्तत्र तस्मिन्नुदककर्मणि ॥ २४५ ॥

तत आनाययामास कर्णस्य सपरिच्छदाः।
स्त्रियः कुरुपतिर्धीमान् भ्रातुः प्रेम्णा युधिष्ठिरः ॥ २४६ ॥

स ताभिः सह धर्मात्मा प्रेतकृत्यमनन्तरम्।
चकार विधिवद्धीमान् धर्मराजो युधिष्ठिर ॥ २४७ ॥

पापेनाऽसौ मया श्रेष्ठो भ्राता ज्ञातिर्निपातितः।
अतो मनसि यद्गुह्यं स्त्रीणां तन्न भविष्यति ॥ २४८ ॥

इत्युक्त्वा स तु गङ्गाया उत्ततारा‌ऽकुलेन्द्रियः।
भ्रातृभिः सहितः सर्वैर्गङ्गातीरमुपेयिवान् ॥ २४९ ॥

भीष्मपर्वत श्लोकाः ॥ ५८०१ ॥
आदिपर्वतः श्लोकाः ॥ १०७९६ ॥

॥ इति श्रीमहाभारतसारे स्त्रीपर्व समाप्तम् ॥

# महाभारतसारशब्दार्थसङ्ग्रहः

अंश.–भाग
अंशु.–किरणः
अंशुकम्–वस्त्रम्
अकण्टकम्–निष्कण्टकम्
अक्त –युक्त
अकरुण –निर्दय
अकर्णीयम्–अश्रोतव्यम्
अकर्म–कर्माभावः
अकाम.–निरिच्छ , इच्छारहित
अकुतोभय –विश्रब्ध , निश्चिन्त
अकृतधर्मत्वात्–अवसरानुरोधात्
अक्रिया–निषिद्धक्रिया
अक्रियावान्–प्रतिकाररहित
अक्ष –पाशक
अक्षि–नयनम्
अक्षोभ्यः–जेतुमशक्य
*अक्षौहिणी–सैन्यसङ्ख्याविशेषः
अखिल.–सम्पूर्ण
अगाधम्–अतलस्पर्शम्
अगोपः–रक्षकरहितः

अग्रत –संमुखे, पुरत.
अग्र्य –श्रेष्ठ
अघायु –पापजीवन
अङ्क –ऊरु , चिह्नम्
अङ्गम्–शरीरम्
अङ्गना–ललना, स्त्री
अङ्गानि–अवयवा.
अङ्गारक –भौम , मङ्गल
अङ्गिरा –मुनिविशेष
अचक्ष –अवोच.
अचल –पर्वतः, स्थिर
अचिरेण–अल्पेन कालेन
अचीर्णम्–अनभ्यस्तम्
अचेतन –चेतनारहित , निश्चेष्टः
अचेतस –मूढा
अच्छिद्रम्–सम्पूर्णम्
अच्छिनत्–अलुनात्, चिच्छेद
अज –अजापुत्रः, बस्तः
अज.–अजन्मा, ब्रह्मा
अजस्रम्–नित्यम्, सततम्

---

*१ रथ १ गज. ३ अश्वा. ५ पदातय.–पत्ति , ३ पत्तयः–सेनामुखम् , ३ सेनामुखानि–गुल्मः, ३ गुल्मा –गण., ३ गणा –वाहिनी, ३ वाहिन्यः–पृतना, ३ पृतनाः–चमूः, ३ चम्व.–अनीकिनी, १० अनीकिन्यः–अक्षौहिणी. अक्षौहिणी–२१८७० रथा , २१८७० गजाः, ६५६१० अश्वाः, १,०९,३५० पदातयः.

अजातशत्रु.–धर्मराज.
अजिनम्–चर्म, ( मृगव्याघ्रादीनाम् )
अजिरम्–अङ्गनम्
अजेया –जेतुमशक्या.
अज्ञाय–अज्ञात्वा
अञ्जनम्–कज्जलम्
अञ्जसा–शीघ्रम्, मुख्यतया, वेगेन
अणीयान्–अतिशयेन अणु
अणु –सूक्ष्म , अल्प.
अण्डजः–पक्षी
अति–अतिक्रम्य
अतिक्रम –मर्यादोल्लङ्घनम्
अतिक्रम –अपराधः
अतिग.–उल्लंघित , अतिक्रान्तः
अतिथि –याचक
अतिरिच्यते–अधिक भवति
अतीतम्–गतम्, अतिक्रान्तम्
अतीतपत्–तापयामास
अतुलम्–निरुपमम्
अत्यय.–नाश , अन्त.
अत्रभवान्–मान्य
अथ–पश्चात्, पक्षान्तरम्
अथर्वाङ्गिरसी–अथर्ववेदीया
अदर्शनम्–अदृश्यता, अज्ञानम्
अदूरस्थ.–समीपे वर्तमान
अद्रि –पर्वतः
अद्रिपतीश्वरः–पाण्ड्य.
अद्रिसार.–लोहम्

अधिक्षेपः–निन्दा, तिरस्कार
अधिज्यम्–सज्जम्
अधिप –पालयिता, राजा
अध्यगच्छत्–लब्धवान्
अध्यर्व –अर्घाधिक
अध्यात्मम्–आत्मानमधिकृत्य
अध्युषितम्–प्रात काल
अध्वग.–पान्थ
अध्वर –यज्ञ
अध्व.–पन्था , मार्ग
अनन्तरम्–समीपम्
अनन्तरम्–तत्क्षणम्, पश्चात्
अनय –अनीति.
अनवर –अहीन
अनवर –समानः, सदृश
अनल –अग्नि
अनसूया–निष्कपटा
अनाग.–अपराधाभाव
अनागा.–अपराधरहित.
अनादृत्य–अनादर कृत्वा
अनाधृष्यम्–जेतुमशक्यम्
अनामयम्–निरुपद्रवम्
अनिरिण.–ऊषररहित.
अनिल.–वायु
अनिशम्–सततम्
अनीकम्–सैन्यम्
अनीकिनी–सेना
अनीश.–अजितचित्तः, असमर्थः

अनु–पश्चात्
अनुकम्पा–दया
अनुग –अनुयायी
अनुग्रह –कृपा
अनुजानीहि–अनुज्ञां देहि
अनुतिष्ठन्ति–अनुवर्तन्ते, आचरन्ति
अनुद्विग्न–अचञ्चल
अनुध्याय–चिन्तयित्वा
अनुनय –सान्त्वनम्
अनुनाद –प्रतिध्वनि
अनुबन्ध –परिवारः
अनुबन्ध –सम्बन्ध , परिणाम
अनुमान्य–सम्मति गृहीत्वा
अनुलोभ्यते–अनुकूल क्रियते
अनुवर्तयति–अनुतिष्ठति
अनुविधीयते–पश्चात्प्रवर्तते
अनुशाधि–आज्ञापय
अनुष्ठितम्–कृतम्
अनृजु –वक्र , कपटी
अनेत्र –नेत्रहीन , अन्ध
अनेय –सन्मार्ग नेतुमशक्य
अन्त –नाशः, समाप्ति
अन्त–निश्चय , सत्यस्वरूपम्
अन्त करणचतुष्कम्–मन , बुद्धि , चित्तम् , अहङ्कारः
अन्तक–नाशक , यम
अन्तरधीयत–गुप्ता अभूत्
अन्तरम्–अवकाश
अन्तरिक्षम्–नभ , आकाशम्
अन्तिकम्–समीपम्
अन्तेवासी–शिष्यः
अन्धकः–अन्धकासुर
अन्धका –यादवभेदा
अन्य –इतर
अन्यथा–अन्यप्रकारेण
अन्योन्यम्–परस्परम्
अन्वक्–अनुग , पश्चाद्गामी
अन्वय –वंश , कुलम् , सम्बन्ध
अन्वासत–उपासितवन्त
अन्वित –युक्त
अन्वेषणम्–गवेषणा
अपकृतम्–अपकार , अपराधः
अपकृतम्–दुराचरणम्
अपचिति –प्रतीकार , नाश
अपचिति –निष्कृति , पूजा
अपण्डित –मूढ
अपत्रपा–लज्जा
अपदान्तरम्–तत्कालम् , सद्य
अपध्यानम्–शापः
अपनुद्यात्–नाशयेत्
अपयानम्–पलायनम् , निर्गमनम्
अपरम्–अर्वाक्कालिकम्
अपर–अन्य
अपराजित –विजयी
अपरा दिक्–पश्चिमदिशा
अपवर्जित –दत्त , त्यक्तः

अपसर्पति—दूरं गच्छति
अपहस्त —वामबाहुविभ्रान्तच्छेद.
अपहाय—त्यक्त्वा
अपाण्डवाय—पाण्डवानां अभावाय
अपानुदत्—दूरीकृतवान्
अपाय·—नाश·, वियोगः
अपायात्—पलायित
अपायासीत्—दूरं गतवान्
अपावृतम्—उद्घाटितम्
अपासेधत्—अपसारितवान्
अपेक्षी—इच्छुक.
अपोवाह—दूरं निनाय
अपोहनम्—दूरीकरणम्, नाश
अप्यय —नाश, लय
अप्रमत्त —सावधान
अप्रीयत—सतुष्टो बभूव
अबद्धम्—अनर्थकम्
अबुद्धिजम्—अज्ञानजम्
अभाव·—नाश, असत्त्वम्, मरणम्
अभावयत —ध्यानमकुर्वत.
अभि—सम्मुखम्
अभि—समन्तात्
अभिकाङ्क्षितम्—इच्छितम्
अभिक्रम·—आरम्भः
अभिगम·—आगमनम्
अभिजनः—कुलम्
अभिजनवान्—कुलीनः
अभिज्ञ·—ज्ञाता

अभिज्ञानम्—चिह्नम्
अभित —सम्मुखे
अभिधत्स्व—ब्रूहि
अभिपरीत —व्याप्त, उक्तः
अभिप्रेक्ष्य—आलोच्य
अभिप्रेतम्—इच्छितम्
अभिभूत - पराभूत.
अभिमुख·—सम्मुख·
अभिवादनम्—नमस्कार
अभिव्यरोचत—अशोभत
अभिसन्धि —आशयः, मतम्
अभिसारा —देशविशेष. तद्राजा च
अभीषु —प्रग्रह, अश्वादिरज्जु
अभीषुग्रह —सारथि.
अभ्यद्रवत्—अधावत्
अभ्यवस्कन्दनम्—कपटेन आक्रमणम्
अभ्यस्त —आवर्तित.
अभ्यहन्यन्त—अभिहताः, वादिता.
अभ्याशे—समीपे
अभ्याहनत्—आस्फालितवान्
अभ्युपगमः—समीपगमनम्, स्वीकारः
अभ्युत्थानम्—वृद्धि·
अभ्रम्—मेघः, आकाशः
अमर —देव.
अमर्त्य·—मरणरहित·, देव·
अमात्य —मन्त्री
अमितः—अपरिमितः
अमित्र —शत्रु.

अमुत्र–तत्र, परलोके
अमृतम्–मोक्ष॰, पीयूषम्
अमृतत्वम्–मोक्ष॰, मुक्ति॰
अमृष्यमाण –असहमान
अमेय –महान्, अगणनीयः
अम्बिका–धृतराष्ट्रमाता
अम्बु–जलम्
अम्बुद.–मेघ
अम्भ –जलम्
अम्भोद॰–मेघ
अय –शस्त्रम्, लोहम्
अयनम्–आश्रय.
अयुतम्–दश सहस्राणि १०,०००
अयुतानामयुतम्–दशकोट्यः
१०,००,००,०००
अयुद्धति–युद्ध अकुर्वति
अयोनिजा–स्वत.सम्भवा
अयोनिधनम्–शस्त्रेण मृत्यु
अरि –चक्रम्, शत्रु॰
अरुण.–रक्तवर्ण॰, सूर्यसारथिः, सूर्य॰
अरोषण॰–क्रोधरहित
अर्क.–भानुमान्, सूर्यः
अर्चिः–ज्वाला
अर्चित.–पूजित
अर्जितम्–सम्पादितम्
अर्णव –सागर॰
अर्थ –प्रयोजनम्, धनम्,
अर्थविद्या–अर्थशास्त्रम्
अर्थार्थी–धनादियाचकः
अर्थी–इच्छुः, याचकः
अर्धचन्द्रः–अर्धचन्द्राकार. बाणः
अर्बुदम्–दशकोट्यः
१०,००,००,०००
अर्भक.–बाल.
अर्ह –पूजयितु योग्य॰
अलम्–पर्याप्तम्, समर्थः
अलङ्कृतम्–रजतबिन्दुचित्रितम्,
शोभितम्
अवकीर्ण –त्यक्त
अवगम –ज्ञानम्, अनुभवः
अवगाह्य–प्रविश्य
अवगुण्ठित –वेष्टित
अवज्ञातम्–अपमानसहितम्
अवधारितम्–चित्ते स्थिरीकृतम्
अवनत –नम्र.
अवनि –पृथिवी
अवभृथ.–यज्ञसमाप्तिस्नानम्
अवमर्द –नाश , वध॰, हत्या
अवमानी–अपमानकर्ता
अवमुच्य–उत्तार्य
अवर –न्यून॰, कनिष्ठः
अवरज.–कनिष्ठो भ्राता
अवरुह्य–अवतीर्य
अवरोपय–अवतारय
अवलेप.–गर्व
अवश॰–पराधीनः

अवसादनम्–नाश
अवसानम्–मृत्यु , नाश॰, वसतिः
अवस्कन्द्य–कपटेन आक्रम्य
अवस्कन्द्य–प्रस्कन्द्य
अवस्थानम्–अचाञ्चल्यम्
अवहार –युद्धविरामः
अवहास –अपमान , उपहासः
अवहित –सावधान
अवाकिरत्–आच्छादितवान्
अवाङ्मुखः–अधोमुखः
अवाच्य.–वक्तुमयोग्यः
अवानम्–शुष्कम्
अवासीदत्–अवसन्न॰, नष्टः
अवाप्स्यसि–लप्स्यसे
अवि –मेष
अविकृतः–स्वाभाविकः
अविन्दत्–लब्धवान्
अविषह्यः–जेतुमशक्यः
अव्यभिचारिणी–एकनिष्ठा
अव्यय.–अविनाशी, शाश्वतः
अशनम्–भक्षणम् , क्षुधा
अशनि –वज्रम्
अशरीरिणी–आकाशवाणी
अशाश्वतम्–विनाशि
अशिवम्–दु खोत्पादकम्
अशीति –८०
अशेषेण–सम्पूर्णतया
अशीतिपञ्चकः–चतु.शताब्द (४००)
अश्मा–पाषाण
अश्वत्थ –पिप्पल , ससारवृक्ष॰
अश्विनौ–देववैद्यौ, अश्विनीकुमारौ
अष्ट–८
अष्टगवम्–अष्टवृषभवाह्यम्
अष्टवा–अष्टप्रकारा
असकृत्–बहुवारम्
असक्त –अप्रतिहत
असङ्गृह्य–अनुपसहृत्य
असत्–अविद्यमानम्
असत्–असत्यम् , असाधु
असत्–दुष्टम्
असत्कृतम्–सत्काररहितम्
असि –खड्गम्
असित –कृष्ण
असिहस्त –दक्षिणबाहुविभ्रान्तच्छेदः
असुकरम्–सुखेन कर्तुमशक्यम्
असुर –देवशत्रु , दैत्य
असूया–गुणेष्वपि दोषारोप.
असृष्टम्–न दत्तम्
अस्त.–अस्ताचल , क्षिप्त.
अहि –सर्प
अहित –शत्रु.
अहैतुकम्–उपपत्तिशून्यम्
अह्नाय–झटिति
आकर्णम्–कर्णपर्यन्तम्
आक्रन्द –सङ्ग्राम
आक्षिपत्–गृहीतवान्

आक्षिप्य–निवार्य
आक्षेप –निन्दा, पक्षपातः
आक्षेपणम्–निन्दा
आखु –मूषिकः
आख्यातवान्–कथितवान्
आख्याहि–कथय
आग –अपराध , पापम्
आगम –प्राप्ति , उत्पत्ति
आचार्य.–गुरु
आचार्यकम्–गुरो. सम्माननम्
आचार्यतनयः–अश्वत्थामा
आचीर्णम्–अनुष्ठितम्
आजमीढ –अजमीढकुलोत्पन्नः
आजि –युद्धम्, युद्धभूमि
आज्यम्–घृतम्
आढ्य –धनवान्, धनी
आततायी–शस्त्रपाणि.
आततायिन –
अग्निदो गरदश्चैव शस्त्रपाणिर्धनापह ।
क्षेत्रहर्ता दारहर्ता षडेते ह्याततायिन.॥
आत्तम्–गृहीतम्
आत्मज.–पुत्र.
आत्मजा–कन्या
आत्मनिःश्रेयसम्–स्वहितसाधनम्
आत्मा–स्वरूपम्, जीव॰, ब्रह्म, मनः
आदर्शः–दर्पण
आदित्य –अदितिपुत्र , सूर्यः
आधत्स्व–स्थापय

आधिः–मानसं दु खम्
आधिरथि.–अधिरथपुत्र (कर्णः)
आधूतम्–कम्पितम्
आनक –वाद्यविशेषः
आननम्–मुखम्
आनर्च्छत्–गतः, पीडयामास
आनृशस्यम्–दया, आश्रितरक्षणम्
आपः–जलम्
आपगा–नदी
आपगेयः–आपगापुत्र , भीष्मः
आपतत्–आगतः
आपद्–विपत्, आपत्ति
आपन्न.–प्राप्तः
आभरणम्–भूषणम्, पोषणम्
आभा–शोभा, सादृश्यम्
आमय॰–रोग , पराभवहेतु
आमिषम्–मांसम्
आम्बिकेय –आम्बिकापुत्र
(धृतराष्ट्रः)
आयतः–दीर्घ.
आयतनम्–गृहम्
आयतप्रायम्–प्राशु बहुलम्
आयस॰–लोहमय.
आयस्तः–पीडितः, सज्ज.
आयु –जीवनमर्यादा, आयुष्यम्
आयुधम्–शस्त्रम्
आयोधनम्–युद्धम्
आयोधनम्–युद्धभूमि

आरात्–समीपम्
आराम –उद्यानम्
आराव –शब्दः
आरुरण –भग्नः
आरुरुक्षुः–आरोढुमिच्छु
आर्जवम्–ऋजुता, सरलता
आर्जुनिः–अर्जुनपुत्र. ( अभिमन्यु )
आर्त –दु खित
आर्ति –दु खम्
आर्दयत्–अपीडयत्
आर्षभ.–वृषभस्य अयम्
आर्षभ –ऋषभ· स्वर
आर्ष्यश्रृङ्गि –अलम्बुषः राक्षस.
आलय.–गृहम् , स्थानम्
आवरणम्–आच्छादनम्
आवर्जितः–नम्रः, दत्त
आवर्त –अम्भसां भ्रम.
आवर्तयते–उपसहरति
आवश्यकम्–नित्यकृत्यम्
आविग्नः–भीतः
आविद्ध्य–भ्रामयित्वा
आविष्ट –व्याप्त
आशयः–स्थानम्, अभिप्राय·
आशससि–इच्छसि
आशी–भक्षणशील·
आशी–सर्पदंष्ट्रा
आशी –आशीर्वादः
आशीविष·–सर्पः
आशु–सत्वरम्
आशुगः–शर , शीघ्रगामी
आश्विनौ–अश्विनीकुमारौ
आस–दीपयाञ्चकार
आसङ्क्तुम्–आसञ्जयितुम्
आससाद–प्राप
आसादयाञ्चक्रु –समीप आगताः
आस्ते–तिष्ठति
आस्थाय–आश्रित्य
आस्थित –गत , आश्रित·
आस्यम्–मुखम्
आहत·–ताडित
आहत्य–सन्ताड्य
आहव –युद्धम्
आहूय–आह्वान कृत्वा
आहेय·–सर्पमय.
आहो–प्रश्नार्थकम्
आहोस्वित्–अथवा
इङ्गितम्–अभिप्राय
इतरेतरम्–अन्योन्यम्
इन –श्रेष्ठ , राजा
इन्द्र –मुख्य , देवानामधिप
इन्द्रावरज –विष्णु , श्रीकृष्णः
इन्द्रियार्था –विषया
इयेष–इच्छा कृतवान्
इषु –बाण
इषुधि –तूणीरम्
इष्वसनम्–धनु

इष्वास –धनु
इह–अत्र, अस्मिन् लोके
ईक्षणम्–नेत्रम् , दर्शनम्
ईप्सा–इच्छा
ईरयन्–कथयन्
ईर्षु –मत्सरी
ईशान –शङ्करः
ईश्वरः–पति , राजा
ईषत्–किञ्चित्
ईषा–रथस्य धू
ईषिवान्–मनसि कृतवान्
ईहा–इच्छा, यत्न
उग्र –भयङ्कर
उच्चावचम्–अनेकविधम्
उच्छ्रित –उपरिगत , उच्च
उत्कट.–श्रेष्ठ , मत्त
उत्कृत्य–उत्पाट्य
उत्क्रामति–बहिर्गच्छति,ऊर्ध्वं गच्छति
उत्तमाङ्गम्–मस्तकम्
उत्तरेण–उत्तरत·
उत्थानम्–उद्योग , प्रयत्न
उत्थानम्–जयः
उत्पथ –कुमार्ग
उत्सङ्ग –अङ्क.
उत्सन्न –नष्ट
उत्सहेत–समर्थो भवेत्
उत्साद –नाश
उत्सिक्त –वृद्धिं गत गर्वयुक्त
उत्सीदेयु –नष्टाः भवेयु
उत्सृजेयम्–वदेयम्
उदकम्–जलम्
उदपानम्–जलाशय , कूप
उदय –उत्कर्ष , उर्ध्वगमनम्
उदयनम्–उदय
उदार –महान्, उत्कृष्ट , दाता
उदीच्या.–उदीचीना , उत्तरदिग्भवाः
उदीरय–पठ, वद
उदीर्ण –सज्जः
उद्देश –सङ्क्षेपः, स्थानम्
उद्धृत –निष्कासित
उद्बबर्ह–कोशान्निष्कासितवान्
उद्यत –सज्ज , प्रवृत्त ,
उद्यत –ऊर्ध्वीकृत , निष्ठुर
उद्यन्तुम्–उत्थापयितुम्
उद्यम –उद्योग
उद्यम्य–उत्थाप्य
उद्योत –प्रकाश
उद्वह –श्रेष्ठ नेता
उद्विग्न –दु खयुक्त
उद्विजते–त्रस्यति, बिभेति
उद्वृत्त –क्षुब्ध
उद्वृत्त्य–विस्फार्य, परिवर्त्य
उन्मथ्य–छित्वा, नाशयित्वा
उन्मीलनम्–उद्घाटनम्
उप–समीपम्
उपक्रोश –निन्दा

उपदेश –विद्या, अध्यापनम्
उपधा–कपटम्
उपनायी–आनयन्
उपपातकम्–गौणपातकम्
उपपादितम्–लब्धम्
उपपृच्छामहे–आपृच्छामहे
उपमा–सादृश्यम्
उपप्लुत –राहुग्रस्त.
उपलक्षये–जानामि
उपसृष्टः–ग्रस्त
उपसृष्ट –व्याप्त , पीडित
उपस्थम्–जननेन्द्रियम्, शिस्नम्
उपस्थ –पृष्ठभाग , मध्यभाग
उपस्थ –सारथे उपवेशनस्थानम्
उपहित –भेदित , उपजप्त
उपहृतम्–समर्पितम्
उपांशु–रह , छन्नम्, गुप्तम्
उपाकृत्य–अधीत्य
उपावर्त्य–लुण्ठयित्वा
उपाशङ्कितुम्–परिशङ्कितुम्
उपेयु.–समीपमागता
उप्तम्–निक्षिप्तम्
उर –वक्ष
उरग.–पन्नग
उर्वी–पृथ्वी
उलूकः–दिवाभीत , धूक
उल्बम्–गर्भवेष्टनम्
उल्बणः–भयङ्करः

उवाच–अब्रवीत्
ऊनम्–न्यूनम्, हीनम्
ऊर्ज –सामर्थ्यम्, उत्साह
ऊर्जित.–महान्, श्रेष्ठ , समर्थः
ऋच्छति–प्राप्नोति
ऋजु –सरल
ऋतम्–सत्यम्
ऋते–विना
ऋषभ –वृषभ , श्रेष्ठ
एकवासा –एकवस्त्रा
एकाकी–असहाय
एकादश–११
एकादशेन्द्रियाणि–ज्ञानकर्मेन्द्रियाणि मनश्च
एकायना –एकमार्गा
एध –इन्धनम्
एनस्–पापम्
एष्यसि–गमिष्यसि
ऐकान्तिकम्–पूर्णम्, निश्चितन्
ऐन्द्रम्–इन्द्रदेवताकम्
ऐरावण –ऐरावत
ओघ –प्रवाह , समूहः
ओज.–तेज , पराक्रम
ओषधि –वनस्पति
औदरिक –बहुभक्षी
ककुद्–श्रेष्ठ
कक्षम्–तृणम् ( शुष्कम् )
कण्टक –शत्रु.

कतरत्–द्वयोर्मध्ये किमेकम्
कत्थनम्–श्लाघा
कत्थितुम्–जल्पितुम्
कथञ्चन–केनापि प्रकारेण
कदनम्–युद्धम्, नाश
कन्दरा–गुहा
कन्दर्प –मदन.
कपि –वानर
कपिध्वज –अर्जुन.
कबन्धः–मस्तकरहित शरीरम्
कर –शुण्डादण्ड, हस्त
करजः–नख (खम्)
करटा–गण्डस्थलम्
करसम्मित –मुष्टिप्रमाण
करालम्–भयङ्करम्
करी–गज
करुण –दयार्द्र
कर्णिकार –वृक्षविशेष
कर्दम –पङ्क
कर्मणि वर्ते–कर्म करोमि
कर्मार –लोहकार
कर्शयन्त –कृश कुर्वन्त
कर्हिचित्–कदापि
कलिलम्–कलुषता, मालिन्यम्
कलिलम्–दूषितम्, व्याप्तम्
कल्प.–समर्थ, दृढ, कुशली
कल्पते-योग्य भवति, समर्थः भवति
कल्पित.–रचित.

कल्मषम्–पापम्
कल्यम्–हितम्
कल्यवादी–हितवादी
कवीन्द्र –कविश्रेष्ठ
कशा–अश्वादिताडनी रज्जुः
कश्मलम्–मूर्च्छा
कश्मलम्-विकलता, मोह
कस्मात्–किंकारणात्
काङ्क्षति–इच्छति
काङ्क्षसे–इच्छसि
काञ्चनम्–सुवर्णम्
कान्ता–ललना, स्त्री
कान्तारम्–अरण्यम्
कान्ति –शोभा, सौन्दर्यम्, लक्ष्मीः
कान्दिशीक –भयेन पलायित·
कापाली–शिवपत्नी
कापुरुष.–भीत, नीचमनुष्य
कामम्–यथेच्छम्
काम –इच्छा, मदन.
कामकार –स्वैरवर्तनम्
कामगम.–इच्छागामी
काम्यम्–फलेच्छया कृतम्
काम्या–आकाङ्क्षा, इच्छा
काय.–शरीरम्
कार्तवीर्य –सहस्रार्जुन
कार्त्स्न्येन–सम्पूर्णतया
कार्पण्यम्–मनोदौर्बल्यम्
कार्मुकम्–धनु

कार्यम्–कर्तव्यम्
कार्यतरम्–आवश्यकतर कृत्यम्
कार्ष्णायसम्–लोहमयम्
कार्ष्णि –अभिमन्यु ( अर्जुनपुत्र. )
कालात्यय –विलम्बः
काली–कालशक्ति
कालीयकम्–कृष्णचन्दनम्
काशी–शोभायुक्तः
किंशुक –पलाशः
किरन्–विक्षिपन्
किरीटमाली–अर्जुन
किरीटी–अर्जुन•
किल–लोकवार्ता
किल्बिषम्–अपराधः
कुकृतम्–दुराचरणम्
कुञ्जर –गज
कुड्मल –अग्रभाग
कुण्डम्–कमण्डलु., महोदरपात्रम्
कुत्सितम्–निन्दितम्
कुपथ –कुमार्ग
कुमारी–जरादिहीना
कुमारी–अविप्लुतब्रह्मचारिणी
कुमुदम्–कमलम्
कुमुदनाथ –चन्द्र
कुम्भ –गण्डस्थलम्
कुम्भसम्भव –द्रोण
कुररी–पक्षिविशेषः
कुशली–क्षेमवान्
कूटम्–कपटम्
कूटस्थ –निर्विकार
कूबर.–युगन्धर
कूर्म.–कच्छप
कृच्छ्रम्–दु.खम्, सङ्कटम्
कृच्छ्रगत –सङ्कटप्राप्त
कृतकृत्य –कृतकर्मा, निश्चिन्त•
कृतश्रम –कृताभ्यास.
कृतात्मा–निपुण., सयमी
कृती–अभ्यासशील
कृती–कार्यकर्ता
कृते–अर्थे, अर्थम्
कृत्या–अभिचारदेवता
कृत्स्नम्–सर्वम्
कृत्स्नविद्–आत्मज्ञ
कृन्तति–छिनत्ति
कृपण.–दीन
कृशानु –अग्नि
कृष्ण –अर्जुन
कृष्ण –व्यास
कृष्णद्वैपायन –व्यास
कृष्णा–द्रौपदी
कृष्णा–वासुदेवस्वरूपा
कृष्णौ–वासुदेवधनञ्जयौ
केतनम्–ध्वज
केतु –ध्वज
केशपक्ष –केशसमूहः
केशव.–श्रीकृष्णः, विष्णु.

